SAMPŪRṆĀNANDA-GRANTHAMĀLĀ

[Vol. 13]

# MĪMĀṀSĀNAYAMAÑJARĪ

WITH

PARIŚIṢṬA

AUTHOR & EDITOR

Pt. PAṬṬĀBHIRĀMA ŚĀSTRĪ 'PADMABHŪṢANA'



VARANASI

1984

**Research Publication Supervisor—**
**Director, Research Institute,**
**Sampurnanand Sanskrit University**
**Varanasi.**

**Published by—**
**Dr. Harish Chandra Mani Tripathi**
**Publication Officer,**
**Sampurnanand Sanskrit University**
**Varanasi–221002.**

**Available at—**
**Sales Department,**
**Sampurnanand Sanskrit University,**
**Varanasi–221002.**

**First Edition, 1000 Copies**
**Price Rs. 60·00**

**Printed by—**
**Anand Printing Press,**
**C. 27/170 A, Jagatganj**
**VARANASI.**

सम्पूर्णानन्द-ग्रन्थमाला

[ १३ ]

# मीमांसानयमञ्जरी

## परिशिष्टसहिता

प्रणेता-सम्पादकश्च

पण्डितश्रीपट्टाभिरामशास्त्री 'पद्मभूषणम्'




वाराणस्याम्

२०४१ तमे वैक्रमाब्दे    १९०६ तमे शकाब्दे    १९८४ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

प्राप्तिस्थानम्—
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

प्रथमं संस्करणम् १००० प्रतिरूपाणि
मूल्यम्—६०·०० रूप्यकाणि

मुद्रकः —
आनन्द प्रिंटिंग प्रेस
सी० २७/१७० ए, जगतगंज,
वाराणसी–२२१ ००२.

॥ श्रीः ॥

# प्राक्कथनम्

अथेदानीं पूर्वतन्त्रे प्रविविक्षूणां छात्राणामधिकरणप्रस्थानपरिचयाय 'मीमांसान्यमञ्जरी'त्यभिधं ग्रन्थं विदुषां करकमलेषु समर्पयन् मुदमावहामि। ग्रन्थस्यास्य प्रणयने मुख्यमुद्देश्यम् यल्लघुनैव प्रयासेन सार्धद्विशतसङ्ख्याकेषु न्यायेषु ज्ञानमवाप्य न्यायनिबन्धनात्मके महासागरे विनेयाः प्रवेष्टुमर्हा भवन्त्विति। चिरन्तना मण्डनमिश्र-माधवाचार्य-कमलाकरभट्टप्रभृतयो मनीषिणो लघुग्रन्थान् प्राणैषुः। सर्वेऽपि ते पद्यबद्धा विवरणसापेक्षा इति तदनन्तरवर्तिनो वृत्तिग्रन्थान् निबबन्धुः। तेषामध्ययनेन मीमांसासागरतरणे समर्था अभवन् तदानीन्तना विनेयाः। इदानीन्तनानां तत्रापि क्लेशमनुभवतां प्रवृत्तिमवलोक्य ततोऽपि सरलया भाषया ग्रंथो निर्मातव्य इति मनीषयाऽस्मिन् कार्येऽहं प्रावर्तिषि। मीमांसामध्येतुं प्रवृत्तश्छात्रः मीमांसापरिभाषामधीत्यापदेवविरचितं न्यायप्रकाशमध्येतुमारभते। तत्रैव तेन क्लेशोऽनुभूयते, यतो हि न्यायप्रकाशे ग्रन्थकृता प्रायः त्रिशतं न्यायाः प्रदर्शिताः। तेऽप्यतिसंक्षेपेण। अध्यापकेन विशदीकृत्य न्यायानां स्वरूपे प्रतिपाद्यमानेऽपि भूयिष्ठश्रौतपदार्थानां गहनतया ग्रहणे क्लेशमनुभवन्तो मीमांसाध्ययनं सामि परित्यजन्ति। यो न्यायप्रकाशं सम्यगधीत्य विषयानवगच्छति तस्योद्ग्रन्थाध्ययने रुचिरुत्पद्येतैव। सर्वेषु शास्त्रेषु विषयप्रबोधः क्लिष्ट एव। किन्तु शास्त्राध्ययनाय स एवाधिकारी परिगण्यते यश्च गृहीतपदपदार्थसङ्गतिको व्युत्पन्नः व्युत्पत्तिसम्पादनाय तदनुकूलः कश्चन पाठ्यक्रमो मनोरमो निर्णेतव्यः।

मम तु प्रतिभाति—चत्वारि सोपानानि परिकल्प्य पाठ्यक्रमो निर्धारयितव्यः। प्रथमसोपानमारूढस्य ४ वर्षाणि, द्वितीयसोपानमारूढस्य वर्षद्वयम्, तृतीयमारूढस्य ४ वर्षाणि, अन्तिममारूढस्य वर्षद्वयम्। तत्र प्रथमसोपानमारूढश्छात्रः चतुर्षु वर्षेषु लघुकाव्यानि लघुव्याकरणञ्चाधीत्य संस्कृतभाषायां व्युत्पत्तिमवाप्य द्वितीयसोपानमारोढुमागतश्छात्रो वाचा परीक्षितः द्वितीयं सोपानमारुहेत्। तत्रारूढः व्याकरणे काव्यनाटकालङ्कारेषु न्याये मीमांसायां वेदान्ते साङ्ख्ययोगे साधारणव्युत्पत्तिप्रदर्शनपत्रे च निक्षिप्तान् लघुग्रन्थानधीत्य परीक्षां दद्यात्। तत्र व्युत्पत्तिप्रदर्शनपत्रे उत्तीर्णतामनिवार्यां विधाया-

वशिष्टपत्रेषु यस्मिन्नेवोत्तीर्णस्तदध्ययनायार्हः। अर्थात् साधारणपत्रे उत्तरणाङ्कानवाप्य व्याकरणे साहित्ये न्यायमीमांसादौ नियतपत्रेषु एकस्मिन् द्वयोः, त्रिषु वोत्तीर्णः स्वाभिलषितं विषयमादाय तृतीयं सोपानमाराढुमर्हो भवति। यदि साधारणपत्रेऽनुत्तीर्णस्तर्हि विषयान्तरपत्रेषूत्तीर्णोऽपि सोऽनुत्तीर्ण एवेति परिगणनीयः। तृतीयसोपानमारुह्य लौकिकविषयैस्सह स्वविषये चतुर्भिर्वर्षैः वैदुष्यमवाप्नुयात्। एवमत्र समुत्तीर्णश्चतुर्थसोपानमारुह्य स्वविषये एव प्रौढग्रन्थान् वर्षद्वयेनाधीत्य चतुरस्रं पाण्डित्यमवाप्नुयात्। आहत्य द्वादशवर्षाण्यध्यनकालस्सिध्यति, द्वितीयसोपानमारूढः परीक्षायां कोऽप्यनुत्तीर्णो न परिगण्येत यदि व्युत्पत्तिपत्रे समुत्तीर्णस्स्यात्।

एवं निरूपयतो मे नायमभिप्रायः—यदयमेव पाठ्यक्रमो भवत्विति। अहञ्च बाञ्छामि-यच्चतुर्दशसु विद्यास्थानेषु एकस्मिन् द्वयोर्वा कृतपरिश्रमाः पण्डिता भारते उपलभ्यन्तामिति। तत्तच्छास्त्रे दर्शने वा चिरन्तनैः प्रणीतेषु ग्रन्थेषु विलोक्यमानेषु स्पष्टं प्रतीयते—यत्प्रणेतॄणां भाषातः प्रान्ततः सम्प्रदायतश्च महति भेदे सत्यपि तस्य तस्य ग्रन्थस्य व्याख्यानोपव्याख्याने च समानैव प्रवृत्तिरासीदिति। तत्र मीमांसासम्बन्धिनां ग्रन्थानां प्रणेतारः विभिन्नभाषाभाषिणस्सर्वप्रान्तीया उपलभ्यन्ते। इदमेवैकं प्रबलं प्रमाणमस्माकं यत्सर्वत्र मीमांसायाः प्रचार आसीदिति। तत्रेदं कारणम्—यद्भारतीयसंस्कृतिपरिरक्षणाय प्रवृत्तेषु धर्मग्रन्थेषु संस्कृतिनिर्णयाय मीमांसान्यायास्साहाय्यमाचरन्तीति। प्रान्तभेदेन स्मृतिसूत्रनिबन्धग्रन्था विभिन्नाः, तानेवावलम्ब्याचारणमपि भिन्नमवलोकयामः, एवं भेदेसत्यपि सर्वप्रान्तीयानेकीकृत्य मीमांसा नयति। शास्त्रान्तरेषु ग्रन्थकृतस्स्वीयेषु ग्रन्थेषु कतिपयान् मीमांसानयाननुल्लिख्य तृप्तिं न लभन्ते। विषयचर्चावसरे समापतितं विवादं प्रशमयितुं मीमांसानया उपयुज्यन्ते। अथवा विचारविषयपरिपुष्टये नया इमे साहाय्यमाचरन्तीति सर्वेऽपि दार्शनिकाः शास्त्रकाराश्च मीमांसानयानाश्रयन्ते। किं बहुना? अलङ्कारप्रवर्तका लोचनकाव्यप्रकाशादिग्रन्थकृतोऽपि तत्र तत्र नयानिमान् सादरं निर्दिशन्ति स्वीयेषु गन्थेषु। एतेन मीमांसानयेषु कियानादरस्सर्वेषामित्यभ्यूहितुं शक्यते। नयानां सर्वेषां मूलं वेदवाक्यानि। वेदवाक्यार्थनिर्णयव्याजेन नयाः प्रवर्तिता जैमिनिना। वेदवाक्यार्थनिर्णयैकप्रयोजनाय नेमे नयाः प्रवर्तिताः, किन्तु लोकेऽपि व्यवहाराय नयानामुपयोग इति जैमिनिरभिप्रैति। अत एव स्वसूत्रेषु तत्र तत्र 'लोकवत्' 'लोके' इत्येवं लोकपदं निर्दिश्य सूत्रयति। लोकाविरोधेन वेदः, वेदाविरोधेन च लोको नेतव्य इति जैमिनेराशयः। लोके चास्तीति नास्तीति च व्यवहारः प्रचलति। यो हि बाह्येन्द्रियगोचरो विषयो घटः पटो वा स यदि स्यादुपलभ्येत, नोपलभ्यते। अत एव नास्तीति तत्र व्यवहारः। यश्च पदार्थ इन्द्रियगोचरयोग्यतां कदापि न बिभर्ति स नास्तीति व्यवहार-

विषयः कथं भवतु ? तस्यास्तित्वव्यवहार एव कथमिति पर्यनुयोगे शब्दं प्रमाणं पुरस्कुर्वन्ति दार्शनिकाः। 'येन येन प्रमीयते तत्तत्प्रमाणम्' इति शास्त्रविदोऽभ्युपयन्ति। शब्दैकसमधिगम्यस्य पदार्थस्य नास्तित्वस्थापनं नेन्द्रियेण भवितुमर्हति, किन्तु शब्देनैव व्यवस्थापनीयम्। यादृशेन शब्देनास्तित्वं प्रतिपाद्यते, तादृश एव शब्दो नास्तित्वप्रतिपादक इत्येष्टव्यम्, न तत्र स्वीयाश्शब्दा नास्तित्वं प्रतिपादयितुमीशते। चक्षुषा घटादेरस्तित्वं चेद् गृह्यते तन्नास्तित्वमपि तेनैव गृह्यत इति शास्त्रविदो वदन्ति। तेनैव न्यायेन शब्देन चेत् कस्यचन पदार्थस्यास्तित्वं गृह्यते तादृशेन तन्नास्तित्वं ग्राह्यम्। जात्यन्धाः परेषां शब्देन घटादेरस्तित्वं गृह्णन्ति तेषामेव शब्देन तन्नास्तित्वमपि ते गृह्णन्ति। चक्षुष्मन्तो वयं बाह्येन्द्रियस्याविषयं चेद्गृह्णीमः केनापि प्रमाणेन, तेनैव तन्नास्तित्वमपि प्रतिपादनीयम्। तदैव तन्नास्तित्वग्रहो भवेत्। अयमेव न्याय्यः पन्थाः। बाह्येन्द्रियाविषयं कञ्चन पदार्थं कश्चन प्रामाणिकः शब्दोऽस्तीति वदति, तस्य बाह्येन्द्रियाविषयत्वमात्रेण नास्तित्वं नाभ्युपगन्तुं शक्यते। शशशृङ्गो नास्त्येव, तस्य बाह्येन्द्रियाविषयत्वहेतुना नास्तित्वसाधने कः पुरुषार्थः ? शत्रुरनुत्पन्नः तस्य खड्गेन मारणं यथा तथा स्यात्। यश्शब्दोऽस्तीति वदति स एव नास्तीत्यपि वदति। अतो नास्तीति ब्रूम इति चेत्, तर्हि अस्तीत्यङ्गीकृत्य नास्तीति वक्तव्यं स्यात्। विवादोऽयं नाद्यतनः, अतिचिरन्तनादेव कालात् 'अस्तीत्येके नायमस्तीति चैके' इति वेदादेव प्रवृत्तः। विवादोऽयं न पर्युदासन्यायेन प्रशमयितुं शक्य इति भट्टपादा वदन्ति—

> इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
> दृढत्वमेतेद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन॥ इति।

अत्र 'युक्त्या' इति पदं ध्यानमर्हति। युक्तिश्च तर्कः। एतावन्निरूपण एव मीमांसकानामधिकारः। अत्राधिकारस्तु वेदान्तिनाम्। पूर्वमुत्तरञ्चेति विषयं विभज्य पूर्वं विषयं जैमिनिः उत्तरञ्च विषयं बादरिर्निरूपणाय मिथस्संल्लप्य प्रवृत्तौ। अनधिकृतचेष्टा न कर्तव्येति खलु नीतिः। पूर्वजैर्यो मार्गः प्रशस्त इति प्रवर्तितः तत्सम्प्रदायानुवर्तिना तेनैव मार्गेण गन्तव्यमिति भट्टपादानामभिनिवेशः। श्रेयोमार्गः प्रेयोमार्गश्चेति मार्गद्वयम्। प्रेयोऽर्थिभिः प्रेयोमार्गेण श्रेयोऽर्थिभिश्च श्रेयोमार्गेण गन्तव्यमिति वेदो मार्गद्वयं प्रदर्शयति। वेदस्तु तुल्यो द्वयोरपि। एवं प्रकटयन्ति स्वीयमाशयं भट्टपादाः। अलमधिकेन प्रसङ्गेन। अधिकप्रसङ्गिना न भवितव्यमिति लोकोक्तिः।

सुखेन मीमांसानयानां कतिपयानां स्वरूपमवगतं भवत्विति लघुरयं ग्रन्थः प्रणीतः। नयानां ज्ञानेन सह भाट्टमते स्वीकृतानां प्रमाणानां प्रमेयानाञ्च स्थूलशो ज्ञानमावश्यकमिति परिशिष्टे 'भाट्टमानमेयार्थसंग्रहः' समायोजितः। यद्यप्ययं विषयः पृथग्ग्रन्थमर्हति

तथापि स्थूलशः पदार्थेषु ज्ञातेषु विशेषेण परिज्ञाने प्रवृत्तिरुदियादिति संग्रहः प्रकाशितः। भट्टमतसिद्धमानमेयार्थविषयको विशिष्टो ग्रंथो 'मीमांसाकुतूहला' भिधः भट्टश्रीकमलाकरेण प्रणीतः टिप्पणीभूमिकादिर्विभूषितो मया सम्पादितः। मीमांसायामत्युत्तमोऽयं ग्रन्थः। मीमांसानयमञ्जरीं मीमांसाकुतूहलञ्च प्रकाशयितुं स्वीकृतिं प्रदत्तवद्भ्यः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिपदं भूषयद्भ्यः कृतज्ञतामाविष्कुर्वन् शतशो धन्यवादान् समर्पयामि। मुद्रणालयीयस्य 'प्रूफ' पदाभिधेयस्य संशोधनकार्ये अत्यन्तम् उपकृतवतीं मज्जायां शुभाशंसनैः परिपूरयामि। ग्रन्थेऽस्मिन् याः काश्चन त्रुटयस्ताः क्षन्तव्या इति विद्वद्वरान् सम्प्रार्थ्य विरमामि।

वाराणसी }<br>
१९८४ }

इति विद्वद्वराणां विधेयः<br>
पट्टाभिरामशास्त्री

# मीमांसानयमञ्जरी नयानां

## सूची

॥ नयसूची समाप्ता ॥



## शुद्धिपत्रम्

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ४ | अवहनेनैव | अवहननेनैव |
| ५ | ११ | वाक्यवेदस्य | वाक्यवदस्य |
| ५ | १९ | प्राशत्य | प्राशस्त्य |
| ७ | २७ | सरूपः | सरूपाः |
| ,, | २८ | प्राशत्य | प्राशस्त्य |
| ८ | १४ | थूप | यूप |
| ,, | २३ | यावान् | यवान् |
| | २९ | हेवर्त्थे | हेत्वर्थे |
| २८ | २ | व्ययदेशश्च | व्यपदेशश्च । |
| ४१ | १० | स्वापर्वं | स्वापूर्वं |
| ,, | २५ | यागाज | यागज |
| ४२ | १३ | तृतीयर्थे | तृतीयार्थे |
| ४६ | १३ | उच्चै | उच्चैः |
| ,, | २१ | अर्यभा | अर्यमा |
| ६५ | २५ | वारवग्ती | वारवन्ती |
| ७३ | १३ | मासादव | मासादयः |
| ,, | १८ | मीयादय | नीमादयः |
| ७४ | ९ | यजम् | यनम् |
| ७६ | २२ | तेज्मान | त्यज्यमा |
| ७८ | २५ | विर्धियते | विधीयते |
| ७९. | ११ | विधिति | विधिरिति |
| ,, | १२ | राज्ञानां | राज्ञाणां |
| ,, | १३ | त्रिद्दो | त्रिदो |
| ,, | २४ | पात्नोत्र | पात्नीवत |
| ,, | २९ | कलाय | कलाप |
| ८०. | ७ | ऊत | उत |
| ,, | १६ | पाप्ते | प्राप्ते |
| ८१. | २५ | क्रततौ | क्रतौ |
| ८२. | ३ | होवे | होत्रे |
| ,, | ९ | विषत्व | विषयत्व |
| ,, | २० | वाक्यशे | वाक्यभे |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ८३. | २२ | तन्वतः | तन्वतः |
| ८४. | १६ | धिकारम् | धिकरणम् |
| ८६. | १ | तस्मदवभ्य | तस्मादभ्य |
| ,, | ८ | निना | विना |
| ८८, | १७ | षोभीय | षोमीय |
| ९६. | १६ | परिभाणा | परिमाणा |
| ९७. | २० | कहायी | कहायनी |
| ९८. | १ | क्रणम् | क्रमणम् |
| ९८. | ९ | संबग्ध | सम्बन्ध |
| १०२. | १६ | यजमान | यजमाना |
| १०४. | १८ | मन्त्रालिङ्गं | मन्त्रलिङ्ग |
| ,, | २३ | सङ्गामन | सङ्गमन |
| १४४, | २४ | क्रतोर्त | क्रतोर्न |
| १६०. | ४ | सन्नाय्य | सान्नाय्य |
| १८४. | २० | श्रुतव्ये | श्रुतद्रव्ये |
| २०३. | ५ | यानुषाणि | यातुषाणि |
| २०७. | १६ | द्विरण्य | हिरण्य |

मद्दृष्टिदोषेण बह्व्योऽशुद्धयो जाताः । तास्संशोध्याध्यापयन्त्विति सविनयं विपश्चितः प्रार्थये ।

●

❀ श्रीः ❀

॥ श्रीगुरुभ्यो नमः ॥

# मीमांसानयमञ्जरी

## प्रथमाध्यायस्य प्रथमः पादः

रघुनाथान्नपूर्णाम्बातीव्रोदग्रतपःफलम् ।
चिन्नस्वामिगुरुं वन्दे शान्तं वाधूलभूषणम् ॥
मीमांसासागरो यस्य क्रीडापुष्करिणीनिभः ।
स गुरुर्मामके चित्ते लसतात्स्फूर्तिहेतवे ॥
विकसद्गुरुपादाब्जमकरन्दैकमधुव्रतः ।
पट्टाभिरामस्तनुते मीमांसानयमञ्जरीम् ॥
मीमांसानयकल्लोलसङ्कुलं सागरं सुखम् ।
सन्तरन्तु तरिं भद्रां बाला आश्रित्य मञ्जरीम् ॥
वाञ्छन्ति शास्त्रमध्येतुं कालेनाल्पीयसाऽधुना ।
विनेयतृप्तये ग्रन्थो नासौ विबुधवृत्तये ॥

### १. जिज्ञासाधिकरणम्

अस्याधिकरणस्य विचारविषयो धर्मविचारशास्त्रम् । शास्त्रमिदं किं नारम्भणीयम् ? उतारम्भणीयम् ? इति सन्देहः । तदर्थं 'स्वाध्यायोऽध्येतव्यः' इति विधिरदृष्टार्थं वेदाध्ययनं विधत्ते; उतार्थज्ञानार्थं विधत्त इति विचारणीयम् । यद्यदृष्टार्थं विधत्ते तर्हि विचारार्थं शास्त्रमनारम्भणीयमिति सिध्यति । यदि च दृष्टार्थंज्ञानार्थमध्ययनं विधत्ते, तर्हि तदर्थज्ञानं विचारमन्तरा न सिध्येदिति विचारशास्त्रमारम्भणीयमिति सिध्यति । तत्रायं पूर्वपक्षः—वेदार्थज्ञानं विनापि विधिना लिखितपाठादिना प्राप्तुं शक्यत इति विधेरावश्यकता नास्ति । अतोऽदृष्टार्थमेवाध्ययनम् । ततश्च नारम्भणीयं विचारशास्त्रमिति । एवं पूर्वपक्षे प्राप्ते महर्षिजैमिनिः 'अथातो धर्मजिज्ञासा' इति विचारशास्त्रमारभते । स्वाध्यायाध्ययनविधिर्नादृष्टार्थमध्ययनं विधत्ते, 'दृष्टे सम्भवत्यदृष्टस्यान्याय्यत्वादिति न्यायात् । प्रकारान्तरेणार्थज्ञानसम्भवेऽपि

स्वाध्यायाध्ययनविधिना नियमः क्रियते-यत् स्वाध्यायाध्ययन-विधिनैवार्थज्ञानं सम्पादयेदिति, 'व्रीहीनवहन्तीति'वत् । यथावहनन-साध्यतुषविमोकफलस्य नखविदलनाश्मकुट्टनादिनापि सम्पद्यमानस्या-वहनेनैव तत्फलं सम्पादनीयमिति नियमः स्वीक्रियते, अन्यथा दर्शपूर्णमास-जन्यमपूर्वं नोत्पद्यत इति कल्प्यते, तथोत्तरक्रतुविधिषु स्वस्वानुष्ठा-नायार्थज्ञानमाक्षिपत्सु तदर्थज्ञानं स्वाध्यायाध्ययनेनैव सम्पादनीयम् । अन्यथा तत्तत्क्रतुजन्यापूर्वं नोत्पद्यत इति कल्प्यते । यद्यपि साङ्गवेदा-ध्यायिनां निरुक्तव्याकरणादिना पदपदार्थज्ञानं जायत एव, तथापि 'अक्ताश्शर्करा उपदधाति' इत्यादौ घृतेनैवाञ्जनं कर्तव्यं नान्यद्रवद्रव्येणेति वाक्यार्थज्ञानं निरुक्तव्याकरणादिना न भवतीति वाक्यार्थविचारात्मकं मीमांसाशास्त्रमेव शरणीकरणीयमिति जैमिनिः 'अथातो धर्मजिज्ञासा' इति सूत्रेण बोधयति । तथा च शास्त्रारम्भो विधिप्रयुक्तस्सिध्यति ॥

## २. धर्मलक्षणाधिकरणम्

'मानाधीना मेयसिद्धिः' इति न्यायेन प्रमाणेन विना वस्तुन-स्सिद्धिर्न भवति । विचारविषयीभूतस्य धर्मस्य प्रमाणं लक्षणञ्च विद्यते न वेत्यस्मिन्नधिकरणे चिन्त्यते । तत्र पूर्वपक्षो न विद्यत इति । तत्र हेतुः—धर्मोऽलौकिकः । अलौकिकस्य लोके सङ्गतिग्रहो न भवति । सङ्गतिग्रहाभावे न स्वरूपं सिध्यति नापि प्रमाणम् । अतो लक्षण-प्रमाणाभ्यां विहीनस्य धर्मस्य विचारो न कर्तव्य इति । सिद्धान्तस्तु लक्षणं विधिविहितत्वे सत्यर्थत्वम् । लक्षणेनैव स्वरूपावगतिर्भवति । अत्र च विधिरेव प्रमाणम् । यथा यागादिर्धर्मः । स च 'यजेत स्वर्गकामः' इति विधिना विधीयते, अपि चार्थः श्रेयस्साधनम् । अपि च यो याग-मनुतिष्ठति, तं लोके धार्मिकं व्यवहरन्ति । अतो धर्मस्यालौकिकत्वेऽपि लोके व्यवहारो नानुपपन्नः । एवञ्च धर्मे विधिः प्रमाणम्; तद्बोधित-त्वञ्च लक्षणं सिद्धं भवति ।

## ३. धर्मपरीक्षाधिकरणम्

धर्मे प्रमाणं विधिरिति यदुपन्यस्तं तत् परीक्षणीयम् । मीमांसाशास्त्रमिदं परीक्षाशास्त्रं कथ्यते । विना परीक्षया कोऽपि पदार्थो न स्वीक्रियते । प्रतिज्ञामात्रेण वस्तुनस्सिद्धिर्न भवतीति जैमिनिः

'तस्य निमित्तपरीष्टिः' इति परीक्षां प्रतिजानीते । तस्य विचारविषयीभूतस्य धर्मस्य निमित्तं प्रमाणं यदुक्तं तत्परीक्षिष्यत इति सूत्रार्थः ॥

### ४. सत्सम्प्रयोगाधिकरणम्

प्रत्यक्षादिभिः प्रमाणैर्धर्मो न गम्यते । इन्द्रियसन्निकर्षद्वारा यस्य ज्ञानं भवति तत्प्रत्यक्षमिति व्यवहारः । धर्मस्त्वमूर्तः, तेन इन्द्रियाणां सन्निकर्षो न सम्भवी । अतः प्रत्यक्षगम्यो धर्मो न भवति । प्रत्यक्षमूलकत्वादनुमानादीनां न धर्मे प्रमाणत्वम् । हेतुसाध्ययोस्सम्बन्धे प्रत्यक्षेण गृहीते तदनन्तरं हेतुमात्रदर्शनेन वह्नेरनुमानमुदेति । एवमुपमानादीन्यपि न प्रमाणं प्रत्यक्षमूलकत्वादेव ॥

### ५. शब्दार्थसम्बन्धनित्यत्वाधिकरणम्

प्रत्यक्षादीनामप्रवृत्तावपि विधिशब्दो मानं भवत्येव । कथं विधिशब्दो मानं भवेत् ? शब्दस्य सङ्गतिग्रहमन्तराऽर्थावबोधकत्वं दुर्घटम् । सङ्गतिश्च पुरुषकृता । तद्द्वाराऽन्येषां तद्ग्रहो भवति । सङ्गतिग्रहावसरे प्रत्यक्षेण घटपटादीन् पदार्थान् दृष्ट्वा शब्दस्य सङ्गतिर्ग्रहीतव्या भवति । सति चैवं शब्दस्यापि प्रत्यक्षमूलकत्वमेव सिध्यति इति कथं विधिशब्दो धर्मे प्रमाणम् ? अस्याश्शङ्काया उत्तरमुच्यते—शब्दस्यार्थेन सह सम्बन्धो नित्यो भवति, न पुरुषकर्तृकः, असम्भवात् । किमेकः पुरुषस्सर्वशब्दानां सम्बन्धस्य कर्ता उतानेके कर्तारः ? नाद्यः, तादृशपुरुषस्य स्मरणाभावात् । न द्वितीयः पक्षः, अनेकेषां कर्तृत्वे व्यवस्थाया असिद्धेः । घटपदस्य कम्बुग्रीवादिमानेवार्थ इति न सिध्यति । अतश्शब्दस्यार्थेन सह सम्बन्धो नित्य एष्टव्यः । अतो विधिशब्दो धर्मे प्रमाणमेव ॥

### ६. शब्दनित्यत्वाधिकरणम्

विधिशब्दो धर्मे प्रमाणं न भवितुमर्हति, शब्दस्यानित्यत्वात् । शब्दं करोति, शब्दो नष्टः, शब्दो वर्धते इत्यादिप्रयोगैश्शब्दस्यानित्यत्वं कृतकत्वञ्च सिध्यति यदा, तदा विधिशब्दः कथं धर्मे प्रमाणम् इति पूर्वपक्षे समुत्थिते सिद्धान्तः-शब्दो द्विविधः-ध्वन्यात्मको वर्णात्मकश्च । तत्र कण्ठताल्वाद्यभिघातेन प्रेरिता वायवः कर्णदेशमागत्य कर्णशष्कुल्यवच्छिन्नाकाशे पूर्वमेव यथावदवस्थितान् वर्णान् अभिव्यञ्जयन्ति । ध्वन्यात्मक-

शब्दकर्तृत्वमादाय शब्दं करोति शब्दो नष्टः शब्दो वर्धते इत्यादयो व्यवहाराः प्रचलिताः। शब्दस्तु वर्णात्मकः, तस्याभिव्यक्तिर्भवति कण्ठताल्वाद्यभिघातजन्यैर्वायुभिः। वायूनां यावद्दूरं वेगस्तावद्दूरं शब्दस्य श्रवणं भवति। मन्दीभूतेषु वायुषु शब्दोऽपि मन्दं श्रूयते। यदा वायूनां वेगो नष्टः, तदा शब्दश्रवणाभावात् शब्दो नष्ट इति व्यवहारः। अतश्शब्दो नित्यः, स च वर्णात्मकः॥

## ७. तद्भूताधिकरणम्

शब्दार्थसम्बन्धस्य शब्दस्य च नित्यत्वे साधिते पूर्वपक्षी वाक्यवाक्यार्थकृतकत्वमाशङ्कते। पदानुपूर्वीघटितानि वाक्यानि भवन्ति। आनुपूर्वीघटनञ्च पुरुषकृतमेव भवितुमर्हति। स्वतस्सिद्धानि वाक्यानि न भवेयुः। अतो वेदवाक्यानां कृतकत्वेन विधिशब्दो धर्मे कथं प्रमाणम् इति। एवं पक्षे प्राप्ते सिद्धान्तः—सत्यं पदानामानुपूर्वी न नित्या, किन्तु वेदाध्ययनपरिपाट्यां गुरुमुखोच्चारणानूच्चारणरूपायाम् आनुपूर्वी नियता समुपलभ्यत इति नित्यानि वेदवाक्यानि। नास्माभिर्निर्णेतुं शक्यते केन कदा घटितेयमानुपूर्वीति। अध्यापयिता गुरुमेव निर्दिशेत्। न कोऽपि गुरुर्ब्रवीति-मयेयमानुपूर्वी घटितेति। वाक्यस्य वाक्यार्थेन सह सम्बन्धोऽपि न कृतकः, पदार्थानामेव वाक्यार्थत्वात्। पदार्थानां वाक्यार्थरूपेण भानं आकाङ्क्षासन्निधियोग्यत्वैः कारणैर्भवति, अथवा लक्षणया भवति। एवञ्च वाक्यानां न वाक्यार्थे शक्तिः। अतो वेदवाक्यानां तदर्थानाञ्च नित्यत्वम्॥

## ८. अपौरुषेयत्वाधिकरणम्

वाक्यवाक्यार्थयोस्सम्बन्धनित्यत्वे साधिते समग्रस्य वेदाख्यग्रन्थस्य पौरुषेयत्वं साधयितुं पूर्वपक्षी प्रत्यवतिष्ठते। वेदे काठकम् कालापकम् कौथूममित्यादयस्समाख्या उपलभ्यन्ते समाख्याभिर्ज्ञायते यत्कठेन निर्मितो भागः काठकशब्देन व्यवह्रियत इति। तथा सति वेदस्य पौरुषेयत्वं कथं वारयितुं शक्यम्। तस्माद्वेदोऽनित्य इति शङ्कायां सिद्धान्तः—काठकमित्यादयस्समाख्याः कठेन प्रोक्तं काठकमिति प्रवचननिमित्तत्वमादायोपपादयितुं शक्याः। अतो वेदोऽपौरुषेयः॥

[ इति प्रथमाध्यायस्य प्रथमः पादः ]

## प्रथमाध्यायस्य द्वितीयः पादः

### १. अर्थवादाधिकरणम्

धर्मे यावन्ति प्रमाणानि तानि प्रथमाध्याये विचार्यन्ते । अतः प्रथमाध्यायः प्रमाणाध्यायः कथ्यते । तत्र प्रथमपादे धर्मे विधीनां प्रामाण्यं व्यवस्थापितम् । तत्र वेदे मन्त्रार्थवादादिरूपेण भागा विद्यन्ते । तेषामपि धर्मे प्रामाण्यमुपपादनीयम् । वार्तिके भट्टपादास्तेषां प्रामाण्य-प्रकारं प्रदर्शितवन्तः ।

अधिकरणस्यास्य निखिला अर्थवादा उदाहरणम् । तत्र 'वायव्यं श्वेतमालभेत' इति वायव्यं यागं विधाय आम्नायते 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेन उपधावति स एवैनं भूतिं गमयति' इत्यर्थवादः वायुगतक्षिप्रगामित्वादिगुणं बोधयन् नाप्राप्तमर्थं विधत्ते । किन्तु विदि-तमेवार्थं बोधयति । अस्य विधायकत्वेन प्रामाण्यं वक्तुं न शक्यते । न चास्य प्रकृतविधिवाक्येनैकवाक्यतामापाद्य विधिवाक्यवेदस्यापि प्रामाण्यं वक्तुं शक्यम् । आकाङ्क्षाभावेनैकवाक्यत्वानुपपत्तेः । कस्यापि वाक्यस्य केनापि वाक्येनैकवाक्यता आकाङ्क्षादिना भवति । वायव्यवाक्यं स्वीयमर्थं परिपूर्णं प्रतिपादयत् निराकाङ्क्षम् । तेन 'वायुर्वै' इत्या-द्यर्थवादस्यैकवाक्यता कथं भवेत् । अर्थवादवाक्यमपि स्वार्थप्रतिपादनेन निराकाङ्क्षम् । अत उत्थाप्याकाङ्क्षापि नास्ति । न च विधिवाक्यम् आलस्यौदासीन्यादिना यागानुष्ठानेऽप्रवृत्तं पुरुषं प्रवर्तयितुं प्राशस्त्य-बोधनायार्थवादमपेक्षत इति वाच्यम्; विधेरेवेष्टसाधनत्वबोधनद्वारा प्रवर्तकत्वसिद्धेः, प्राशस्त्यापेक्षाभावात् । अतोऽर्थवादा धर्मे न प्रमाणम् इति पूर्वपक्षे प्राप्ते सिद्धान्तः—

प्राशस्त्यज्ञानजननाय विधिरर्थवादानाकाङ्क्षति । तथा हि— 'वायव्यं श्वेतमालभेत' इत्यादिलिङ्घटितवाक्येषु प्रत्ययस्यांशद्वयम्— लिङ्त्वमाख्यातत्वञ्चेति । अर्थात् लिङ्त्वावच्छिन्नः प्रत्ययः, आख्या-तत्वावच्छिन्नः प्रत्यय इति । उभाभ्यामप्यंशाभ्यां युक्तस्य प्रत्ययस्य भावनावाचित्वं स्वीकृतं मीमांसकैः । भावना नामोत्पद्यमानस्योत्पत्त्य-नुकूलो व्यापारः । लिङ्त्वांशेनाभिधीयमाना भावना शाब्दीभावना

प्रवर्तना प्रेरणेत्यादिशब्दैर्व्यवह्रियते । आख्यातत्वांशेनाभिधीयमाना भावना आर्थीभावना आर्थभावना प्रवृत्तिरिति शब्दैर्व्यवह्रियते । तत्र प्रवर्तनापरपर्यायाः शाब्दीभावनायाः साध्यं साधनम् इतिकर्तव्यता चेत्याकाङ्क्षात्रयं जायते । साध्याकाङ्क्षायां प्रवृत्त्यनुकूलव्यापाररूपत्वाच्छाब्दीभानायाः प्रवृत्तिरेव साध्यत्वेनोपतिष्ठते, प्रयोज्यप्रवृत्तेस्साध्यत्वात् । प्रयोज्यप्रवृत्तिरेवार्थीभावना । एवञ्च साध्याकाङ्क्षायामार्थीभावना-प्रवृत्तिरूपा तत्त्वेनान्वेतीति सिध्यति । साधनाकाङ्क्षायां लिङादिज्ञानं साधनत्वेनान्वेति । अत्र च साधनत्वं भावनाजनकत्वेन नाभिप्रेतम् नित्यत्वाच्छाब्दीभावनायाः, किन्तु भावनाभाव्यनिर्वर्तकत्वरूपं पारिभाषिकं साधनत्वमभिप्रेतम् । लिङादिज्ञानं शाब्दीभावनाभाव्यामार्थीभावनां प्रवृत्तिरूपां सम्पादयत्यन्वयव्यतिरेकाभ्याम् । लिङ्ज्ञानसत्त्वे प्रवृत्तिः तदभावे न प्रवृत्तिरिति लोकानुभवात् । इतिकर्तव्यताकाङ्क्षायां प्राशस्त्यज्ञानमितिकर्तव्यतारूपेणान्वेति । इतिकर्तव्यता नाम कर्तव्यनिष्ठप्रकाराकाङ्क्षा । शाब्दीभावनायाः कर्तव्योऽर्थः प्रयोज्यप्रवृत्तिरूपः । स च लिङादिज्ञानजन्यः ।

यदि कदाचिदालस्यादिना लिङादिज्ञानवानपि प्रयोज्यो न प्रवर्तेत तदा प्रवर्तना–प्रयोजकनिष्ठो व्यापार आकाङ्क्षति––कथमहमेनं प्रवर्तयेयम् इति । प्रयोज्यनिष्ठमालस्यादिकमपाकृत्य रुचिं जनयित्वाऽयं प्रवर्तनीय इत्याकाङ्क्षा समुदेति, इयमेवेतिकर्तव्यताकाङ्क्षा । विधिवाक्यानामियं स्थितिः । अर्थवादवाक्यान्यालोचयामः–तानि वायुः क्षिप्रगामी इति लोकसिद्धं पदार्थं प्रतिपादयन्ति, मुख्यं प्रयोजनं न लभन्ते । मुख्यं च प्रयोजनं प्रवृत्तिः निवृत्तिर्वा । अर्थवादबोधितं क्षिप्रगामित्वादिकमर्थं जानन् पुरुषो न प्रवर्तते नापि निवर्तते । मुख्यं प्रयोजनमलभमाना अर्थवादा अस्माकं कार्यं किमित्याकाङ्क्षन्ति । विधिवाक्यशेषतया इमेऽर्थवादा आम्नाताः । विधिः स्वविधेये पदार्थे रुच्युत्पादनाय द्वारं प्राशस्त्यं कामयते, अर्थवादाश्च रुचिं जनयितुं समर्था भूत्वा प्राशस्त्यं लक्षयन्ति । शब्दार्थप्रतिपादने ते प्रयोजनं न लभन्ते । विधिवत् स्वस्यापि प्रवर्तकत्वं सिध्यत्विति तेऽभिलषन्ति । एवञ्च विधौ कथमिति अर्थवादेषु च किमित्याकाङ्क्षायां सत्यां नष्टाश्वदग्धरथन्याये-

नोभयोरेकवाक्यता सुलभा। एकवाक्यताया अयमाकारः––क्षिप्रगामिनी वायुर्देवता शीघ्रमेव फलदापने समर्था। अतस्तद्देवताकं कर्म प्रशस्तमतोऽनुष्ठेयमिति। यद्यपि विधेरेवेष्टसाधनत्वज्ञानजननद्वारा विधेयं कर्मानुष्ठापयितुं सामर्थ्यमस्ति, तथापि स्वसन्निधौ पठितेष्वर्थवादेषु तादृशसामर्थ्यवत्सु सत्सु तैरेव विधिर्विधेयमनुष्ठापयति। लौकिकी नीतिरियम्–यत् स्वासनस्य शय्याया वा आस्तरणे गुरोस्सामर्थ्ये विद्यमानेऽपि सन्निधौ शिष्येषु सत्सु तद्द्वारैव गुरुस्तत्कार्यं सम्पादयतीति। कार्यालयीयकार्याणि सम्पादयितुं कर्यालयाध्यक्षस्समर्थ इति कर्यार्थं नियुक्ताः पुरुषाः कार्यालये तूष्णीं नोपविशेयुः। यथायथं स्वीयानि कार्याणि कर्तव्यान्येव भवन्ति। तद्वत्सन्निधौ पठिता अर्थवादा विधेः प्रवर्तकत्वशक्तिरस्तीति तूष्णीं न तिष्ठेयुः। विध्यपेक्षितं कार्यं सम्पादयेयुरेवेति लोकोपयोगिताऽस्य न्यायस्य सिध्यति। एवञ्च विध्येकवाक्यतयाऽर्थवादानां प्रामाण्यमिति सिद्धम् ॥

## २. विधिवन्निगदाधिकरणम्

अर्थवादानां विध्येकवाक्यतया प्रामाण्यं व्यवस्थापितम्। कतिपयानां विधायकत्वेनैव प्रामाण्यमस्त्विति शङ्काया उत्थितिर्भवतीत्यधिकरणमारभ्यते। तत्रेदं विषयवाक्यम्–'सोमापौष्णं त्रैतमालभेत' इति कश्चन विकृतियागः। तत्सन्निधौ 'औदुम्बरो यूपो भवति ऊर्वा उदुम्बरः ऊर्क् पशवः ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जोऽवरुध्यै' इत्यर्थवादः पठितः। तत्र संशयः––किमिदं वाक्यं विधीयमानस्यौदुम्बरत्वस्य फलसमर्पकत्वेन नेतव्यम् ? उत स्तावकत्वेन ? इति। तत्र 'ऊर्जं पशून्' इति साध्यत्वाभिधायिन्या द्वितीयया ऊर्ग्रूपपशूनां साध्यत्वप्रतीतेः तदुद्देशे नौदुम्बरत्वं विधीयत इति कथने विधायकत्वं सिध्यति। विधायकत्वेन प्रामाण्ये सिध्यति सति किमित्यस्यार्थवादत्वमङ्गीकृत्य विध्येकवाक्यतया प्रामाण्यमङ्गीकर्तव्यम्। अस्य वाक्यस्य फलसमर्पकत्वे 'ऊर्जोऽवरुध्यै' इति चतुर्थी विभक्तिरपि साहाय्यमाचरति। अतो विधायकत्वेनैवास्य प्रामाण्यमस्तु। एवं पूर्वपक्षे प्राप्ते सिद्धान्त इमेऽर्थवादा न विधिसरूपाः; किन्तु विधिवन्निगद्यन्ते। अतः पूर्ववत्प्राशस्त्यज्ञानजनकत्वेन विध्येकवाक्यतयैवैतेषां प्रामाण्यम्। सर्वत्र फलसम्बन्धबोधकेषु वाक्येषु फल-

पदं कमिपदघटितमेव दृश्यते—'स्वर्गकामः', 'पशुकामः' आदि। प्रकृत-वाक्ये 'पशून्' इति द्वितीयया पशूनां साध्यत्वमात्रं प्रतीयते; न तु फलत्वम्। किञ्च पशूनां साध्यत्वं तदा भवितुमर्हति, यदा तत्साधनं केनापि वाक्येन विहितं स्यात्। तदैव साध्यसाधनभाव उपपद्येत। 'औदुम्बरो यूपो भवति' इति तु न विधायकम्; विधायकप्रत्ययाभावात्। यदि स्तुत्या विधिः कल्प्यते, फलञ्च कल्पनीयमिति वाक्य-भेदस्स्यात्। किञ्च यदि विधिं फलञ्च कल्पयित्वा औदुम्बरत्वं विधीयते; तर्हि तस्याश्रयापेक्षायां कस्याश्रयत्वेनान्वयो भवेत्। द्रव्यगुणजातीनां फलाय विधीयमानानां क्रियारूपमाश्रयं विना फलसाधनत्वमनुपपन्नम्। अतः कस्याश्रयत्वेन सम्बन्धः क्रियते। न तावत्सोमापौष्णयाग आश्रयो भवितुमर्हति, तदुत्पत्तिवाक्ये पशुद्रव्यावरुद्धत्वाद् औदुम्बरत्वस्य करणत्वा-सम्भवात्। नापि यूपस्य वा तत्र क्रियमाणस्य नियोजनादेर्वा आश्रयत्व-सम्भवः; प्राकृतानां तेषामत्रोपस्थित्यभावात्। यद्युपमितिलक्षणप्रमाणेन तेषामुपस्थितिमङ्गीकृत्याश्रयत्वं सम्पाद्येत, तर्हि अस्मिन् वाक्ये यूपपद-निर्देशोऽनर्थकस्स्यात्। अत आश्रयालाभान्नानेनौदुम्बरत्वं विधातुं शक्यते। अर्थवादेन स्तुतिबुद्धिमानीय विधिवाक्यैकवाक्यतयैव प्रामाण्यं स्वीकर्तव्यम्।

पूर्वस्मिन्नधिकरणे विधिवन्निगदा अर्थवादा विचारिताः। तत्र स्पष्टतया फलबोधकशब्दाभावात् आश्रयालाभाच्च स्तावकत्वेन प्रामाण्यमङ्गीकृतम्। यत्र चार्थवादे स्पष्टतया विधिसामग्री दृश्यते तत्र विधायकत्वेनैव प्रामाण्यमस्त्वित्याक्षिप्यात्र समाधीयते। चातुर्मास्येषु वरुणप्रघासपर्वणि 'करम्भपात्राणि जुहोति' इति विधाय 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इत्याम्नायते। यावान् भर्जयित्वा चूर्णीकृत्य तादृश-पिष्टेन निर्मितानि क्रीडनकसदृशानि पात्राणि करम्भपात्राणि कथ्यन्ते। तानि पात्राणि शूर्पे निक्षिप्य शूर्पेण हूयन्ते। होमसाधनं शूर्पः। शूर्पकरणकहोमं विधाय 'तेन ह्यन्नं क्रियते' इत्यर्थवादः। स एवास्या-धिकरणस्य विषयः। अत्र चिन्त्यते—किमयमर्थवादः शूर्पकरणकहोमं प्रत्यन्नकरणत्वं हेतुतया विदधाति ? उत शूर्पप्रशंसायां वाक्यस्य तात्पर्यं वा ? अत्र वाक्ये 'हि'शब्दः श्रुतः। स च लोके हेत्वर्थकत्वेन प्रसिद्धः।

हेतुपरत्वात् तदन्यथानुपपत्त्या यद्यदन्नकरणं तेन तेन होतव्यमिति व्याप्तिवचनं कल्प्यते। अनया व्याप्त्या साक्षादन्नकरणानि दर्वीपिठरादीनि होमसाधनत्वेन लभ्यन्ते। शूर्पस्य साक्षादन्नक्रियाकरणत्वाभावेऽपि विप्रकृष्टलाङ्गलाद्यपेक्षया 'शूर्पेण' इति करणत्वोक्त्या करणत्वसिद्धेः शूर्पपदमवयुत्यानुवादकम्, अतः 'तेन ह्यन्नं क्रियते' इत्यस्यैव विधित्वमिति पूर्वपक्षे प्राप्ते,

सिद्धान्त उच्यते—

प्रत्यक्षतया 'शूर्पेण' इति शूर्पस्य करणत्वं गम्यते, तस्य व्याप्त्या प्राप्तैर्दर्विपिठरादिभिर्बाधो न भवितुमर्हति; विषमशिष्टत्वात्। न दर्विपिठरादिभिस्समुच्चयः; शूर्पस्य निरपेक्षविधानात्। न विकल्पस्यावसरः, उभयोस्तुल्यबलत्वाभावात्। 'क्रियत' इति वर्तमानकालं बाधित्वा लक्षणया येन येनान्नं कृतं करिष्यते वेति कल्पनं स्यात्। न ह्यन्नकरणकाले होमः कर्तुं शक्यते। 'न विधौ परश्शब्दार्थः' इति न्यायेन विधौ लक्षणाश्रयणमयुक्तम्। हेत्वर्थकहिशब्दस्य स्तुत्यर्थत्वेऽपि सङ्गतिर्भवितुमर्हति। अतोऽयं न हेतुविधायकः किन्तु स्तावक एव। विध्येकवाक्यतयैवास्य प्रामाण्यं स्वीकर्तव्यम्॥

## ४. मन्त्राधिकरणम्

विविधार्थवादानां स्तावकतया प्रामाण्यमुपपाद्यास्मिन्नधिकरणे मन्त्रा विचार्यन्ते। कर्मप्रयोगकाले मन्त्राणामुच्चारणं किमदृष्टार्थं कर्तव्यम्? उत दृष्टार्थस्मरणार्थम्? इति संशयशरीरम्। यथा द्रव्यदेवतयोः कर्माङ्गत्वं तथा मन्त्राणामपि तदङ्गत्वं वक्तव्यम्। द्रव्यं देवता च यागस्वरूपनिष्पादनद्वारा अङ्गं भवति, तथा मन्त्राणामङ्गत्वे किं द्वारम्? किमदृष्टं द्वारम् उत कर्मसमवेतार्थस्मरणं द्वारम्? इति विचारविषयः। तत्र मन्त्राणामुच्चारणं पक्षद्वयेऽपि समानम्। तच्चादृष्टार्थमिति पूर्वः पक्षः कर्मसमवेतार्थानान्तु स्मरणं प्रकारान्तरेण सूचींनिर्माणेन पुरोहितनियुक्त्या वा भवितुमर्हति। तदर्थं मन्त्राणां विधानस्यावश्यकता नास्ति। अदृष्टप्राप्त्यर्थमेव मन्त्रविधानमिति स्वीकर्तव्यम्। यदि मन्त्रोच्चारणं पदार्थस्मरणार्थं स्यात् तर्हि 'इति पुरोडाशं प्रथयति' 'इत्यश्वाभिधानीमादत्ते' इत्यादिब्राह्मणवाक्यानां नैरर्थक्यं स्यात्। अर्थप्रकाश-

कत्वं मन्त्राणां यदि स्यात् तर्हि ब्राह्मणवाक्येन तत्प्रकाशनं कस्मै प्रयोजनाय स्यात् । हस्तं परिगृह्य कस्मिंश्चन नीयमाने सति वक्तारो भवन्ति नूनमयं चक्षुर्भ्यां न पश्यतीति तथैव ब्राह्मणवाक्येन विनियुज्यमाने मन्त्रेऽर्थप्रकाशनसामर्थ्यं नास्तीति गम्यते । अतो मन्त्राणामदृष्टार्थत्वमेवेति पूर्वपक्षे प्राप्ते,

सिद्धान्त उच्यते—

मन्त्रोच्चारणस्य दृष्टे फले लभ्यमानेऽदृष्टार्थत्वं न समुचितम् । यदा हि मन्त्रगतपदान्यर्थमवगमयन्ति तदा तदवरोधो ब्राह्मणवाक्यैर्न कर्तुं शक्यते । ब्राह्मणवाक्यानां सार्थक्यन्तु क्वचिदर्थवादार्थत्वेन क्वचित्परिसङ्ख्यार्थत्वेन भवितुमर्हति । 'यज्ञपतिमेव तत्प्रथयति' इति वाक्यस्यार्थवादत्वसाधनाय 'इति पुरोडाशं प्रथयति' इति, गर्दभरशनादानपरिसङ्ख्यानाय 'इत्यश्वाभिधानीमादत्त' इति प्रयोजनवत्त्वं ब्राह्मणवाक्यानां भवति । मन्त्राणामर्था एव न सन्तीति ब्राह्मणवाक्यानि प्रतिपादयितुं न शक्नुवन्ति । न च प्रकारान्तरेणार्थेषु स्मर्यमाणेषु स्मरणार्थत्वेन मन्त्रविधानं नोचितमिति वाच्यम्, मन्त्रैरेवार्थः स्मर्तव्य इति नियमविध्याश्रयणात् । अत्यन्ताप्राप्तार्थबोधकत्वापेक्षया पाक्षिकाप्राप्तांशपूरकत्वे लाघवं भवति । अतो मन्त्राः पदार्थानां स्मरणोपकारिणो दृष्टार्थाः ॥

[ इति प्रथमाध्यायस्य द्वितीयः पादः ]

## प्रथमाध्यायस्य तृतीयः पादः

### १. स्मृत्यधिकरणम्

प्रथमद्वितीयपादयोः विध्यर्थवादमन्त्राणां प्रामाण्यं प्रसाधितम्। तृतीयेऽस्मिन् पादे विध्येकदेशभूतनामधेयानां प्रामण्यं विचारणीयमासीत् तथापि विधिप्रामाण्यसाधनेनैव नाम्नः प्रामाण्यं सिद्धमिति तदविचार्य स्मृत्याचारादीनां प्रामाण्यं विचार्यते। विध्यर्थवादमन्त्रमूलकत्वं स्मृतीनां विद्यत इति पादद्वये ते विचारिताः। नामधेयमूलकत्वं स्मृतीनां नोपलभ्यत इति नामधेयप्रामाण्यविचारात्पूर्वं स्मृत्याचारा विचार्यन्ते। किञ्च विध्यर्थवादमन्त्रैः धर्मस्वरूपं यथावगम्यते तथा स्मृत्याचारैरप्यवगम्यत इति तृतीयपादे स्मृत्याचारविचारो नासङ्गतः। अस्मिन्नधिकरणे पौरुषेय्यस्स्मृतयः प्रमाणं न वेति विचार्यते। पुरुषाणां भ्रमप्रमादविप्रलिप्सादिदोषसम्भवात् तद्विरचितस्मृतीनां प्रामाण्यं न साधयितुं शक्यते। मूलभूतवेदोपलम्भेऽपि तेनैव धर्मस्वरूपावगतेः स्मृतिप्रणयनं व्यर्थम्। न चानुमानेन मूलश्रुत्युन्नयनेन तासां प्रामाण्यं साधयितुं शक्यत इति वाच्यम्; अनुमेयश्रुतिमूलत्वस्य तद्व्याप्तलिङ्गाभावात्। अतः स्मृतीनां न प्रामाण्यमिति पूर्वपक्षे प्राप्ते,

सिद्धान्तः—

स्मृतिग्रन्थैः धर्मज्ञानं जायते यदा तदा तेषामप्रामाण्यं कथम्? मूलेन विना कथं प्रामाण्यमङ्गीक्रियत इति चेत्, अनुमानेन मूलं कल्पयामः। धर्मे स्मृतयः प्रमाणम्, दृढवैदिकपरिगृहीतत्वात् अथवा कर्तृसामान्यात्। वेदविहितकर्मानुष्ठातार एव स्मृतीनामपि कर्तारः। स्मृतिप्रणेतृषु वैदिकपरिगृहीतृत्वमस्ति कर्तृसामान्यञ्च वर्तते। य एव वैदिकधर्मपरिग्रहीतारस्त एव स्मृतिकर्तारः। वेदबोध्यो धर्म इति य अस्थिषत त एव स्मृतिग्रन्थप्रणेतारः। अतो मूलभूतं वेदवाक्यमनुमातुं शक्यते। किञ्च सर्वासां स्मृतीनां प्रत्यक्षमूलं वेदवाक्यं नोपलभ्यत इति वक्तुं न शक्यते, बह्वीनां स्मृतीनां मूलोपलम्भात्। अध्ययनाध्यापन परिपाट्या विच्छिन्नत्वेन नास्माभिरिदानीमुपलभ्यत इति मूलानपलम्भ-

हेतुनाऽप्रामाण्यं साधयितुं न शक्यम् । अतः कर्तृसामान्यहेतुना मूलमनुमाय स्मृतीनां प्रामाण्यं साधनीयम् । न चैवं स्मृतिप्रणयनवैयर्थ्यं शङ्कनीयम्, सर्वशाखोपसंहारायास्मादृशानां कृते स्मृतिप्रणयनस्य सार्थक्यात् । धर्मकामाः स्मृतिप्रणेतारः, अतस्तेषु भ्रमप्रमादादीनां कल्पनं नोचितम् । एवञ्च मूलवेदानुमानेन स्मृतयः प्रमाणम् ॥

## २. विरोधाधिकरणम्

अस्मिन्नधिकरणे तासां स्मृतोनां प्रामाण्याप्रामाण्यविचारः क्रियते, याश्च श्रुतिविरुद्धाः । 'औदुम्बरी सर्वा वेष्टयितव्या' इति काचन स्मृतिः । उद्गातृगणान्तर्गता ऋत्विजः सोमयागे यत्रोपविश्य गायन्ति तत्रोदुम्बरवृक्षमयी स्थूणा निखन्यते । तां सर्वां वस्त्रेण वेष्टयितुमियं स्मृतिः प्रवृत्ता । प्रत्यक्षश्रुतिः कथयति—'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति । यदा स्पर्शनं न तदा वेष्टनम् यदा वेष्टनं न तदा स्पर्शनमिति विरोधे जाते विचार्यते किमियं स्मृतिः प्रमाणं न वेति । अत्र पूर्वपक्षी वदति-पूर्वस्मिन्नधिकरणेऽनुमितश्रुतिमूलकत्वेन स्मृतीनां प्रामाण्यं व्यवस्थापितम् । तेनैव न्यायेन सर्ववेष्टनस्मृतेर्मूलमनुमाय प्रामाण्यमङ्गीकर्तव्यम् । प्रत्यक्ष श्रुत्या विरोधे प्राप्ते प्रत्यक्षानुमितश्रुत्योर्विकल्पोऽङ्गीक्रियताम् । अतः प्रमाणं सर्ववेष्टनस्मृतिरिति ।

अत्र सिद्धान्तः औदुम्बर्याः सर्ववेष्टने कृते स्पर्शनं बाधितं भवति; स्पर्शने सति सर्ववेष्टनं कृतं न भवति । एवं बाध्यबाधकभावे सति प्रबलं दुर्बलं बाधते इति न्यायेन पौरुषेयस्मृत्यपेक्षयाऽपौरुषेयश्रुतेः प्राबल्यात् श्रुत्या स्मृतिर्बाध्यत इत्येष्टव्यम् । बाधिता स्मृतिः कथं प्रमाणं स्यात् । ननु स्मृतिर्दुर्बला बाधिता भवतु, किन्तु स्मृत्यनुमिता या श्रुतिः तस्याः श्रुतित्वाविशेषात् सा कथं बाध्येत ? विकल्पोऽस्त्विति चेन्न; प्रत्यक्षश्रुतिः स्मृतिनिष्ठकल्पकत्वशक्तिमेव निरुणद्धि । अतः प्रत्यक्षश्रुतिविरुद्धानां स्मृतीनामप्रामाण्यम् ॥

## ३. हेतुदर्शनाधिकरणम्

ज्योतिष्टोमे चतुर्थदिनेऽग्नीषोमीयः पशुरनुष्ठीयते । पशुतन्त्रस्यारम्भे वैसर्जनहोमो विहितः—'यजमानं तत्पत्नीं पुत्रान् भ्रातॄंश्चाहतेन

वाससा प्रच्छाद्य वाससोऽन्ते स्रुग्दण्डमुपनिबध्य जुहोति' इति। अयं होमो वैसर्जनहोमः कथ्यते। अवान्तरदीक्षाविसर्जनसम्बन्धी होमो वैसर्जनहोमः। यजमानादयोऽन्वारब्धाः क्रमशस्तिष्ठेयुः। तेषामुपरि बृहद्वासो धारयन्ति; तदधः क्रमेणेमे तिष्ठन्ति। वाससोऽन्ते स्रुग्दण्डमुपनिबध्यायं होमोऽनुष्ठीयते। तदिदं वासः प्रकृत्य स्मरन्ति---'वैसर्जनहोमीयं वासोऽध्वर्युः प्रतिगृह्णाति' इति। इदमेवास्याधिकरणस्य विषयवाक्यम्। किमिदं प्रमाणं न वेति संशयः। पूर्वाधिकरणे श्रुतिविरुद्धानां स्मृतीनामप्रामाण्यं साधितम्। अस्याः स्मृतेः विरोधिका श्रुतिः कापि नास्ति। अस्याः प्रामाण्यस्वीकारे काऽनुपपत्तिः। अतः प्रमाणमियं स्मृतिरिति पूर्वपक्षे प्राप्ते,

सिद्धान्त उच्यते--विरुद्धश्रुत्यभावेऽपि नेयं स्मृतिः प्रमाणम्, अध्वर्युपदघटितत्वेन लोभमूलकत्वमस्याः स्मृतेरिति कल्पनं कथं रोद्धुं शक्यते। लोभेन प्रेरितः कश्चनाध्वर्युरिमां स्मृतिं प्रवर्तयामासेति कुतो न वक्तुं शक्यते? यदि 'वैसर्जनहोमीयं वासोऽध्वर्यवे दद्यात्' इति श्रूयेत तर्हि लोभमूलकत्वकल्पनाया अवसरो न स्यात्, विधिश्रवणात्। अत एवञ्जातीयकानां लोभादिमूलकानां स्मृतीनामप्रामाण्यम्॥

## ४. शिष्टाकोपाधिकरणम्

पूर्वस्मिन्नधिकरणे लोभादिमूलकस्मृतीनामप्रामाण्यं साधितम्। सम्प्रति ताः स्मृतयो विचार्यन्ते याश्च विरुद्धश्रुतिरहिताः लोभादिकारणरहिताश्च, किन्तु श्रुतिबोधितक्रम-काल-परिमाणानां बाधिकाः। यथा-- 'क्षुते आचामेत्' 'उपवीतविस्रंसने आचामेत्' 'जञ्झभ्यमान आचामेत्' इत्यादयः। इमा हि स्मृतयः श्रौतं क्रमं कालं परिमाणञ्च बाधन्ते। तथाहि--'वेदं कृत्वा वेदिं करोति' इति वेदकरणानन्तर्यरूपं क्रमं वेदिकरणस्य बोधयति। 'पूर्वाह्णो वै देवानाम्' इति दैविककर्मानुष्ठानाय पूर्वाह्णकालं विधत्ते। दर्शपूर्णमासादिषु एतावन्तः पदार्था इति पदार्थानां परिमाणं नियतं विद्यते। तत्र वेदो नाम शयानवत्सजान्वाकृतिविशिष्टो दर्भमुष्टिः कथ्यते। तन्निर्माणानन्तर्यं वेदिकरणस्य क्त्वाप्रत्ययश्रुत्या ज्ञायते। वेदवेदिकरणयोर्मध्ये नैमित्तिकमाचमनं यदि प्राप्नुयात्

तदा वेदवेदिकरणयोः क्रमो बाधितो भवति। एवमाचमननिमित्तभूयस्त्वे पूर्वाह्णः कालः पदार्थानां परिमाणश्च बाधिते भवतः। एतादृशस्मृतीनां प्रामाण्यमप्रामाण्यं वेति विचारे पूर्वपक्षी वदति--न प्रामाण्यमिति। क्रमकालपरिमाणानां श्रुतिः प्रमाणम्, आचमनस्य च स्मृतिः। श्रुतिस्मृत्योः श्रुतिर्बलीयसी। बलीयसा प्रमाणेन बोधितानां क्रमकालादीनां दुर्बलप्रमाणबोधितेनाचमनेन बाधो न युक्तः, प्रमाणयोर्मध्ये श्रुतेः प्राबल्यात्। अतो निमित्तवशात्कर्तव्यत्वेन प्राप्तमाचमनं न कर्तव्यम्, दुर्बलेन प्रमाणेन बोधित्वादप्रमाणमाचमनस्मृतिरिति।

सिद्धान्त उच्यते--द्वयोः प्रमाणयोः द्वयोश्च प्रमेययोः प्राबल्यदौर्बल्यविचारे प्रसक्ते प्रमाणबलाबलनिर्णयापेक्षया प्रमेयबलाबलनिर्णयस्यैव ज्यायस्त्वम्--'प्रमाणबलाबलात्प्रमेयबलाबलं ज्यायः' इति न्यायात्। श्रुति प्रमाणस्य प्रमेयं क्रमकालादिकं पदार्थाश्रितम्। स्मृतिप्रमाणस्य प्रमेयम् आचमनम् पदार्थः। पदार्थापेक्षया तदाश्रितस्य दौर्बल्यम्। पदार्थो धर्मी, तदाश्रितस्तु धर्मः। धर्मो विशेषणं भवति धर्मी च विशेष्यम्। धर्मिणं विहाय धर्मो न तिष्ठति। एवञ्च क्रमकालादयो धर्माः धर्म्याश्रिता इति धर्मिण आचमनस्य प्राबल्यं निर्णीय पश्चात्प्रमाणबलाबलस्य प्रसक्तिः। प्रमेयगतप्राबल्ये निर्णीते प्रमाणबलाबलमकिञ्चित्करम्। आचमनादिषु पदार्थेष्वागतेषु क्रमकालादीनां सम्बन्ध इत्याचमनस्य श्रौतक्रमादिना विरोधो नास्ति। विरोधाभावाच्चाचमनस्मृतेः प्रामाण्यं सिध्यति॥

## ५. यववराहाधिकरणम्

स्मृतिप्रामाण्याप्रामाण्यविचारं परिसमाप्याधुना शब्दप्रयोगरूपमाचारं विचारयति। 'यवमयश्चरुर्भवति' इत्यत्र यवशब्दः कैश्चन प्रियङ्गुधान्येषु प्रयुज्यते, अपरैश्च दीर्घशूकेषु। एवं 'वाराही उपानहावुपमुञ्चते' इत्यत्र वराहशब्दः कैश्चन कृष्णशकुनौ प्रयुज्यते, अपरैश्च सूकरे। अत्र कस्यार्थस्य ग्रहणम्, कस्य चार्थस्य त्याग इति संशयः। अनादिकालात् शब्दव्यवहारस्य प्रवृत्तत्वेन विकल्पेनार्थद्वयेऽपि शब्दप्रयोग उपपन्न इति पक्षे प्राप्ते,

उच्यते----शब्दव्यवहारोऽर्थावबोधक इति न्याये सत्यपि यस्य

तत्तद्विधिवाक्यशेषानुगुण्यमस्ति स एवार्थो ग्राह्यः । यवशब्दार्थनिर्णये--'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति' इति वाक्यशेषो निर्णायकः । इतरसस्यानां म्लानतादशायां दीर्घशूकानामेवोत्थानमनुभूयते । अतो यवा दीर्घशूका एव न तु प्रियङ्गवः । एवं 'वराहं गावोऽनुधावन्ति' इति वाक्यशेषानुसारेण वराहशब्दः सूकरवाची न तु कृष्णशकुनवाची, पक्षिणा सह गवामनुधावनासम्भवात् । एवञ्च वाक्यशेषानुसारेण यववराहशब्दयोरर्थनिर्णयः कर्तव्यः ॥

### ६. पिकनेमाधिकरणम्

यवादिशब्दानां वाक्यशेषानुसारेणार्थो ग्राह्य इति प्रतिपाद्य सम्प्रति यं शब्दं क्वाप्यार्या न प्रयुञ्जते म्लेछास्तु क्वचिदर्थे प्रयुञ्जते तत्र किं तस्य शब्दस्य निगमनिरुक्तव्याकरणादिना प्रकृतिप्रत्ययकल्पनाद्वारा निर्गलितोऽर्थो ग्राह्यः ? उत म्लेच्छप्रसिद्धार्थ एव ग्राह्यः ? इति संशये, म्लेच्छा धर्मबुध्या शब्दान् न व्यवहरन्ति, यथा तथा वाऽर्थावबोध एव तेषामभिनिवेश इति हेतोस्सोऽर्थो न ग्राह्यः, किन्तु निगमनिरुक्तव्याकरणैर्वैदिकपरिगृहीतैः प्रकृतिप्रत्ययकल्पनाद्वारा सिद्धस्यैवार्थस्य ग्रहणमुचितमिति पूर्वपक्षे प्राप्ते,

सिद्धान्तः—म्लेच्छप्रसिद्धार्थस्य ग्रहणे यदि कश्चन विरोधस्स्यान्नूनं सोऽर्थो न ग्राह्यः । विरोधाभावे म्लेच्छव्यवहारस्य ग्रहणे का हानिः ? यथा पिकशब्दव्यवहारः कोकिले म्लेच्छैः क्रियते । आर्यैः क्वापि न क्रियते, लौकिकव्यवहारे तस्यार्थस्यापेक्षाभावात् । म्लेच्छानान्तु पिकानां ग्रहणे, पञ्जरेषु तेषां बन्धने, विक्रयणे चापेक्षा विद्यते । तेषाञ्च कोकिले पिकशब्दव्यवहारः प्रचलति । अतो म्लेच्छव्यवहारस्यापि प्रमाणत्वमङ्गीकर्तव्यम् । निगमनिरुक्तव्याकरणादिकन्तु सन्देहे वा विरोधे वा प्राप्ते तन्निर्णायकत्वेन नेतुं शक्यते । प्रकृते च न सन्देहः नापि विरोध इति म्लेच्छव्यवहृतेः प्रमाणत्वमिति ॥

### ७. कल्पसूत्राधिकरणम्

शब्दव्यवहारे म्लेच्छव्यवहृतेरपि प्रामाण्यं व्यवस्थाप्याधुना कल्पग्रन्थानां सूत्रग्रन्थानाञ्च वेदवत्प्रामाण्यमङ्गीकर्तव्यम् ? उत वेदमूल-

कत्वेन प्रामाण्यम् ? इति विचार्यते । आपस्तम्बाश्वलायनादीनां ये कल्पग्रन्थाः सूत्रग्रन्थाश्च ते प्रायः वेदानुपूर्वीघटिता एव सन्ति । यथा वेदानामध्ययनं गुरुमुखोच्चारणानूच्चारणरूपं क्रियते, तथैव कल्पानां सूत्राणामपि क्रियते । यथा वेदानामध्ययनेऽनध्यायादिधर्मपरिपालनं तथा कल्पसूत्रग्रन्थानामप्यध्ययने । अतः कल्पसूत्राणि वेदवत्प्रमाणानीति पक्षे प्राप्ते,

सिद्धान्तः--कल्पसूत्रग्रन्था न वेदाः, किन्तु वेदमूलकाः । क्रतूनां प्रयोगग्रन्थाः कल्पशब्देन, प्रयोगाणां सूचनाय प्रवृत्ता ग्रन्थाः सूत्रशब्देन व्यवह्रियन्ते । तत्तन्महर्षिप्रणीतत्वेनेमे ग्रन्थाः स्मर्यन्ते । नात्र वेदवदस्मर्यमाणकर्तृकत्वमस्ति । अत इमे पौरुषेयाः वेदमूलकाश्च । क्रत्वनुष्ठातॄणां सौकर्याय महर्षिभिर्निर्मिताः । गुरुमुखोच्चारणानूच्चारणविधयाऽध्ययनं नियमपरिपालनञ्च वेदमूलकत्वादुपपद्यते । अत इमे ग्रन्था वेदमूलकत्वेन प्रामाण्यभाजः, न वेदत्वेन । क्वचिद्वेदेन विरोधे प्राप्ते विरोधाधिकरणन्यायेनाप्रामाण्यमेव सिध्यति । वेदेन क्वचन विरोधे प्रसक्ते नात्र तुल्यबलत्वेन विकल्पतया नयनमङ्गीक्रियते । कल्पसूत्रेषु च वेदविरोधे जाते यावन्मूलोपलम्भम् अप्रामाण्यमेव । अतो वेदमूलकत्वेन कल्पसूत्राणां प्रामाण्यमास्थेयम् ॥

## ८. होलाकाधिकरणम्

तत्तद्देशभेदेन प्रवृत्तानामाचाराणां तत्तद्देशव्यवस्थया प्रामाण्यमङ्गीकर्तव्यम् उत सार्वदेशिकत्वेन प्रमाण्यमिति विचारोऽस्मिन्नधिकरणे क्रियते । उत्तरभारते होलिकोत्सवः; दक्षिणभारते मकरसङ्क्रमणे उद्वृषभयज्ञः; अर्काश्वत्थशमीवटादिवृक्षाणां पूजनं क्वचिद्देशेऽनुष्ठीयते । एवं स्मृतिनिबन्धग्रन्था देशभेदेन प्रणीता उपलभ्यन्ते । किमेतेषां तत्तद्देशीयैरेव प्रामाण्यमभ्युपेयमिति व्यवस्था ? उत व्यवस्थायां प्रमाणाभावात् सर्वत्र सर्वेषां तुल्यं प्रामाण्यमिति सन्देहे--प्राचीदक्षिणाप्रतीच्योदीचीति दिशां भेदेन देशानां भिन्नत्वात् तत्तद्देशनिवासिभिरनुष्ठीयमानानामाचाराणां प्रामाण्यं व्यवस्थयैव सिध्यति । एवं स्मृतिनिबन्धग्रन्थानामपि प्रामाण्यं व्यवस्थितमेवेति पूर्वपक्षे प्राप्ते,

सिद्धान्तः--होलाकादीनां व्यवस्थया प्रामाण्यं नास्ति । आचाराणां स्मृतिश्रुतिकल्पनाद्वारा प्रामाण्यं वक्तव्यम् कल्प्यमानायां स्मृतौ श्रुतौ वा प्राच्यदाक्षिणात्यादिपदानां सन्निवेशः कर्तव्यः । तत्र के प्राच्याः के दाक्षिणात्या इति प्रश्ने तन्निर्वचनं दुष्करम् । प्राचीं गतः प्राच्यः, प्राच्या आगतः प्राच्यः प्राच्यामुद्भूतः प्राच्यः इत्यादिनिर्वचनं व्यभिचरितं भवति । अतः प्राच्यादीनां निर्वक्तुमशक्यत्वात् व्यवस्थितं प्रामाण्यं न सिध्यति इति सार्वत्रिकं प्रामाण्यं फलति ॥

## ९. व्याकरणाधिकरणम्

प्राच्यदाक्षिणात्यादयो निर्वक्तुमशक्या इति प्रतिपाद्येदानीं शब्दसाधुत्वं निर्वक्तुं शक्यं न वेति विचार्यते । तदर्थं व्याकरणं प्रमाणं न वेति विचारणीयम् । यदि व्याकरणं प्रमाणं तर्हि साधुत्वं निश्चेतुं शक्यम् । यदि च तन्न प्रमाणं साधुत्वनिर्णयो न स्यात् । अतो व्याकरणं प्रमाणं न वेति सन्दिह्यते । मूलाभावान्न प्रमाणम् । न च 'साधूनेव प्रयुञ्जीत नासाधून्' इति कल्पितश्रुतिः प्रमाणमिति वाच्यम्, साधुत्वस्य प्रत्यक्षाद्यगम्यत्वात् अनादिवाचकत्वं अर्थप्रतीतिजनकत्वञ्च गाव्यादिष्वपि सत्त्वात् । अतो व्याकरणं न प्रमाणम्, गोगाव्यादयस्सर्वे साधवः प्रयोगार्हाश्चेति पक्षे प्राप्ते,

सिद्धान्तः--'न म्लेच्छित वै म्लेच्छो ह वा एष यदपशब्दः' इति प्रमाणेनापशब्दप्रयोगो निन्दित इति प्रतीयते । तेन 'साधूनेव प्रयुञ्जीत नासाधून्' इति, गवादय एव साधवो न गाव्यादय इति च कल्पनं सुकरम् । साधुत्वञ्चानादित्वे सति वाचकत्वम् । गाव्यादिशब्दानां साधुशब्दोपस्थापनद्वाराप्यर्थबोधकत्वोपपत्तेर्न दोषः । साधुस्वरूपं व्याकरणेन क्रियत इति व्याकरणं प्रमाणम् ॥

## १०. लोकवेदाधिकरणम्

वाचकस्वरूपतत्साधुत्वनिर्णयानन्तरं वाच्यस्वरूपनिर्णयः प्राप्तावसरः । तदुपोद्घाततया लौकिकवैदिकशब्दतदर्थानामनन्यत्वं प्रसाध्यते । वैदिकशब्देषु स्वरच्छान्दसवर्णागमलोपादिदर्शनात् लौकिकशब्देषु च तदभावात् 'इमे लौकिका' 'इमे वैदिका' इति व्यवहाराच्च शब्देषु भेदः

परिदृश्यते। यथा—देवा अग्निरित्यादयशशब्दा वेदेऽन्तोदात्तस्वरघटिताः पठ्यन्ते, लोके च शब्दानां स्वरेष्वनादरः। वेदे 'तानि धर्माणि' इति रूपम् लोके च ते धर्मा इति, वेदे 'देवासः' 'ब्राह्मणासः' इति लोके च देवाः ब्राह्मणा इति, वेदे 'त्मना' इति लोके चात्मना इति भेदर्शनात् शब्दभेदः। एवमर्थभेदोऽपि। वेदे उत्तानवहनशीला गावः कथ्यन्ते, लोके च गावोऽश्वाश्चो वहन्ति। वेदे च वनस्पतयो हिरण्यपर्णा भवन्ति; लोके च न तथा। एवं शब्दार्थयोर्भेददर्शनात् लौकिकवैदिकशब्दार्थौ भिन्नाविति पूर्वपक्षे,

सिद्धान्तः—उभयत्र शब्दानामर्थानाञ्च न भिन्नत्वम्, प्रत्यभिज्ञादर्शनात्। क्वचिद्वर्णलोपतदागमदर्शने सत्यपि तत्रैव भेदः स्वीक्रियते न सर्वत्र। वैदिकशब्दानां क्वचिद्रूपभेदे सत्यपि अर्थाभेदेनैकत्वमवगम्यत एव। अतो लोकवेदयोः शब्दतदर्थाः भिन्ना न भवन्ति॥

## ११. आकृत्यधिकरणम्

सम्प्रति वाच्यो विचार्यते—किं शब्दस्यार्थो व्यक्तिः उताकृतिरिति। शुक्लां गां ब्राह्मणाय दद्यात् इत्यत्र गुणक्रियाकारकाणां सम्बन्धो व्यक्त्या घटते न जात्या। एवं गौः शुक्लः, इति सामानाधिकरण्यं व्यक्त्यैव भवितुमर्हति। अतो व्यक्तिरेव शुद्धा विशिष्टा वा शब्दस्य वाच्येति पूर्वपक्षे प्राप्ते,

सिद्धान्तः—'नागृहीतविशेषणाबुद्धिर्विशिष्टमुपसङ्क्रामति' 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायेन प्रथमतः प्रतीतिविषयां जातिमुल्लङ्घ्य व्यक्तेर्वाच्यत्वस्वीकारो न युक्तियुक्तः। अनेकासु गोव्यक्तिषु शक्तिग्रहोऽपि दुर्घटः। अतो जातेर्वाच्यत्वं स्वीकृत्य लिङ्गसङ्ख्याकारकाणां सम्बन्धो लक्षितव्यक्त्या कल्पयितुं शक्यते। जातिस्तु व्यक्त्यविनाभावेन तिष्ठतीति जात्या व्यक्तिराक्षेप्तुं शक्यते। न च व्यक्त्यैव जातिराक्षिप्यतामिति वाच्यम्, पूर्वोक्तन्यायविरोधात्। तस्माज्जातिरेव वाच्या॥

वार्तिककारमतेन विरोधाधिकरणमारभ्य पिकनेमाधिकरणपर्यन्तं नयाः भिद्यन्ते। तथाहि—विरोधाधिकरणे 'औदुम्बरी सर्वा वेष्टयितव्या'

इति स्मृतिः 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुत्या बाधिता सती अप्रमाणमित्युक्तं प्राक्। अप्रामाण्ये हेतुरुक्तः--स्मृतेः विरुद्धप्रत्यक्षश्रुतौ विद्यमानायां श्रुतिकल्पकत्वशक्तिरेव कुण्ठिता भवतीति। तेन सर्वथाऽप्रामाण्यं तस्याः स्मृतेः। अत्र वार्तिककारा अभिप्रयन्ति-कल्पकत्वशक्तिः स्मृतेः कथं कुण्ठिता भवेत्? स्मृत्यन्तरेष्विव कर्तृसामान्यरूपहेतोरत्रापि सत्त्वात्। अतः स्मृतिमूलभूतप्रत्यक्षश्रुत्युपलम्भपर्यन्तं स्मृतेरस्या अननुष्ठानलक्षणमप्रामाण्यं स्वीकार्यम्। प्रत्यक्षश्रुत्युपलम्भानन्तरं द्वयोः श्रुत्योः समबलत्वात् विकल्प इति व्यवस्था। श्रुत्यनुमाने चानुमितप्रत्यक्षश्रुत्योर्विकल्पो न युज्यते-प्रत्यक्षत्वेनानुमितत्वेनोभयोस्तुल्यबलत्वाभावात्। तदिदमुच्यते—

**'वार्तामात्रेण तद्यावत्तावन्नैव ग्रहीष्यते।**<br>
**यदा तु श्रवणं प्राप्तं तदाऽस्मान्न विशिष्यते॥**<br>
**अतश्चैवं श्रुतिस्मृत्योर्विशेषोऽनेन दर्श्यते।**<br>
**नात्यन्तमेव बाध्यत्वं न चाप्यत्यन्ततुल्यता॥ इति।**

(तं० वा० पृ० १९४ पूना सं०)

अत एतादृशस्थले श्रुतिबोधितेऽर्थे द्राग्विस्रम्भः कर्तव्यः॥

'वैसर्जनहोमीयं वासोऽध्वर्युः प्रतिगृह्णाति' इति स्मृतेर्लोभमूलकत्वं प्रदर्श्याप्रामाण्यमुक्तं प्राक्। वार्तिककाराः प्रकारान्तरेणाधिकरणं योजयन्ति। 'अध्वर्युः प्रतिगृह्णाति' इत्यध्वर्योः श्रवणमात्रेण लोभमूलकत्वकल्पनं न हृदयङ्गमम् श्रुतिष्वप्येतादृशपदघटितानि वाक्यानि समुपलभ्यन्ते-अध्वर्यवे ददाति, होत्रे ददाति इत्यादीनि। अत इदं परित्यज्य वेदबाह्यैर्विरचितानां ग्रन्थानां प्रामाण्यमस्ति न वेति विचारशरीरं दर्शयन्ति वार्तिककाराः। शाक्यादिवेदबाह्यैः प्रणीतेषु ग्रन्थेषु अहिंसासत्यवचनदमदानदयादयः श्रुतिस्मृतिसंवादिनः कतिपये विषया उपनिबद्धा दृश्यन्ते। इमे च मन्वादिस्मृतिष्वपि विलोक्यन्ते। अतो मन्वादिस्मृतिवत् कर्तृसामान्यरूपहेतुना बाह्यग्रन्थानां प्रामाण्यं भवतु इति पक्षे प्राप्ते,

सिद्धान्त उच्यते—कर्तृसामान्यात् इति हेतोः वेदोदितकर्मानुष्ठाने ग्रन्थप्रणयने च कर्तृसामान्यं विलोक्य मन्वादिस्मृतीनां प्रामाण्यं

साधितम् । शाक्येषु तु ग्रन्थकर्तृत्वमस्ति वेदोदितकर्मानुष्ठानकर्तृत्वं नास्तीति कथं कर्तृसामान्यहेतुना शाक्यग्रन्थानां प्रामाण्यं वक्तुं शक्यम् आचारे विगानदर्शनात् । अत्र च लोकोपसङ्ग्रह-लाभ-पूजा-ख्यात्यादि-हेतवो दृश्यन्ते । त्रयीविपरीताचरणञ्च दृश्यते, म्लेच्छाचारमिश्रण-भोजनाचरणञ्च दृश्यते । अहिंसासत्यवचनादिप्रदर्शनञ्च पूर्वोक्त हेतुकम् । अत आचारे विगानदर्शनात् बाह्यशास्त्रं नापेक्ष्यम् अप्रमाण-मिति ॥

शिष्टाकोपाधिकरणाक्षेपपरिहारत्वेन पूर्वाधिकरणशेषतया व्याख्याय 'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्' इति सूत्रं सदाचारप्रामाण्य-परत्वेन वार्तिककारा विचारितवन्तः । शिष्टैः परिगृहीतेष्वाचारेषु कतिपयेषु व्यतिक्रमदर्शनात् शब्दमूलत्वाच्च धर्मस्य वेदविरोधे चानपेक्ष-त्वात् अप्रामाण्यमाचाराणामिति पक्षे प्राप्ते,

सिद्धान्तः—दृष्टकारणहीनानि शिष्टैरनुष्ठीयमानानि यानि कर्माणि तानि धर्मत्वेन ग्राह्याणि । शिष्टैः परिगृहीतेष्वाचारेषु कर्मसु च कर्तृसामान्यरूपहेतोस्सत्वात्स्मृतिवत् धर्मत्वमिष्यते । शिष्टता च सदाचारनिमित्ता न भवति किन्तु वेदविहितकारित्वाच्छिष्टत्वम् । अतो धर्मबुध्याऽनुष्ठीयमानानां शिष्टाचाराणां प्रामाण्यमिति ॥

शब्दानामर्थविषये यत्र सन्देहः तत्र वाक्यशेषेण निर्णय इति 'सन्दिग्धेषु वाक्यशेषात्' ( जै० सू० १.४.२४ ) इत्यत्र कृतत्वेन यववराहादिशब्दानां वाक्यशेषद्वारैवार्थनिर्णयस्य कृतत्वात् वाक्य-शेषाधिकरणेनैव गतार्थत्वात् वार्तिककाराः शब्दान्तरमुदाहृत्याधिकरणं प्रवर्तितवन्तः । तत्र पीलुशब्दार्थविषये म्लेच्छानामार्याणाञ्च विप्रति-पत्तिः । म्लेच्छाः पीलुशब्दं गजे प्रयुञ्जते आर्यास्तु वृक्षे । अत्र कतरोऽर्थो ग्राह्य इति संशयः । अदृष्टार्थेषु कर्मसु आर्या विशिष्टा भवेयुः । शब्द-व्यवहारश्च यथाऽऽर्यैरनादिकालतया क्रियते तथा म्लेच्छैरपि क्रियते । शब्दव्यवहारश्च दृष्टार्थो भवति । अर्थावबोधाय शब्दव्यवहारः क्रियते । स चार्थावबोध उभयत्र तुल्यः । अतः पील्वादिशब्दानां वृक्षहस्त्यादि-बोधने समबलत्वमिति म्लेच्छप्रसिद्धार्थोऽपि ग्राह्य एवेति पक्षे प्राप्ते,

सिद्धान्त उच्यते—शब्दव्यवहारोऽर्थावबोधायेति सत्यपि म्लेच्छ-व्यवहारे वाचकभ्रान्तेरस्त्यवसरः, धर्मबुध्या न ते शब्दान् व्यवहरन्ति। यथा शब्दापभ्रंशे न तेषां सङ्कोचः, तथाऽर्थापभ्रंशेऽपि। शास्त्रस्था आर्यास्तु अविप्लुतार्थक्रियानिमित्तपुण्यार्थिनः। अत आर्याः शब्दार्थ-व्यवहारेऽभियुक्ताः म्लेच्छास्तु न तथा। अभियुक्तानभियुक्तज्ञानयोर भियुक्तज्ञानं बलवदिति म्लेच्छानां व्यवहारत आर्याणां व्यवहृतिः प्रबलेति ॥

'तेष्वदर्शनात्समा विप्रतिपत्तिस्स्यात्' 'शास्त्रस्था वा तन्निमित्त-त्वात्' इति सूत्रद्वयं पीलुशब्दार्थनिर्णयपरतया पूर्वं वार्तिककारा योजित वन्तः। तदेव सूत्रद्वयं विषयान्तरेऽपि योजयन्ति बुद्धिवैशद्याय। स्मृति-नामाचाराणाञ्च मिथो विरोधे किं समप्राधान्यमुभयोः ? अथवा स्मृति र्बलीयसी ? इति विचारशरीरम्। तत्र स्मृत्याचारविरोधे द्वयोरपि मूलं वेदवाक्यं समानम्। यथा स्मृतिः स्वप्रामाण्यसिद्धये मूलं वेदं कल्पयति तथाऽऽचारोऽपि वेदं कल्पयति, वैदिकपरिगृहीतृत्वस्योभयत्र तुल्यत्वा-दिति पक्षे प्राप्ते,

सिद्धान्तः—'शास्त्रस्था वा तन्निमित्तत्वात्' ( जै. सू. १.३.९ ) इत्यनेन सूत्रेणोभयोः श्रुतिमूलत्वं सममिति निराक्रियते। स्मृतयो हि सप्रत्ययप्रणीताः सोपनिबन्धनाश्च, ताभिः श्रुत्यनुमानं निर्विघ्नमुप-जायते। आचारैस्तु स्मृतिं ज्ञात्वा श्रुतिः कल्पनीया। अत आचाराणां प्रामाण्यं द्व्यन्तरितम्। स्मृत्याचारविरोधावसरे चिन्तेयं क्रियते। तत्र स्मृतौ सप्रत्ययप्रणीतत्वं सोपनिबन्धनत्वञ्चानुभूयते। अतस्सा झटिति श्रुतिं कल्पयितुं समर्था। आचारस्य तु निबन्धनं नोपलभ्यते अपि च स्मृत्या विरुध्यते। अत आचारेण स्मृतिः कल्पनीया, तदनु श्रुतिरिति ततः प्रामाण्यम् इति द्व्यन्तरितं प्रामाण्यं भवति। येषामाचाराणां मूल-भूता श्रुतिरुपलभ्यते अपि च स्मृतिर्नास्ति तत्राचाराणां श्रुतिकल्पना-व्यापार एव नास्तीति तेषां श्रुतिमूलत्वेनैव प्रामाण्यं, तत्र स्मृतिकल्पनाया नावश्यकता। अतो विरुद्धस्मृतिमूलकानामाचाराणामप्रामाण्यमिति ॥

पूर्वोक्तं सूत्रद्वयं प्रकारान्तरेण वर्णितं वार्तिककारैः। येषां शब्दानां लौकिकेषु वैदिकेषु चार्थविप्रतिपत्तिः तत्र का व्यवस्थेति चिन्त्यते। यथा

लौकिकाः त्रिवृच्छब्दं त्रैगुण्यार्थे, चरुशब्दं स्थाल्याम्, अश्ववालशब्दम् अश्वानां बालेषु व्यवहरन्ति। वैदिकास्तु त्रिवृच्छब्दम् ऋङ्नवके, चरुशब्दमोदने अश्ववालशब्दञ्च काशेषु व्यवहरन्ति। शब्दव्यवहारे आर्यम्लेच्छयोः विशेषाभावात् समा प्रतिपत्तिर्भवत्विति पक्षे प्राप्ते,

सिद्धान्तः—आर्याणां प्रतिपत्तिः शास्त्रस्था; अतः सैव ज्यायसी। धर्मसाधनत्वेनार्याः पदार्थानुपाददते, म्लेच्छास्तु केवलं व्यवहाराय पदार्थानुपाददते। त्रिवृच्छब्दः स्तोत्रियानवकं प्रति प्रयुक्तः 'त्रिवृद्बहिष्पवमानम्' इति। एवं चरुशब्द ओदने प्रयुक्तः, 'आदित्यः प्रायणीयश्चरुः' इति विधाय पश्चात् 'अदितिमोदनेन' इत्योदने प्रयुक्तः, तथा 'आश्ववालः प्रस्तरः' इत्यश्ववालं प्रस्तरे विधाय 'यज्ञो वैदेवेभ्योऽश्वो भूत्वाऽपाक्रामत् सोऽपःप्राविशत्, स वालधौ गृहीतः त वालान्मुक्त्वा विवेश, ते वालाः काशतां गताः' इति वाक्यशेषेण काशेष्वश्ववालशब्दः प्रयुक्त इति शास्त्रकल्पितत्वाद्धर्मं प्रति आर्यव्यवहारस्य बलीयस्त्वं सिध्यति। न च 'सन्दिग्धेषु वाक्यशेषात्' इत्यधिकरणेनास्य गतार्थत्वं शङ्क्यम्; आर्यम्लेच्छप्रसिद्धिद्वयस्यासन्दिग्धत्वात्। अतः त्रिवृच्छब्देन स्तोत्रियानवकम्, चरुशब्देनौदनम्, अश्ववालशब्देन काश इत्यर्थो ग्राह्य इति॥

इति प्रथमाध्यायस्य तृतीयः पादः

# अथ चतुर्थः पादः

## १. उद्भिदादिशब्दानां प्रामाण्याधिकरणम्

प्रथमाध्यायप्रथमाधिकरणेनैव स्वाध्यायाध्ययनविध्युपात्तत्वेन कसलस्य वेदस्य धर्मे प्रामाण्यं सिद्धम्, तथापि कथं प्रामाण्यमिति जिज्ञासायां विधीनां प्रयोजनवदर्थविधानेनेति प्रथमपादे; द्वितीयपादे चार्थवादानां विधेययागादौ प्राशस्त्यज्ञानजनकत्वेन, मन्त्राणां प्रयोगसमवेतार्थप्रकाशकत्वेन, इति प्रामाण्यप्रकारविशेषः प्रतिपादितः। तत्र विधिवाक्यप्रामाण्यसाधनेनैव तदेकदेशानां नामधेयानामपि प्रामाण्यं साधितं भवति, तथापि नाम्नां प्रामाण्यप्रकारविशेषो न प्रतिपादित इति वार्तिककाराः प्रामाण्यप्रकारविशेषप्रदर्शनायास्मिन्नधिकरणे 'उद्भिदा यजेत पशुकामः' 'चित्रया यजेत पशुकामः' 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति वाक्यान्युदाहृत्य विचारयन्ति। उद्भिच्चित्राग्निहोत्रादयश्शब्दाः विधेयानां यागहोमादीनां परिच्छेदकतया अर्थवन्त इति सिद्धे यागहोमादिसङ्कल्पे, ऋत्विजां वरणादौ च नाम्नामुपयोगस्सिध्यति॥

## २. उद्भिदधिकरणम्

एवं नाम्नां विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वे सिद्धे नामत्वाङ्गीकारे निमित्तं किमिति निरूपणीयम्। तत्र चत्वारि सन्ति निमित्तानि-मत्वर्थलक्षणाभीतिः, वाक्यभेदभीतिः, तत्प्रख्यशास्त्रम्, तद्व्यपदेशश्चेति। तेषु मत्वर्थलक्षणाभीत्या उद्भिच्छब्दस्य नामत्वमस्मिन्नधिकरणे साध्यते। उद्भिच्छब्द उपलक्षणम् विधिवाक्येषु विद्यमानानां यौगिकशब्दानाम्। अतोऽस्मिन्नधिकरणे यौगिकशब्दा एवोदाहरणम्। तत्रोदाहरणम्—'उद्भिदा यजेत पशुकामः' इति विधिवाक्यगत उद्भिच्छब्दः उत् ऊर्ध्वं भिद्यतेऽनेनेति व्युत्पत्त्या विदारणसाधनं खनित्रादिकमाचष्टे। अस्मिन् वाक्ये उद्भिच्छब्दः खनित्ररूपगुणवाचकः उत कर्मनामवाचक इति संशयः। यौगिकव्युत्पत्त्योद्भिच्छब्दस्य खनित्रपरत्वमङ्गीकृत्य तं गुणं यागोद्देशेन फलोद्देशेन वा विधत्ते। तत्र ज्योतिष्टोमयागस्य पूर्वं भावित्वात् ज्योतिष्टोमवाक्येन प्राप्तं यागमुद्दिश्य उद्भिद्गुणो विधातुं

शक्यते । अथवा गुणफलसम्बन्धविधिः—उद्भिदा गुणेन पशून् भावयेदिति पक्षे प्राप्ते,

सिद्धान्तः—यागोद्देशेनोद्भिद्गुणविधाने फलपदमनर्थकम् । फलोद्देशेन गुणविधाने धातुपारार्थ्यम् । विधिवाक्येषु धातोरुपादानं स्वार्थतया तदा परिगण्यते यदा तस्य भावनायां साध्यत्वेन वा साधनत्वेन वाऽन्वयः । फलोद्देशेनोद्भिद्गुणविधाने विधेयता गुणे उद्देश्यता च फले इति धातोस्तदुभयं नास्तीति धातुः परार्थस्स्यात् । किञ्च ज्योतिष्टोमस्योद्देश्यतापि न सम्भवति, प्रकरणविच्छेदात्, ज्योतिष्टोमस्योद्भिद्यागस्य च मध्ये बहूनामसम्बन्धिपदार्थानां व्यवधानात् । अनदनीयस्य खनित्रादेर्यागोद्देशेन विधानानुपपत्तेश्च । अनदनीयत्वेऽपि विधिबलाद्विधिरित्युच्येत तर्हि उद्भिद्गुणविशिष्टयागस्य फलोद्देशेन विधानमङ्गीकर्तव्यम् । तथा सति उद्भिद्वता यागेन पशून् भावयेदिति मत्वर्थलक्षणा स्यात् । उद्भिच्छब्दस्य यागनामत्वाङ्गीकारे न मत्वर्थलक्षणा उद्भिन्नामकेन यागेन भावयेदिति बोधोपपत्तेः । अतो मत्वर्थलक्षणाभियोद्भिच्छब्दस्य कर्मनामत्वमिति ॥

## ३. चित्राधिकरणम्

वाक्यभेदभीत्या नामत्वं चित्राशब्दस्य व्यवस्थाप्यते । तथा हि—'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इति सप्तद्रव्यकप्रजापतिदेवताको यागो विहितः । तत्र 'चित्रया यजेत पशुकाम' इति श्रूयते । तत्र चित्राशब्दो रूढया चित्रत्वगुणबोधक इत्यविवादम् । तेन स गुणो विधीयते । चित्रयेत्यत्र प्रत्ययेन स्त्रीत्वस्य बोधितत्वात् स्त्रीत्वस्य च प्राणिद्रव्यकयागे निवेष्टुमर्हत्वात् प्राणिद्रव्यकयागानाम् अग्नीषोमीयपशुयागस्य प्रकृतित्वात् तदङ्गपशूद्देशेन चित्रत्वगुणो विधीयते । अर्थात् अग्नीषोमीयपशुं चित्रगुणयुक्तं विधाय यष्टव्यमिति सम्पद्यते । न च तदुद्देशेन चित्रत्वविधाने वाक्यगतस्य 'पशुकाम' पदस्य वैयर्थ्यमिति वाच्यम्, तस्य यजमानगतपश्वर्जनकामनानुवादकत्वात् । अतो गुणसमर्पकश्चित्राशब्दः । एवं 'पञ्चदशान्याज्यानि' 'सप्तदशानि पृष्ठानि' इत्यादीनाम् 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' इति वाक्यप्राप्त-

स्तोत्राण्यनूद्याज्यपृष्ठरूपगुणविधायकत्वम् । यद्यपि आज्यस्य सङ्ख्यायाश्च सम्बन्धो न भवति, तथापि पात्रालक्षणया पञ्चदश पात्रेष्वाज्यं निक्षिप्य स्तोत्राणि कर्तव्यानि; एवं पृष्ठशब्दः शरीरावयववाची । सप्तदशसङ्ख्याकपृष्ठप्रदर्शकपुरुषान् नियुज्य स्तोत्राणि कर्तव्यानि इति पक्षे प्राप्ते,

सिद्धान्तः——नामधेये निमित्तं वाक्यभेदः । अग्नीषोमीयपश्वनुवादेन चित्रत्वं स्त्रीत्वञ्चेत्युभयविधाने वाक्यभेदाच्चित्राशब्दो नामधेयम् । न च चित्रत्वस्त्रीत्वविशिष्टकारकविधिस्सम्भवति, 'पशुना यजेत' इत्युत्पत्तिवाक्येनैव कारकस्य प्राप्तत्वात् । किञ्चोत्पत्तिशिष्टपुंस्त्वावरुद्धे एवं 'कृष्णसारङ्गोऽग्नीषोमीयः' इति विहितकृष्णसारङ्गत्वरूप गुणावरुद्धे च तस्मिन् चित्रत्वस्त्रीत्वयोर्विधानं न सम्भवति । न च चित्रयेति स्त्रीलिङ्गेन मेषीमनूद्य तत्र चित्रत्वमात्रविधाने न वाक्यभेदः; नाप्युत्पत्ति शिष्टपुंस्त्वावरोधविरोध इति वाच्यम् एकप्रसरताभङ्गापत्तेः एकस्मिन्नेव पदे उद्देश्यत्वोपादेयत्वयोर्विरोधात् । विरोधानङ्गीकारे फलसम्बन्धस्यापि विधेयत्वाद्वाक्यभेदः । न च पशुकामपदं पश्वर्जनकामनानुवादकमिति युक्तम्, सर्वत्र कमिपदघटितपदैः फलबोधकत्वदर्शनात्, अनुवादत्वे वैयर्थ्यात् । अतः दधिमध्वादिवाक्यविहितेष्टेः विचित्रद्रव्यकत्वात् तस्या नामधेयं चित्रापदम् । एवमाज्यपृष्ठवाक्येषु स्तोत्रानुवादेन द्रव्यसङ्ख्ययोर्विधौ वाक्यभेदः । अतः 'यदाजिमीयुस्तदाज्यानामाज्यत्वम्' 'आपो वा ऋत्विजमाच्छन्' इत्याद्यर्थवादानुरोधादुत्पत्ति वाक्ये आख्यातसामानाधिकरण्यादाज्यपृष्ठशब्दयोः नामधेयत्वमङ्गीकर्तव्यमिति ॥

## ४. तत्प्रख्याधिकरणम्

'अग्निहोत्रं जुहोति' 'आधारमाधारयति' इत्यग्निहोत्राधारशब्दयोः नामत्वमत्र प्रसाध्यते । नामत्वे तत्प्रख्यशास्त्रं निमित्तम् । तथाहि——'आधारमाधारयति' 'अग्निहोत्रं जुहोति' इत्यत्राधाराग्निहोत्रशब्दयोः गुणसमपर्कत्वम् उत नामत्वमिति संशयः । आध्रियते क्षार्यतेऽनेनेति विग्रहेणाधारशब्दस्य क्षरणसमर्थद्रव्यमर्थः । क्षरणसमर्थश्च द्रव्यमाज्यम् ।

तस्य क्षारणसंस्कारोऽनेन वाक्येन विधीयते---आघारेण क्षारणेन आघारमाज्यं संस्कुर्यादिति वाक्यस्यार्थः। संस्कृतस्याधारस्य द्रव्यस्य कुत्रोपयोग इत्यपेक्षायामुपांशुयाजे विनियोग इति ब्रूमः। ननूपांशुयाजे 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशुपौर्णमास्यां प्रायच्छत्' इत्यनेनैवाज्यस्य प्राप्तत्वात् आधारवाक्यस्य काऽऽवश्यकतेति वाच्यम्, 'तावब्रूताम्' इति वाक्ये कालमात्रविधानस्वीकारात्। तस्मादाधारवाक्ये गुणविधिः।

एवमग्निहोत्रशब्दस्याग्नौ होत्रम् अग्नये होत्रमिति व्युत्पत्तिमङ्गीकृत्याधिकरणरूपगुणसमर्पकत्वम् देवतारूपगुणसमर्पकत्वं वेति पक्षे प्राप्ते,

सिद्धान्तः--'वाक्यार्थविधिरन्न्याय्यः श्रुत्यर्थविधिसम्भवे' इति न्यायेन श्रुत्यर्थस्य धात्वर्थस्याधारस्य विधिसम्भवे वाक्यार्थस्य गुणस्य विधानं न युक्तम्। आधारपदञ्चाङ्पूर्वात् घृधातोर्भावघञन्तम् उपसर्गवशात् क्षारणरूपहोमस्य वाचकं न द्रव्यवाचकम्। तथा चाघारसंज्ञकेन होमेन संस्कुर्यादित्यर्थः पर्यवस्यति। संस्कार्यस्य कुतः प्राप्तिरिति चेत्, चतुर्गृहीतं वा एतदभूत्तस्य' इत्यनेन प्राप्त चतुर्गृहीतद्रव्यस्येति ब्रूमः। तथा च वाक्यस्यायमर्थः--जुह्वां प्रयाजार्थं यच्चतुर्गृहीतं तदेकदेशेनाधाराख्यं कर्म निर्वर्त्यानन्तरं प्रयाजाः कर्तव्या इति। इदं द्रव्यप्रख्यापकं शास्त्रम्। 'इत इन्द्र ऊर्ध्वोऽध्वर' इत्यनेन विनियुक्तमन्त्रवर्णेन देवताप्राप्तिः। तथाचेन्द्रदेवताकेनाज्यद्रव्यकेणाधारसंज्ञकहोमेन संस्कुर्यादिति वाक्यार्थे पर्यवसन्ने आघारशब्दः तत्प्रख्यशास्त्रान्नामधेयमिति सिध्यति।

एवमग्निहोत्रं जुहोतीत्यत्रापि विधित्सितस्याग्निरूपाधिकरणस्य प्रापकं शास्त्रं 'यदाहवनीये जुहोति' इति; देवतारूपाग्नेश्च प्रापकं 'यदग्नये च प्रजापतये चे'ति विधिवाक्यम्, अथवा 'अग्निर्ज्योतिर्ज्योतिरग्निः' इति मन्त्रवर्णः। अनेन तत्प्रख्यशास्त्रेणाग्निहोत्रशब्दो होमस्य नामधेयमिति॥

## ५. तद्व्यपदेशाधिकरणम्

'श्येनेनाभिचरन् यजेत' इत्यत्र श्येनपदं नामधेयम्। तत्र निमित्तं तद्व्यपदेशः। व्यपदेशो नामोपमानम्। उपमानोपमेयभावान्यथानुप-

पत्त्या श्येनपदं नामधेयम् । तथाहि---'श्येनेनाभिचरन् यजेत' इत्यत्र श्येनपदं गुणसमर्पकं वा नामधेयं वेति संशये श्येनशब्दस्य विहगे रूढत्वात् यजेश्च प्रकृतज्योतिष्टोमपरत्वात् ज्योतिष्टोमसाधनेन श्येनेनाभिचारं शत्रुवधं कुर्यादिति श्येनशब्दस्य गुणपरत्वमेवेति पक्षे प्राप्ते,

सिद्धान्तः—नात्र श्येनशब्दो गुणसमर्पकः, कर्मनामैव तद्व्यपदेशात् । तस्माद् विधेयत्वेनाभिमतात् श्येनात् व्यपदेशः भेदेनाभिधानं यत्र तत् तद्व्यपदेशमिति बहुव्रीहिः । तादृशमभिधानञ्च 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इति । अत्र विधेयश्येनस्य-विहगस्य 'एवमयम्' इति प्रतीयमानं सादृश्यं कथमुपपन्नं स्यात् ? अत्र 'अयम्' इतीदंपदेन विधेयः श्येनो विहगः परामृश्यते । 'यथा वै श्येनः' इत्यत्र श्येन-शब्दो विहगस्य वाचकः । एकस्यैवोपमानोपमेयभावः कथं घटेत ? अतः श्येनः पक्षी यथा निपत्य मत्स्यादीनादत्ते तथा अयम् यागो द्विषन्तं भ्रातृव्यं शत्रुं निपत्यादत्ते इति इदंशब्देन यागे गृह्यमाणे उपमेयोपमान-भावस्सङ्गतो भवेत् । तस्माच्छ्येनपदं नामधेयमिति ॥

## ६. वाजपेयाधिकरणम्

'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र वाजपेयशब्दो गुणसमर्पकः उत कर्मनामसमर्पक इति संशयः । नामधेयत्वसाधने चत्वारि निमित्तानि पूर्वं प्रदर्शितानि । तेषु मत्वर्थलक्षणाभयाद् 'उद्भिदा यजेत' इत्यत्रोद्भि-च्छब्दो नामसमर्पक इति स्थितम् । मत्वर्थलक्षणास्वीकारे भावनायाम-न्वयानुपपत्तिर्बीजम् । धात्वर्थद्वारा भावनायाः करणाकाङ्क्षायां शान्ता-यामुद्भिदादेः करणत्वेनान्वयोऽनुपपन्न इति लक्षणाभयान्नामत्वमुद्भित्प-दस्य । तथा 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र वाजपेयशब्दार्थस्य गुणस्य नान्वयानुपपत्तिः । तथाहि—एकपदोपात्तत्वेन भावनया यजेः सम्बन्धमात्रं प्रतीयते । विशेषेण स सम्बन्ध आक्षेपेणैव प्रत्येतव्यः, कर्मत्व-करणत्वाश्रयत्वादिद्योतकसामग्र्यभावात् । आक्षेपावसरे तन्त्रेण कर्मत्वं-करणत्वञ्चाक्षेप्तुं शक्यते । तथा सति यागेन यागं भावयेत् इत्याक्षिप्य करणत्वावसरे फलसम्बन्धः, कर्मत्वावसरे गुणसम्बन्धश्चेति गुणस्यान्व-यस्सम्भवतीति नान्वयानुपपत्तिः, नापि विध्यावृत्तिः । तेन न मत्वर्थ-

लक्षणा, नापि वाक्यभेदः । न चात्र तत्प्रख्यशास्त्रम्, नापि तद्व्यपदेश-श्चातस्माद् वाजपेयशब्दः पेययोग्यान्नस्य वाचकः । तथा चैकेनैव वाक्येन वाजपेयेन यागं यागेन च फलं भावयेदिति वाजपेयशब्दो गुणसमर्पक इति पक्षे प्राप्ते,

सिद्धान्तः—सत्यं यजिपदस्य भावनया सम्बन्धमात्रं प्रतीयते, स च सम्बन्धः कर्मत्वेन करणत्वेन चाक्षेपद्वारा गम्यते; आक्षिप्तयोस्तयोर्भाव-नया विशेषसम्बन्धः, किन्तु सम्बन्धस्तन्त्रेण भवतु परमेकस्यापरेण सहान्वये पदजन्यपदार्थोपस्थितेरपेक्षा भवति । तादृश्यपेक्षाऽऽक्षेपद्वारा वक्तव्या । आक्षेपश्च भिन्नकाल एव—एकस्मिन्नाक्षिप्ते सत्यपरस्याक्षेप इति । एवञ्च कर्मत्वाक्षेपे यागे साध्यत्वमुद्देश्यत्वं प्राधान्यञ्च तिष्ठति; करणत्वाक्षेपे यागे विधेयत्वमुपादेयत्वं गुणत्वञ्च-तिष्ठति । इदं विरुद्ध-त्रिकद्वयमित्युच्यते । तन्त्रेण कर्मत्वेन करणत्वेन चान्वये एकस्मिन् यागे विरुद्धत्रिकद्वयमिदमापद्यते; तेन वैरूप्यम्, भिन्नकालामुपस्थितिं स्वी-कृत्यान्वये सति वाक्यभेदः । अतस्तन्त्रसम्बन्धोऽनुचितः । तस्मात् वाज-पेयपदं नामधेयं तत्प्रख्यशास्त्रात्, विधित्सितस्य वाजपेयस्य 'सुरा-ग्रहाश्च गृह्यन्ते' इति वाक्येन प्राप्तत्वात् इति ॥

## ७. आग्नेयाधिकरणम्

नामधेयापवादः क्वचित्प्रदर्श्यते । 'यदाग्नेयोऽष्टाकपालोऽमावा-स्यायां पौर्णमास्याञ्चाच्युतो भवति' इति श्रुते वाक्ये आग्नेयपदं नाम-समर्पकमुत गुणसमर्पकमिति सन्देहः । तत्र नामसमर्पकत्वमेव युक्तम्, अष्टाकपालद्रव्यस्य अमावास्यापौर्णमासीकालयोरित्यनेकेषां विधाने वाक्य-भेदापातः; बहुषु गुणेषु विधिविषयीभूतेषु विध्यावृत्तिं विना विधातुम-शक्यत्वात् । न च नामार्हकर्मविशेषस्यात्रानुपादानात् कथं अग्नेयपदं नामसमर्पकं स्यादिति वाच्यम्, अष्टाकपालशब्देन कर्मण आक्षेप्तुं शक्य-त्वात् । धात्वर्थानुरागमन्तरेण द्रव्यस्य भावनान्वयानुपपत्तेराक्षेपेण धात्वर्थ-लाभसम्भवात् । 'अग्निर्मूर्धा' इत्यादिमन्त्रवर्णेनाग्नेर्देवतायाः प्राप्तत्वात् अग्निहोत्रपदवदाग्नेयपदं नामधेयमिति पक्षे प्राप्ते,

उच्यते—अष्टाकपालशब्दोऽष्टसु कपालेषु संस्कृतस्य द्रव्यस्य

वाचकः, तस्य द्रव्यस्य भावनयान्वयः कर्मविशेषसम्बन्धं विनाऽनुपपन्न इति किञ्चित्कर्माक्षेप्तव्यम्, तदपेक्षया 'आग्नेयं' इति तद्धितान्तं पदं द्रव्यदेवतासम्बन्धं बोधयत्, यागमन्तरा द्रव्यदेवतासम्बन्धस्यानुपपन्नत्वात् तस्यैव यागबोधकत्वे सिध्यति किमित्यष्टाकपालपदेन तदाक्षेप्तव्यम्। नन्वाग्नेयपदेनापि याग आक्षेप्तव्य एवेति चेन्न; यथा यागमन्तरा द्रव्य-देवतासम्बन्धोऽनुपपन्नः, तथाऽष्टसु कपालेषु संस्कृतद्रव्यमन्तरा यागो नानु-पपन्न इति विनिगमकस्य सत्त्वात् आग्नेयपदं गुणसमर्पकमेव। न चैवं बहूनां गुणानां विधाने वाक्यभेद इति वाच्यम्, विशिष्टविध्यङ्गीकारात्। तस्मा-दाग्नेयपदं गुणसमर्पकमेव। न च गुणस्य प्रकारान्तरेण प्राप्तत्वात्कथं गुणसमर्पकमिति वाच्यम्, मन्त्रवर्णप्राप्त्यपेक्षया तद्धितान्तपदेन प्राप्तेर्बं-लीयस्त्वात्; 'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः। देवताया विधि-स्तत्र दुर्बलन्तु परं परम्; इति वार्तिकात्। अतोऽत्राग्निदेवताकाष्टाकपाल-द्रव्यकपौर्णमास्यमावास्याकालकर्तव्यताकेन यागेन भावयेदिति विशिष्ट-विधिस्सम्पद्यत इति ॥

## ८. बर्हिराज्याधिकरणम्

कर्मनामधेयविचारं समाप्य द्रव्यनामधेयविचारः प्रस्तूयते। अत्र 'बर्हिर्लुनाति' 'आज्यं विलापयति' 'पुरोडाशं चतुर्धा करोति' इत्यादौ बर्हि-राज्यपुरोडाशादयः शब्दाः किं लवनादिसंस्कारं निमित्तीकृत्य प्रवृत्ताः ? उत जातिं निमित्तीकृत्येति विचारशरीरम्। तत्रेमे शब्दास्संस्कारनिमि-त्तकाः। नात्र बर्हिः आज्यश्चोद्दिश्य लवनं विलापनं वा विधीयते किन्तु यूपं कर्तुं यथा वृक्षच्छेदनम् आहवनीयं कर्तुमाधानं विधीयते तथा बर्हिः कर्तुम् आज्यं कर्तुं लवनं विलापनञ्च विधीयते। अतस्संस्कारनिमित्तकौ बर्हिराज्यशब्दाविति पक्षे प्राप्ते,

सिद्धान्तः--न संस्कारनिमित्तकाविमौ शब्दौ। विनापि संस्कारं 'बर्हिरादाय गावो गताः, आज्यं क्रीणाति इत्यादि प्रयोगा जातिमादाय भवन्ति। यूपं कर्तुं वृक्षच्छेदनं आहवनीयं कर्तुमाधानमित्यत्र छेदनाधान-विधानतः पूर्वं यूपो भवति, अग्निमादधाति इत्येवं यूपाग्न्योः प्राप्ति-रस्तीति तत्र छेदनादिविधानं सङ्गतम्, तथा बर्हिर्भवति आज्यं भवति

इत्येवं प्राप्तिर्नास्ति । अतो लवनविलापनादयः संस्काराः जातिं निमित्तीकृत्य प्रवृत्तं बर्हिः आज्यञ्चोद्दिश्य विधीयन्ते, यथा ब्राह्मणं क्षत्रियं वैश्यञ्चोद्दिश्योपनयनं विधीयते । तस्माज्जातिनिमित्तका एवमादयश्शब्दा इति ॥

## ९. प्रोक्षण्यधिकरणम्

पूर्वाधिकरणापवादरूपेण प्रोक्षणीशब्दमुदाहृत्य विचार्यते । 'प्रोक्षणीरासादय' 'प्रोक्षणीरुत्पुनाति' इत्यत्र प्रोक्षणीशब्दः किं जातिनिमित्तकः ? आहोस्विद्यौगिकः ? इति संशये पूर्वाधिकरणन्यायेन जातिनिमित्तत्वं प्राप्तम्, प्रोक्षणीभिरुद्वेजिताःस्म इति लोके संस्कारविहीनास्वप्सु प्रयोगदर्शनात् । यद्यपि प्रोपसर्गकोक्षधातोः करणे ल्युटि व्युत्पन्नोऽयं शब्दो यौगिकः, तथापि रथकाराधिकरणन्यायेन योगाद्रूढेर्बलीयस्त्वाद्रूढ्यर्थ एव ग्राह्य इति पक्षे प्राप्ते,

उच्यते–अत्र स्त्रीलिङ्गबहुवचनश्रवणात् योग एवाश्रयणीयः, न तु रूढिः । अन्यत्र क्लृप्तैव रूढिर्योगस्य बाधिका । रथकारशब्दस्य त्रैवर्णिकातिरिक्तजातिविशेषे रूढिः क्लृप्ता, तथा प्रोक्षणीशब्दस्य क्वचिन्न रूढिः क्लृप्ता दृश्यत इति अवयवार्थसम्भवात् योग एवाश्रीयते । अत्रायं निष्कर्षः–यत्र रूढिसाधकं प्रमाणमुपलभ्यते तत्र रथकारादिशब्दे रूढिः, यत्र वाऽवयवार्थो न सम्भवति यथाऽश्वकर्णशब्दे तत्रापि रूढिरेव, यत्र चावयवार्थस्सम्भवति अपि च क्वचिदेव प्रयुज्यते यथा पङ्कजशब्दः तत्र योगरूढिः । प्रकृते च प्रोक्षणीशब्दस्याप्स्वजातौ रूढिबोधकं प्रमाणं नास्ति अवयवार्थश्च सम्भवति, आज्येऽपि प्रोक्षणशब्दप्रयोगदर्शनान्न पङ्कजशब्दवद्योगरूढिः किन्तु केवलयौगिक एवायं प्रोक्षणीशब्द इति ॥

## १०. निर्मन्थ्याधिकरणम्

पूर्वन्यायातिदेशः क्रियते । 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यत्र निर्मन्थ्यशब्दः किं जातिनिमित्तकः उत यौगिक इति संशये 'निर्मन्थ्यमानय ओदनं पक्ष्यामहे' इति प्रयोगदर्शनेन बर्हिराज्यादिशब्दवत् जातिवाची निर्मन्थ्यशब्दः । न च प्रोक्षणीशब्दवदस्य यौगिकत्वमिति वाच्यम्; वैषम्यात् । प्रोक्षणीशब्दस्य सर्वदा सेचनसाधनत्वाद्यौगिकत्वं युक्तम्, प्रकृते तु मन्थनकर्मत्वं निष्पत्त्यवस्थायां न सम्भाव्यते । निष्पन्ने चाग्नौ

निर्मन्थ्यशब्दः प्रयुज्यते। निष्पत्त्यवस्थायां या व्यक्तिः न सा निष्पन्नावस्थायां दृश्यते। अतो योगाभावेऽपि प्रयोगदर्शनेन जातिवाचित्वमेवास्येति प्राप्ते,

सिद्धान्तः—यथा प्रोक्षणीशब्दो यौगिकः तथाविध एव निर्मन्थ्यशब्दः निष्पन्नावस्थायामपि योगसत्त्वेन यौगिकत्वे बाधकाभावात्। निरित्युपसर्गवशात् अचिरत्वलाभेनाचिरमन्थनक्रियानिमित्तोऽयं निर्मन्थ्यशब्द इति॥

## ११. वैश्वदेवाधिकरणम्

चातुर्मास्येषु वैश्वदेवपर्वणि 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्' इत्यष्टौ यागान् विधाय 'वैश्वदेवेन यजेत' इति श्रुतम्। अत्र वैश्वदेवशब्दः किं गुणसमर्पकः? उत कर्मनामसमर्पक इति संशये—तद्धितान्तस्य वैश्वदेवशब्दस्य विश्वेदेवा देवता अस्येति विग्रहे कृते प्रकृताष्टाकपालादीनि द्रव्याणीदं शब्देन परामर्शात् वैश्वदेवशब्देनाभिधीयन्ते। द्रव्याणामाग्नेयादिवाक्यैरेव प्राप्तत्वात् उपसर्जनीभूता विश्वेदेवदेवता अनेन वाक्येन विधीयन्त इति स्वीकर्तव्यम्। यद्यपि तत्तदुत्पत्तिवाक्येऽग्न्यादिदेवतावरोधो वर्तते; तथापि देवतान्तरविधानात् विकल्पोपपत्तेः। अतो वैश्वदेवशब्दो गुणसमर्पक इति पक्षे प्राप्ते,

सिद्धान्तः—वैश्वदेवशब्दो नामसमर्पकः। नानेन देवता विधातुं शक्यते—तत्र उत्पत्तिवाक्येष्वग्न्यादीनां देवतानां सत्त्वात्। उत्पत्तिशिष्टगुणावरुद्धे कर्मणि उत्पन्नशिष्टगुणानां निवेशायोगात्। अतो वैश्वदेवशब्दो नामधेयम्। 'यद्विश्वे देवास्समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्त्वम्' इत्यर्थवादेन विश्वेदेवदेवताकर्तृकत्वस्य ज्ञायमानत्वात्तत्प्रख्यन्यायो नामधेये निमित्तम् इति॥

## १२. वैश्वानराधिकरणम्

'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इत्याहिताग्नेः पुत्रजनननिमित्तवैश्वानरेष्टिं विधायाम्नायते—'यदष्टाकपालो भवति गायत्रियेवैनं

ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति, यद्दश-कपालो विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मि-न्निन्द्रियं दधाति, यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति, यस्मि-ञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति। अत्र वैश्वानरवाक्यं नैमित्तिककर्मविधायकमिति स्पष्टम्। 'यदष्टाकपालो भवति' 'यन्नवकपालो भवति' इत्यादिवाक्येषु सन्देहः-- अष्टाकपालादयश्शब्दाः किं वैश्वानरयागस्य नामधेयानि? उताष्टा-कपालादिगुणविधयः? अथवा फलाय गुणविधयः? आहोस्विदर्थवादाः? इति। तत्र तत्प्रख्यन्यायेन द्वादशसङ्ख्यायामष्टत्वादीनामन्तर्भूतत्वमा-श्रित्य नामधेयत्वमष्टाकपालादीनामिति प्रथमः पक्षः। द्वादशकपालस्या-ष्टाकपालादयश्शब्दा नामधेयानि नार्हन्ति। द्वादशसु कपालेषु संस्कृतो द्वादशकपालः पुरोडाशो भवति, नासावष्टाकपालनवकपालादिशब्दैः व्यप-देष्टुं शक्यते, असामर्थ्यात् तद्धितानुत्पत्तेः। किञ्च सङ्ख्यावाचकानां न्यूना-धिकसङ्ख्याव्यवच्छेदकत्वं धर्मः, द्वादशकपालं' इत्यत्र द्वादशत्व-सङ्ख्याऽष्टत्वादीनां व्यवच्छेदिका। कथं तत्राष्टत्वादीनां प्राप्तिस्स्यात्? अतो न तत्प्रख्यन्यायस्यावसर इति गुणविधय एते। द्वादशकपालेन विरोधे सति अष्टाकपालादयो विकल्प्यन्त इति द्वितीयः पक्षः। नात्र विकल्पस्यावसरः, द्वादशकपालद्रव्यस्योत्पत्तिशिष्टत्वात्। न ह्येते सर्वे-ऽप्युत्पत्तिशिष्टा इति वक्तुं शक्यम्, यदाष्टाकपालः, यन्नवकपाल इति इत्येतेषां प्रथमान्तत्वात्। न चैषां द्वितीयान्ततया विपरिणाम इति वाच्यम्, 'भवति' इत्यस्यानन्वयापातात्। अतोऽष्टाकपालादिवाक्यानां द्वादशकपालयागस्तुतिपरत्वेन नयनं युक्तम्--महाभागोऽयं द्वादशकपालः, येन तदन्तर्गताष्टाकपालादीनामपि तत्तद्विशेषफलाधायकत्वादिति। किञ्चो-पक्रमोपसंहारैक्यवशेनैकवाक्यत्वे सति गुणविधित्वे वाक्यभेदापत्तेः स्ताव-कत्वमेव युक्तमितीमेऽर्थवादाः अवयवस्तुत्याऽवयवी स्तुतो भवतीति अष्टाकपालादिवाक्यैः द्वादशकपालः स्तूयत इति॥

## १३. तत्सिद्धिपटिका-तत्सिध्यधिकरणम्

गौणीप्रवृत्तिनिमित्ततया षट् निमित्तानि सूत्रकारेण निर्दिष्टानि।

तत्र तत्सिद्धिरेकं निमित्तम् । पूर्वमवयवस्तुत्याऽवयविनः स्तुतिः प्रदर्शिता । सम्प्रति प्रकारान्तरेण स्तुतिः प्रदर्श्यते । 'यजमानः प्रस्तरः' इति श्रुतम् । अत्र गुणविधिरर्थवादो वेति संशयः । प्रस्तरशब्दो दर्भमुष्टौ वर्तते, यजमानशब्दस्तु यज्ञानुष्ठातरि । अनयोरेकविभक्त्युपात्तत्वेन सामानाधिकरण्यं साधनीयम् । तत्र प्रथमश्रुतो यजमानशब्दोऽसञ्जातविरोधी प्रधानभूतः । 'गुणे त्वन्याय्यकल्पना' इति न्यायेन गुणभूतस्य प्रस्तरशब्दस्य तत्कार्यकारित्वे लक्षणामङ्गीकृत्य प्रस्तरकार्यकारित्वं गुणः यजमाने विधीयते । प्रस्तरकार्यश्च 'प्रस्तरे हवींष्यासादयति' इति हविरासादनम् । तत्कार्यं यजमानः कुर्यादिति पक्षे प्राप्ते,

सिद्धान्तः—प्रस्तरं दर्भमुष्टिं वेद्यामास्तीर्य तदुपरि हवींष्यासाद्यन्ते । हविषां धारणं प्रस्तरस्य कार्यम् । तच्चेद्यजमानोद्देशेन विधीयेत तर्हि यजमानं वेद्यां शाययित्वा तदुपरि हविषामासादनं कर्तव्यं स्यात्--'प्रस्तरे हवींष्यासादयति' इति । अन्यच्च प्रस्तरकार्यम्--'सूक्तवाकेन प्रस्तरं प्रहरति' इति कर्मसमाप्तिकाले प्रस्तरस्येदं प्रतिपत्तिकर्म यत्सूक्तवाकमन्त्रेण हविर्धारणे विनियुक्तस्य प्रस्तरस्याग्नौ प्रहरणं नाम । तदिदं कार्यं यजमानस्य स्याद्यदि तर्हि अग्न्याधानकाले पवनेष्टचनुष्ठानावसरे एवाहवनीये यजमानस्य प्रहरणे सति सर्वकर्मपरिलोपस्स्यात् । अतोऽगत्या यजमानशब्दस्य प्रथमश्रुतत्वेऽपि प्रस्तरस्तावकतयाऽर्थवादत्वाश्रयणं युक्तम् । कथं यजमानस्य प्रस्तरे वृत्तिरिति चेत् तत्सिद्धिः गुणाश्रय इति ब्रूमः । गुणः आश्रयो निमित्तं कार्यकारित्वयोगेन यजमानशब्दस्य प्रस्तरे वृत्तिरित्यर्थः । यजमानस्य कार्यं साङ्गप्रधानानुष्ठानम् । यजमानः स्वद्रव्यव्ययेन हविषां धारकः । प्रस्तरकार्यमपि यजमानकार्यमेवेति प्रस्तरे यजमानकार्यकारित्वमस्तीति यजमानशब्दस्य गौण्या वृत्त्या प्रस्तरे वृत्तिः । तथा च यजमानवत् क्रतुकार्यनिर्वर्तकत्वात् प्रशस्तः प्रस्तर इति स्तुतिबुद्धिर्भवति । अतोऽर्थवादो यजमानशब्द इति ॥

## १४. जात्यधिकरणम्

'अग्नि वै ब्राह्मणः' इत्यत्र पूर्ववदेव ब्राह्मणस्य स्तावकोऽग्निशब्दः । नात्र ब्राह्मणकार्येऽग्निर्विधातुं शक्यते--'ब्राह्मणान् ऋत्विजो वृणीते' इति विधिवैयर्थ्यापत्तेः, मन्त्रोच्चारणानुपपत्तेश्च । अतो होमादिनिर्वर्तकत्वं

यथाऽग्नौ वर्तते तथा ब्राह्मणेऽपि वर्तत इत्यग्निशब्देन गौण्या ब्राह्मणः स्तूयत इत्यर्थवादोऽयम्। प्रवृत्तिनिमित्तश्च-एकप्रभवता एकस्मात्प्रजापतेरुभयोरुत्पत्तिः। तथा च वाक्यशेषः--'प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीत; तमग्निर्देवताऽन्वसृज्यत, गायत्रीच्छन्दः रथन्तरं साम ब्राह्मणो मनुष्याणाम्' इति। प्रजापतिः स्रष्टुमारब्धः प्रथमं स्वमुखात् स्तोमेषु-स्तोत्रसङ्ख्यासु त्रिवृतं--नवसङ्ख्यां सृष्टवान्, तं त्रिवृतमनु अग्निम् छन्दस्सु गायत्रीं, सामसु रथन्तरं, मनुष्येषु ब्राह्मणम् इत्येवमेकमुखप्रभवत्वगुणयोगेनाग्निशब्दः स्तावकः॥

## १५. सारूप्याधिकरणम्

'यजमानो यूपः' इत्यत्रापि यूपकार्ये पशुनियोजनादौ यजमानो यदि विधीयेत तर्हि यूपविधिवैयर्थ्यात् यूपस्तावकतया यजमानशब्दो नेतव्य इति सिद्धान्तः। यजमानशब्दस्य यूपे वृत्तिस्तु सारूप्यात्—एकस्वरूपत्वादित्यर्थः। उभयोस्साधारणो धर्म इति यावत्। ऊर्ध्वत्वमुभयोरेकरूपत्वम्। पूर्वोदाहरणेष्वपि सारूप्यं कथञ्चिदस्ति तथापि तत्र सारूप्यमचाक्षुषम्; अत्र तु चाक्षुषमूर्ध्वत्वमिति भेदः। अतः एकस्वरूपत्वं निमित्तीकृत्य यजमानशब्दोऽर्थवाद इति॥

## १६. प्रशंसाधिकरणम्

'अपशवो वाऽन्ये गो अश्वेभ्यः पशवः' इति श्रूयते। गो अश्वेभ्योऽन्ये पशवः अपशव इति गवाश्वव्यतिरिक्तेष्वजादिषु पशुत्वं प्रतिषेधतीदं वाक्यमिति प्रतिभाति। प्रतिषेधश्चायुक्तः, लोके दोहनादौ प्रतिषेधो नोपपद्यते, वेदे चालम्भनादिकार्ये विहितत्वात्प्रतिषेधो नोपपद्यते। अतोऽस्य गौण्या वृत्त्या गोश्वेषु च विद्यमानप्राशस्त्ये तात्पर्यं वर्णनीयम्। तस्मादपशव इत्यर्थवादः॥

## १७. भूमाधिकरणम्

'सृष्टीरुपदधाति' इति चयने श्रूयते। सृजिधातुघटितमन्त्रोपधेया इष्टकाः सृष्टय उच्यन्ते। अत्र 'अग्निं चिन्वीत' इति चयनेनाक्षिप्तोपधानस्य; 'इष्टकाभिरग्निं चिनुते' इत्यनेनेष्टकानाञ्च प्राप्तत्वान्न विधानम् किन्तु सृजिमन्तो मन्त्रा एव विधीयन्त इति पक्षे प्राप्ते,

सिद्धान्तः—मन्त्रोऽपि नात्र विधेयः, चयनप्रकरणाधीतत्वेन प्राप्त-

त्वात् किन्तु कृत्स्नं वाक्यमनुवादः। ननु प्रकरणपठितेषु मन्त्रेषु न सर्वे सृजिधातुघटिताः, प्रथमचतुर्दशषोडशान्तिमेषु तदभावात् कथं सृष्टिशब्देनानुवाद इति चेत् गौण्या वृत्त्याऽनुवाद इति ब्रूमः। तत्र प्रवृत्तिनिमित्तं भूमा-बहुत्वमित्यर्थः। बाहुल्यं गौण्या वृत्त्या निमित्तमित्यर्थः। सृष्टचसृष्टिसमुदाये सृष्टिशब्दो वर्तते। तस्मात्सृष्टिशब्दोऽर्थवाद इति।

## १८. लिङ्गसमवायाधिकरणम्

तत्रैव चयने 'प्राणभृत उपदधाति' इति श्रूयते। प्राणशब्दघटित मन्त्रोपधेया इष्टका उपदधातीत्यर्थः। अत्रापि पूर्ववत् इष्टकानामुपधानस्य च प्राप्तत्वान्मन्त्रा विधीयन्त इति पक्षे प्राप्ते, सिद्धान्तः—प्रकरणपाठादेव मन्त्राणां प्राप्तत्वान्न तेऽपि विधेयाः। किन्तु प्राणभृच्छब्दः प्राणभृदप्राणभृत्सु गौणः। निमित्तञ्च लिङ्गसमवायः। लिङ्गं प्राणप्रतिपादनसामर्थ्यम्। तस्य समवायः सम्बन्धमात्रं निमित्तमित्यर्थः। यथा वनस्यैकदेशे पुष्पिते वनं पुष्पितमिति व्यवहारस्तथा मन्त्रसमुदाये क्वचित् प्राणप्रतिपादनसामर्थ्ये विद्यमाने समग्रस्समुदायः प्राणप्रतिपादनसमर्थ इत्याश्रीयत इति सर्वत्र प्राणभृच्छब्दप्रवृत्तिः। अयमेव छत्रिन्यायः कथ्यते। तस्मात्प्राणभृच्छब्दोऽर्थवाद इति।

## १९. वाक्यशेषाधिकरणम्

अर्थवादप्रसङ्गेन क्वचिदर्थवादानां प्रकारान्तरेण प्रामाण्यं प्रतिपाद्यते। 'अक्ताः शर्करा उपदधाति तेजो वै घृतम्' इति श्रूयते। शर्कराः क्षुद्रपाषाणाः। तासामञ्जनं कृत्वा वेद्यामुपधानं भवति। अञ्जनञ्च द्रवद्रव्येण क्रियते। द्रवद्रव्याणि घृततैलवसादिभेदेन नाना। तेष्वन्यतमेन केनाप्यञ्जनं कर्तव्यम्? उत घृतेनैवेति संशयः। तत्र विधेः प्राधान्यम् उपक्रमगतत्वात् प्रेरणात्मकशब्दभावनारूपत्वाच्च। अर्थवादस्तु शब्दभावनापेक्षितेतिकर्तव्यतासमर्पकत्वादुपसर्जनम्। प्रधानं विधिर्येन केनापि द्रवद्रव्येणाञ्जनमनुमन्यते, तदुपसर्जनेनार्थवादेन घृते सङ्कोचः कर्तुं न शक्यते। तथा सति विध्यवगताञ्जनसामान्यस्य बाधस्स्यात्। न चोपसर्जनेन प्रधानस्य बाधो युक्तः। तस्माद् घृततैलाद्यन्यतमेनाञ्जनं कर्तव्यम्; अर्थवादगतघृतपदं घृताघृतलक्षकत्वेन नेयमिति पक्षे प्राप्ते,

सिद्धान्तः—विधिर्यदि विशेषरूपेण किमप्यञ्जनद्रव्यं विदध्यात्

तर्हि उपसर्जनभूतार्थवादेन तस्य बाधो न युक्तः। अत्र तु विधिः सामान्यरूपेण घृतमपि अञ्जनसाधनमनुमन्यते, तदेव साधनमर्थवादः स्तौति इति न बाध्यबाधकभावः। किञ्च विधिः सामान्ये प्रवर्तको न भवति, न हि तादृशेन विधिना कश्चन प्रवर्तेत, तस्यामवस्थायामर्थवादो घृतं साधनं समर्पयन् विधिनिष्ठप्रवर्तकत्वोपष्टम्भको भवतीति अर्थवादगतघृतशब्दानुसारेण सामान्यविधेः घृतमात्रविषयत्वं निर्णेयमिति ॥

## २०. सामर्थ्याधिकरणम्

अर्थवादानां क्वचिदवयवस्य स्तावकत्वेन प्रामाण्यं क्वचिच्च सामान्यविधिनिर्णायकत्वेन प्रामाण्यं निरूप्य सम्प्रति विधेरपि विधायकत्वादन्येनापि प्रकारेण कार्यमस्तीति प्रदर्शयितुं विचारः क्रियते। तृतीये लिङ्गाधिकरणे शब्दगतसामर्थ्यविचारः, अत्र त्वर्थगतसामर्थ्यस्य विचार इति भेदः। क्रतुषु अवदेयानि द्रवसंहतकठिनरूपेण द्रव्याणि भवन्ति दधिपय आदीनि पुरोडाशादीनि मांसादीनि च। तेषामवदानसाधनानि 'स्रुवेणावद्यति,' 'हस्तेनावद्यति, 'स्वधितिनावद्यति' इति विधीयन्ते। कीदृशं द्रव्यं कीदृशेन साधनेनावदेयमिति एभिर्वाक्यैर्न गम्यते। किमत्राव्यवस्थया येन केनापि साधनेन यत्किमपि द्रव्यमवदेयम्? उत व्यवस्थयाऽवदेयमिति संशयः। तत्र 'अक्ताः शर्करा उपदधाति' इत्यत्र निर्णायको वाक्यशेष इवात्र निर्णायकस्याभावात् स्रुवादीनामव्यवस्थेति पक्षे प्राप्ते,

सिद्धान्तः---'आख्यातानामर्थं ब्रुवतां शक्तिस्सहकारिणी' इति न्यायेनाशक्येऽर्थे विध्यसम्भवेनावद्यतीत्यस्य सामर्थ्यानुसारेण सङ्कोच आवश्यकः। यस्य यत्र सामर्थ्यं तस्य तत्र साधनत्वमिति अर्थगतसामर्थ्यानुसारेण व्यवस्था स्वीकार्या। तेन स्रुवेण द्रवद्रव्यस्य, हस्तेन पुरोडाशस्य, स्वधितिना मांसस्येति व्यवस्थितिस्सिद्ध्यति ॥

इति म० म० चिन्नस्वामिशास्त्रिपादानामन्तेवासिना
**पट्टाभिरामशास्त्रिणा विरचितायां**
**मीमांसानयमञ्जर्याम्**
प्रथमोऽध्यायस्समाप्तः

# द्वितीयो भेदाध्यायः

## तत्र प्रथमः पादः

### १. प्रतिपदाधिकरणम्

प्रथमे प्रमाणाध्यायेऽलौकिकं धर्मं प्रत्यष्टौ प्रमाणानि विध्यर्थ-वादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाणि प्रतिपाद्य सर्वस्य वेदस्य प्रामाण्यप्रकारो निरूपितः। अस्मिन् भेदाध्याये पूर्वोक्तप्रमाणैः प्रमितस्य भेदाभेदविचारः प्रारभ्यते। तदर्थमुपोद्घाततया प्रथमः पादः तत्रापि द्वितीयभावार्थाधिकरणोपोद्घाततया प्रथमं प्रतिपदाधिकरणं प्रवर्तते। अत्र 'सोमेन यजेत' 'उद्भिदा यजेत पशुकामः' 'श्येनेनाभिचरन् यजेत' इत्युत्पत्तिवाक्यानि अधिकारवाक्यानि च सर्वाण्युदाहरणानि। अत्र किं श्रुतानां द्रव्यगुणक्रियानामपदानां फलसम्बन्धसिध्यर्थं सर्वाणि अपूर्व-कल्पनसमर्थार्थाभिधायकानि ? उत तेष्वेकमेव तादृशार्थाभिधायकम् ? इति संशये प्रधानान्वयस्याभ्यर्हितत्वेन सर्वेषां फलपदेनान्वयो युक्तः। एवमनङ्गीकारे द्रव्यगुणादीनां धात्वर्थे धात्वर्थस्य च फलेऽन्वयो भवेत्। तथा सति धात्वर्थस्य फलं प्रत्युपादेयत्वविधेयत्वगुणत्वानि, उपपदार्थान् प्रति उद्देश्यत्वानुवाद्यत्वप्राधान्यानीति विरुद्धत्रिकद्वयापत्तिस्स्यात्। तस्मात्सर्वेषां फलपदेनान्वय इति पक्षे प्राप्ते;

सिद्धान्तः---एकस्यैव फलपदेनान्वयः। यस्यान्वयस्तस्यैवापूर्वक-ल्पकत्वम्। प्रतिपदमपूर्वकल्पने गौरवात्। यस्य कस्याप्येकस्य फल-सम्बन्धे सति एकमेवापूर्वं कल्पनीयमिति लाघवम्। अन्यत्तु पदं यस्य फलपदेनान्वयस्तद्विशेषणतया कथञ्चित्सम्बन्धः कल्पनीयः। तस्मात्प्रति-पदमपूर्वं नास्तीति ॥

### २. भावार्थाधिकरणम्

यदैकमपूर्वस्य कल्पकं तदा तदेकं किमित्यत्र विचार्यते। किमुपपदम् उत धात्वर्थपदम् इति। उपपदस्य सोमादेः द्रव्यगुणादिरर्थः। स च सिद्धः। धात्वर्थस्तु क्रियारूपः, स चासिद्धः फलञ्च स्वर्गादि साध्यम्।

सिद्धः पदार्थ एव साध्यं साधयितुं क्षमः। साध्यो न हि साध्यं साधयितुं समर्थः। सिद्धं साध्यायोपदिश्यत इति न्यायात् सिद्धो द्रव्यगुणादिरेव साध्यस्य फलस्य साधको न धात्वर्थः। द्रव्यगुणादिः न साक्षात् फल-साधकः किन्त्वपूर्वद्वारा। तथा चोपपदमेवापूर्वस्य कल्पकमिति प्राप्ते,

सिद्धान्तः—भावार्थेभ्योऽपूर्वं कल्पनीयम्। भावो-भावना अर्थो येषां ते भावार्थाः क्रियाप्रतिपादकाश्शब्दाः—यजेत जुहुयादित्यादयः। तेभ्योऽ-पूर्वोत्पत्तिरित्यर्थः। यजेत इत्यादय एवापूर्वकल्पनासमर्थार्थप्रतिपादका इति भावः। सिद्धानां द्रव्यगुणादीनां स्वरूपेण साध्यसाधकत्वमनुपपन्नम्, क्रियासम्बन्धेन विना तेषां तादृशसामर्थ्याभावात्। धात्वर्थविशेषिता-नामेव सामर्थ्यात्। ननु धात्वर्थस्य क्रियारूपत्वात्, क्रियायाश्च साध्य-त्वेन साध्यान्तरं प्रति साधनत्वं कथमिति चेत्-फलोत्पत्तिकाले धात्वर्थस्य यागादेस्सिद्धत्वात्साधनत्वमव्याहतम्। तस्माद्भावार्थेभ्य एवापूर्वमिति।

ननु भावो-भावना अर्थो येषामिति व्युत्पत्त्या भावनारूपार्थप्रति-पादकत्वेन यजेत जुहुयादित्यादयश्शब्दाः प्रदर्शिताः। तत्र धात्वर्थाति-रेकेण यजेत जुहुयादित्यादौ भावनारूपार्थस्याप्रतीतेः कथं भावनारूपार्थ-प्रतिपादकत्वं भावार्थशब्दानां यजत्यादीनाम्। 'धात्वर्थः केवलश्शुद्धो भाव इत्यभिधीयते' इत्यभियुक्तोक्त्या भावशब्दस्य धात्वर्थोऽर्थः। तथा च धात्वर्थार्थकत्वं भावार्थशब्दस्य सिध्यति, कथं भावनार्थकत्वं तस्येति चेत्—अत्रेयं मीमांसकानां प्रक्रिया—धात्वर्थस्तु धातोर्वाच्यः, यजिधात्वर्थस्य वाचको यजिधातुः प्रत्ययरहितः। प्रत्ययसहिता इमे 'यजेत' 'जुहुयात्' इत्यादयश्शब्दाः भावार्थाः। तथाहि—यजेत जुहु-यात् इत्यादौ प्रकृतिप्रत्ययभेदेन भागद्वयम्। तत्र प्रत्ययेंऽशद्वयम्—लिङ्त्वम् आख्यातत्वञ्चेति। लिङ्त्वांशेन प्रत्ययः शाब्दीभावनां प्रवर्तनाम्, आख्यातत्वांशेन चार्थीभावनां—यत्नम् अन्योत्पादानुकूलात्म-व्यापारं वा मतभेदेनाचष्टे। द्वयोरपि भावनयोः किं केन कथ-मिति साध्यसाधनेतिकर्तव्यतारूपेण तिस्र आकाङ्क्षा जायन्ते। तत्र 'यजेत स्वर्गकामः' इत्यादौ आख्यातत्वावच्छिन्नप्रत्ययाभिहिताया आर्थीभावनायास्साध्याकाङ्क्षायां स्वर्गादेः फलस्यान्वयः; साधना-

काङ्क्षायां समानपदोपात्तधात्वर्थस्य यागादेरन्वयः, इतिकर्तव्यताकाङ्क्षायाञ्च प्रकरणपठितक्रियात्मकप्रयाजानूयाजादीनामन्वयः। तथा च प्रयाजादिभिरङ्गैरुपकृतेन यागादिना स्वर्गादिफलं भावयेत् इति बोधो जायते। नन्वार्थीभावनायास्साधनाकाङ्क्षायां धात्वर्थस्य यागादेस्साधनत्वेनान्वये यागादिनिष्ठसाधनतानिरूपितसाध्यता आर्थीभावनाया वक्तव्या। आर्थीभावना च प्रयोज्यनिष्ठप्रवृत्तिरूपा, सा च लिङ्त्वांशेनाभिधीयमानप्रवर्तनाजन्या। प्रवर्तना हि प्रवृत्त्यनुकूलव्यापारः। तया च प्रवृत्तिरेव भाव्यते। तथा सति धात्वर्थस्यार्थीभावनासाधनत्वं कथमिति चेन्न; अत्र साधनत्वं जन्यजनकभावरूपं नाङ्गी क्रियते, किन्तु भावनाभाव्यनिर्वर्तकत्वरूपपारिभाषिकसाधनत्वम्। आर्थीभावनाभाव्यस्वर्गादेर्निर्वर्तकत्वं यागादाविति समन्वयः। यागादेः क्रियारूपत्वेन क्षणिकत्वात् स स्वजन्यापूर्वद्वारा स्वर्गादिफलनिर्वर्तकः। अतोऽपूर्वस्य जनिः भावार्थेभ्यः। इयमंशत्रयोपेता आर्थीभावना प्रयोज्यप्रवृत्तिरूपा शाब्दीभावनायां प्रयोजकव्यापाररूपायां प्रवर्तनायां साध्यत्वेनान्वेति, लिङादिज्ञानं करणत्वेन, अर्थवादलक्षितप्राशस्त्यज्ञानमितिकर्तव्यतात्वेन। तथाचांशत्रयोपेतार्थीभावनाभाव्यका लिङादिज्ञानकरणिका प्राशस्त्यज्ञानेतिकर्तव्यताका शाब्दीभावनेति बोधस्सम्पद्यते। अत्रापि लिङादिज्ञानस्य करणत्वं पारिभाषिकं स्वभाव्यनिर्वर्तकत्वरूपं बोध्यम्।

ननु यज्यादिपदोत्तरं करणविभक्तेरश्रवणात् कथं यज्यादेर्धात्वर्थस्य करणत्वेनान्वय इति चेदित्थम्—पचति इत्युक्ते पाकं करोति इति, 'ओदनं पचति' इत्युक्ते पाकेनौदनं करोति इति लोके करोतिना विवरणमनुभवामः। अनेन विवरणेनोत्पद्यमानस्योत्पत्त्यनुकूल उत्पादककर्तृव्यापारः करोतेरर्थं इति पर्यवस्यति। भावयतेरप्ययमेवार्थः। अत एव 'पाकं करोति' 'पाकं भावयति' इति प्रयोग उपलभ्यते। सोऽयं कर्तृव्यापारो भावशब्देन भावनाशब्देन चोच्यते। स एव च प्रत्ययार्थः। अयमेव प्रकारः यजते जुहोति ददाति इत्यादौ। तथा चान्योत्पादानुकूलव्यापाररूपा भावनैव करोत्यर्थः आख्यातप्रत्ययवाच्या चेति सिद्धं भवति। सर्वत्र प्रायो धात्वर्थस्य द्वे रूपे—सामान्यं विशेष-

श्चेति । स्थाल्यधिश्रयणं मण्डावस्रावणं वा कुर्वति देवदत्ते देवदत्तः किं करोतीति प्रश्ने पचति इत्युत्तरं शृणुमः । अधिश्रयणमवस्रावणं वा पाकस्य विशेषरूपम्, अधिश्रयणाद्यवस्रावणपर्यन्तो व्यापारः सामान्यरूपः । यदा पाकस्य कर्मत्वेनान्वयः तदा पाकानुकूलाधिश्रयणादिव्यापारसमूहः पाकानुकूलो व्यापारः इत्येवमाख्यातप्रत्ययवाच्यः, किन्तु अधिश्रयणत्वादिधर्माणामनादरः । पाकेन आदेनं करोति इत्यन्वयदशायां पाकानुकूलव्यापारत्वेनाधिश्रयणादिव्यापारनिचयः न प्रत्ययवाच्यः, किन्त्वोदनोत्पत्त्यनुकूलव्यापारत्वेन सामान्यरूपेणैव व्यापारः प्रत्ययवाच्यः । अत्रापि विशेषधर्माणामधिश्रयणत्वादीनामनादरः । धात्वर्थः पाकः प्रत्ययवाच्ये व्यापारे करणम्; न त्वोदने, कारकाणां मिथोऽन्वयासम्भवात् । एवमेव 'यजेत स्वर्गकामः' इत्यत्र स्वर्गस्य फलस्य कर्मत्वात् तदनुकूलव्यापारत्वेनाग्न्यन्वाधानादिब्राह्मणतर्पणान्तो व्यापारनिचयः प्रत्ययेनाभिधीयते; विशेषधर्माश्च नाद्रियन्ते । तस्मिंश्च व्यापारे यागः करणम्, तस्य फलोद्देशप्रवृत्तकर्तृव्यापारनिष्पाद्यत्वात् । एवं निष्पन्नो यागस्सिद्धो भवति, सिद्धस्य च करणत्वं सङ्गच्छते । तत्सिद्धं धात्वर्थातिरिक्तं भावनास्वरूपम्; तत्र च धात्वर्थः करणम्, तस्माच्चापूर्वमिति ॥

## ३. अपूर्वाधिकरणम्

भावार्थेभ्योऽपूर्वमिति पूर्वाधिकरणे साधितम् । तदपूर्वमस्ति न वेति चिन्त्यते । प्रमाणाभावेन नास्त्यपूर्वम् । 'यजेत स्वर्गकामः' इत्यादौ स्वर्गादिफलं प्रति यागादिरुपदिश्यते । यागफलयोस्साध्यसाधनभावः शास्त्रगम्यः । ननु यागस्याशुतरविनाशित्वात् तन्निष्ठसाधनत्वान्यथानुपपत्त्याऽपूर्वं कल्प्यत इति चेन्न; अर्थापत्त्या कल्प्यमानस्यापूर्वस्य शास्त्रबोधितयागनिष्ठसाधनत्वविरोधित्वात् । अर्थापत्त्या तदेव कल्पनीयं यच्छास्त्राविरोधि । शास्त्रप्रामाण्यसिद्ध्यर्थं विनष्टस्य यागस्यैव स्वर्गसाधनत्वं कल्प्यताम् किमपूर्वेणेति पक्षे प्राप्ते,

उच्यते—अपूर्वमेव कल्पनीयम् । तच्च फलोत्पत्तिपर्यन्तावस्थायि । शक्त्यात्मनो व्यापारात्मनो वाऽपूर्वस्य यागनिष्ठसाधनत्वपरिपन्थित्वाभावात् न यागापूर्वयोर्विरोधः, प्रत्युत विनष्टस्य यागस्य फलसाधनत्व-

कल्पने सर्वप्रमाणविरोधः, एवमेवाशुतरविनाशिनो यागस्य यावत्कार्यारम्भावस्थानमपि सर्वप्रमाणविरुद्धम् । नन्वपूर्वस्य शक्तिरूपत्वे व्यापाररूपत्वे वाऽङ्गीकृते शक्तिमतो व्यापारवतो वा नाशे सति तदपूर्वं क्व तिष्ठेत् इति चेत्—यत्र वर्तमानं सत्कार्यं निर्वहेत् तत्रावस्थितं भविष्यतीति ब्रूमः । 'व्रीहीन् प्रोक्षति' इति विहितप्रोक्षणेन जायमानमपूर्वं व्रीहिष्ववस्थाय यागं निर्वर्तयद्यागजन्यापूर्वं प्रत्युपकारकं भवति । अप्रोक्षितैर्व्रीहिभिस्सम्पाद्यमानेन यागेन फलजनकमपूर्वमुत्पादयितुं न शक्यते । यथा लघोरेकस्य कीलस्य सम्बन्धेन विना बृहद् यन्त्रं कार्यक्षमं न भवति तथा लघुनाप्यङ्गेन विना यागः स्वर्गसाधनक्षमो न भवतीति सर्वेषामङ्गानां स्वस्वापूर्वद्वारा प्रधानेन साहित्यमावश्यकम् । सर्वस्य प्रधानयागस्य पूर्वाङ्गाणि उत्तराङ्गाणि च भवन्ति । प्रधानात्पूर्वं क्रियमाणाङ्गजन्यापूर्वाणां प्रधानजन्यापूर्वोत्पत्तावुपकारकत्वम्, उत्तराङ्गजन्यानाश्चोत्पन्नापूर्वस्थितावुपकारकत्वमिति विभागः । इमान्यङ्गापूर्वाणीति व्यपदिश्यन्ते । प्रधानयागजन्यान्युत्पत्त्यपूर्वाणीति कथ्यन्ते । अङ्गापूर्वाण्युत्पत्त्यपूर्वाणि च मिलित्वा फलजननसमर्थमपूर्वोत्पादकानि भवन्ति । तदेव परमापूर्वं कथ्यते । यत्रैकस्यैव कर्मणो नाना प्राधानयागा भिन्नकालानुष्ठेयाश्च यथा दर्शपूर्णमासयोः चातुर्मास्येषु च तत्र साङ्गतत्तत्प्रधानयागजन्योत्पत्त्यपूर्वाणां समुदायं परिकल्प्यैकैकस्मात्समुदायात् समुदायापूर्वं स्वीकृत्य समुदायापूर्वाणां साहित्येन परमापूर्वमेकं फलजननसमर्थं कल्प्यते । इदं समुदायापूर्वमिति व्यवह्रियते । ननु समुदायापूर्वाणामेव फलजनकत्वं कल्प्यताम् किमिति परमापूर्वं कल्पनीयमिति चेन्न, भिन्नकालोत्पन्नानां भिन्नसमुदायापूर्वाणां साहित्येन विना फलोत्पत्तौ फलानामप्यनेकत्वापत्तेः । एवञ्च तत्तदङ्गजन्यान्यङ्गापूर्वाणि तत्तत्प्रधानयागजन्यान्युत्पत्त्यपूर्वाणि, भिन्नकालानुष्ठेयैः प्रधानयागाजन्यैरुत्पत्त्यपूर्वैः समुदायापूर्वाणि, तैश्च समुदायापूर्वैः साहित्यं प्राप्तवद्भिः परमापूर्वमित्यपूर्वप्रक्रिया सिध्यति ॥

## ४. तानिद्वैधाधिकरणम्

आख्यातार्थो भावना, भावार्थेभ्यश्चापूर्वम्, फलजनकमपूर्वमस्ति इत्यादयो निरूपिताः । क्वचिद्भावार्थेभ्योऽपूर्वं नास्तीत्यपवादोऽस्मिन्न-

धिकरणे प्रदर्श्यंते । 'व्रीहीनवहन्ति' 'तण्डुलान् पिनष्टि' 'पिष्टानि संवपति' इत्यादीनुदाहृत्य विचार्यंते-किमत्र भावार्थेभ्योऽवधातादिभ्यो-ऽपूर्वमस्ति न वेति । यदि व्रीहिसाधनका अवधातादयस्तर्हि तत्साधन-कावधातादीनां दृष्टं प्रयोजनं नास्तीत्यवधातादिभ्योऽपूर्वम्, यदि च व्रीह्याद्यर्था अवधातादयस्तर्हि अवधातादीनां तुषविमोकादिदृष्टं प्रयो-जनमिति नास्त्यपूर्वम् । तत्र दृष्टवितुषीभावफलकावधातादेर्विधाने स्वीकृते तद्दृष्टं फलं लोकत एव लब्धुं शक्यमिति तद्विधानमनर्थकं स्यादित्यानर्थक्यपरिहारायादृष्टं परिकल्पनीयम्—अवधातादिना व्रीह्या-दिष्वदृष्टं सम्पादयेदिति । एवं सति अवधातादिविशिष्टद्रव्यविधानं पर्यवस्यति । तत्रावघातादेर्द्रव्यार्थत्वे द्रव्यविशेषणतयावधातादिविधि-वैयर्थ्यम् । एवञ्च द्रव्यादेकमदृष्टमवधातादेश्चापरमदृष्टमित्यदृष्टद्वयं स्वीकर्तव्यं स्यात् । तदपेक्षयाऽवधाताद्यर्था व्रीहय इति स्वीकृत्यैकस्या दृष्टस्य कल्पनं युक्तम् व्रीहीनिति द्वितीया तृतीयर्थे इति पक्षे प्राप्त उच्यते--

अवहननादिर्गुणः—गुणकर्मेत्यर्थः । यानि कर्माणि द्रव्यम् उत्पा-दयितुम् आप्तुं विकाराय संस्काराय वा क्रियन्ते तानि कर्माणि द्रव्या-पेक्षया गुणभूतानि भवन्ति । यानि कर्माणि द्रव्येण साध्यन्ते तानि कर्माणि प्रधानकर्माणि । यथा प्रयाजानूयाजादीनि । 'व्रीहीनवहन्ति' इत्यादौ द्रव्यं प्रत्यवधातादयः द्रव्यसाधनतया गुणभूताः । व्रीह्याद्यर्थत्वे-न विधीयमानस्यावधातादेर्विधौ नियमादृष्टमात्रं कल्पनीयम् । तदि-दमपूर्वं नावघातादिना कल्प्यते, किन्तु तन्नियमादिति क्रियाफलानु-निष्पाद्यत्वेन न तत् फलत्वेन व्यवहारयोग्यम् । अतोऽवधातादितो नास्त्यपूर्वमिति सिद्धम् ॥

## ५. गुणकर्माधिकरणम्

'व्रीहीन् प्रोक्षति' इत्यत्र पूर्ववदेव विचारः । पूर्वमवहननादेर्दृष्ट-फलजनकत्वेन द्रव्यार्थत्वमिति तस्य गुणकर्मत्वेऽपि प्रोक्षणस्य दृष्टप्रयो-जनजनकत्वाभावेनात्र भावार्थादपूर्वमिति पक्षे प्राप्त उच्यते—

गुणकर्मणां दृष्टफलजनकत्वं न प्रयोजकम्; किन्तु संस्कार एव प्रयोजकः । स च संस्कारो दृष्टफलकोऽपि भवत्यदृष्टफलकोऽपि । प्रकृते

प्रोक्षणेन द्रव्यं संस्कृतं भवति । अतो द्रव्यापेक्षया प्रोक्षणं गुणभूतम् । तस्माद्गुणकर्मैवेदमपि । स्रुचस्सम्मार्ष्टि इत्यप्युदाहरणं बोध्यम् ॥

### ६. स्तुतशस्त्राधिकरणम्

अत्र स्तोत्राणि शस्त्राणि चोदाहृत्य विचार्यते—किमिमानि गुणकर्माणि प्रधानकर्माणि वेति । यदि गुणकर्माणि तर्हि भावार्थेभ्यो नापूर्वम्, यदि वा प्रधानकर्माणि तर्हि तेभ्योऽपूर्वमिति फलफलिभावः । तत्र ज्योतिष्टोमे पञ्चमे सुत्यादिने सवनत्रयभेदेन द्वादशस्तोत्राणि तावन्त्येव शस्त्राणि विहितानि । एतेषां विधायकवाक्येषु 'स्तुवते' 'शंसति' इति भावार्थपदं वर्तते । 'स्तुवते' इति स्तोत्रविधायकम् 'शंसति' इति शस्त्रविधायकम् । स्तोत्रञ्च प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम्; शस्त्रञ्चाप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम् । अभिधानञ्च वाचोच्चारणम् । अभिधानक्रियया शाब्दबोधो जायते । तत्र गुणिनिष्ठगुणाभिधानपरयोः स्तोत्रशस्त्रयोः गुणिनो देवतायाः प्रकाशन एव मुख्यं तात्पर्यम् । इयञ्च रीतिर्याज्यापुरोनुवाक्यादिषु मन्त्रेष्वङ्गीक्रियते, तत्तद्देवतास्मारकत्वात् तेषाम् । तथैव स्तोत्रशस्त्रमन्त्राणामपि देवतास्मारकत्वेन याज्यामन्त्राणामिव देवतास्मारकत्वमेवास्तु । तथा च स्तोत्राणां शस्त्राणाञ्च देवतास्मरणरूपसंस्कारजनकत्वेन गुणकर्मत्वमिति पक्षे प्राप्त उच्यते—

स्तौतिशंसत्योः प्रधानकर्मत्वमेव । यथा पूषानुमन्त्रणमन्त्राणां दर्शपूर्णमासप्रकरणपठितानां दर्शपूर्णमासयोः पूषदेवताककर्माभावात् यत्र पूषदेवताकं कर्म तत्रोत्कर्षस्स्वीक्रियते तथा स्तोत्रशस्त्रमन्त्राणामप्युत्कर्षः कर्तव्यस्स्यात् यदि गुणकर्मत्वं स्वीक्रियेत, यागीयदेवतार्थत्वाद्गुणकर्मणः । याज्यापुरोऽनुवाक्यानुमन्त्रणमन्त्राद्यपेक्षया स्तोत्रशस्त्रमन्त्राणां महान् भेदः । तत्र तत्तद्देवताककर्मणि प्रवृत्ते समाप्ते चाऽध्वर्युणा हविरग्नौ प्रक्षेप्तव्यम्; यजमानेन च तां तां देवतामुद्दिश्यत्यागः कर्तव्यः । तदर्थं देवतास्मारणमावश्यकम् । तत्स्मारकत्वेन मन्त्राः पठचन्ते । यदि स्तोत्रशस्त्रयोः प्रधानकर्मत्वं तर्हि यागीयदेवतार्थत्वाभावान्न स्मरणस्यावश्यकता । अत एव च नोत्कर्षस्यावश्यकता । तस्मात्स्तौतिशंसती प्रधानकर्मणी इति ॥

### ७. विधिमन्त्राधिकरणम्

विधायकवाक्ये 'व्रीहीनवहन्ति' 'व्रीहीन् प्रोक्षति' इत्यादौ गुण-

कर्मत्वं 'बहिष्पवमानेन स्तुवते' 'आज्यं शंसति' इत्यादौ स्तुतशस्त्रयोः प्रधानकर्मत्वं प्रसाध्य सम्प्रति मन्त्रगतभावार्थानां विधायकत्वं वा उतान्यः प्रकारो वेति चिन्त्यते । मन्त्रेषु यत्तदादिशब्दघटितानि मध्यमोत्तमपुरुषादियुक्तानि सन्ति वाक्यानि 'देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिस्सचते गोपतिस्सह' अग्नीदग्नीन् विहर' 'बर्हिर्देवसदनं दामि' इत्यादीनि । एवं ब्राह्मणभागेषु 'यस्योभयं हविरार्तिमार्छति 'यद्याग्रयणेना निष्ट्वा नवान्नं प्राश्नीयात्' इत्यादीनि यच्छब्दयदिशब्दघटितानि । अत्र सन्देहः—किं सर्वाणीमानि विधायकानि उतानुवादकानीति । तत्र 'यजेत स्वर्गकामः' इत्यादिविधिवाक्येषु श्रुतानामाख्यातानां मन्त्रवाक्येषु श्रुतानाञ्च तेषामेकरूपत्वात् क्वचिद्विधायकत्वं क्वचिच्चानुवादकत्वमिति वैरूप्याश्रयणे प्रमाणाभावाद् अभेदप्रत्यभिज्ञानाच्च विधायकान्येवञ्जातीयकानीति पक्षे प्राप्ते,

सिद्धान्त उच्यते—मन्त्रगता आख्यातशब्दा न विधायकाः, किन्त्वनुवादकाः । 'देवांश्च याभिः' इति मन्त्रगतौ 'याभिस्ताभिः' इति यत्तच्छब्दौ पूर्वपरामर्शकाविति तावत् सिद्धं सर्वनामत्वात् । तेन प्राप्तार्थबोधकाविमौ शब्दावित्यङ्गीकर्तव्यम् । विधिश्चाप्राप्तमर्थं विधत्ते । एवञ्च विधिनिष्ठाप्राप्तार्थविधायकत्वशक्तिमिमौ शब्दौ प्रतिबध्नीतः । यत्तदादिशब्दानां विधिप्रतिबन्धकत्वं मानान्तरप्राप्तस्थल एव । यत्र तु 'यदाग्नेयोऽष्टाकपालोऽमावास्यायाम्' इत्यादौ यच्छब्दघटितत्वेऽपि न तस्य प्रतिबन्धकता, अप्राप्तार्थबोधकसामग्रीसत्त्वात् । तस्मान्मन्त्रगताख्यातानामनुवादकत्वमेव ॥

## ८. मन्त्रलक्षणाधिकरणम्

पूर्वाधिकरणे मन्त्रशब्दग्रहणात्तल्लक्षणं प्रसङ्गादत्र कथ्यते । प्रयोगोऽनुष्ठानम् तदर्थमनुष्ठेयपदार्थानामभिधानं ये कुर्वन्ति ते मन्त्राः अर्थात् प्रयोगसमवेतार्थस्मारकवाक्यत्वं मन्त्रलक्षणं पर्यवसन्नम् । इदञ्च लक्षणं जपमन्त्रेषु 'वसन्ताय कपिञ्जलानालभेत' इति मन्त्रत्वेनाभिमते वाक्ये चाव्याप्तम्; अतो वैदिकप्रसिद्धिविषयत्वं तल्लक्षणं स्वीकर्तव्यम् ॥

### ९. ब्राह्मणलक्षणाधिकरणम्

मन्त्रब्राह्मणात्मको वेदः । तत्र मन्त्रातिरिक्तो वेदभागो ब्राह्मणम्; ब्राह्मणातिरिक्तो वेदभागो मन्त्र इत्यापस्तम्बाचार्याः ॥

### १०. ऊहप्रवरादीनाममन्त्रत्वाधिकरणम्

'अग्नये जुष्टं निर्वपामि' इति निर्वापमन्त्रे दर्शपूर्णमासतोऽतिदेशतः सौर्येष्टौ समागते सति कर्मसमवेतार्थप्रकाशनाय 'अग्नये' स्थाने 'सूर्याय' इत्यन्यथानयनं क्रियते । अयमेवान्यथानयनव्यापार ऊहः । एवमार्षेय-वरणे 'असावसौ' इति स्थाने भार्गववैतहव्यसावेतस' 'भार्गवच्यावना-प्नवानौर्वजामदग्न्य' इत्यादयः शब्दाः प्रक्षिप्यन्ते । अयं प्रवरः कथ्यते । होतृवरणे 'असौ मानुषः' इति स्थाने होतुर्नामोच्चार्यते । तदेषामूह प्रवरनामधेयानां मन्त्रत्वमस्ति न वेति सन्देहे मन्त्रमध्यपतितत्वेनार्थ प्रकाशनरूपमन्त्रकार्यकरत्वस्यैतेषामपि सत्त्वात् मन्त्रत्वमक्षुण्णमिति प्राप्ते,

सिद्धान्तः—वेदे आम्नातानामेव मन्त्रत्वम् न त्वनाम्नातानाम् । इमे चोहप्रवरादयः पुरुषैः प्रक्षिप्यन्ते; तेषां सत्यपि मन्त्रैकवाक्यत्वे तन्न मन्त्रत्वप्रयोजकम् । अतो न मन्त्रा ऊहप्रवरादय इति ॥

### ११. ऋग्लक्षणाधिकरणम्

प्रसङ्गादृगादीनां लक्षणानि कथ्यन्ते । अक्षराणामियत्ताविशेषः पादः 'अष्टाक्षरा गायत्री' 'दशाक्षरा विराट्' इत्यादिप्रमाणगम्यः । एतादृशपादवन्धवत्वं ऋचां लक्षणम् ॥

### १२. सामलक्षणाधिकरणम्

सामशब्दो रथन्तरबृहदादिगीतिषु प्रयुज्यते । अतो गीतिस्साम ॥

### १३. यजुर्लक्षणाधिकरणम्

ऋक्सामभिन्नो मन्त्रभागः प्रश्लिष्टपठितो यजुश्शब्देनोच्यते ॥

### १४. निगदाधिकरणम्

परसम्बोधनार्था निगदाः कथ्यन्ते—'अग्नीदग्नीन्विहर' 'प्रोक्षणी-रासादय' 'बर्हिस्तृणीहि' 'आज्येनोदेहि' इत्यादयः । निगदमन्त्राणां यजुष्येवान्तर्भावः उत तेषां मन्त्रान्तरत्वमिति विचार्यते । तत्र 'उच्चैः ऋचा क्रियते' 'उपांशु यजुषा' 'उच्चैस्साम्ना' 'उच्चैर्निगदेन' इति निगदानामुच्चैष्ट्वस्वरः एवं यजुषामुपांशुस्वर इति स्वरभेदात् यजुर्भ्यो

भिन्ना निगदा इति सिध्यति, एवं ऋचां साम्नां निगदानाञ्चोच्चैष्ट्व-स्वरैक्येऽपि निगदेषु पादबन्धत्वगीतित्वलक्षणाभावात् ऋक्सामेभ्योऽपि भिन्ना निगदा इति सिध्यति। तथा च ऋक्सामयजुर्भ्यो भिन्ना इति पक्षे प्राप्ते,

सिद्धान्तः––यजुर्लक्षणाक्रान्तत्वमेव निगदानाम्। ननु 'उच्चैर्निगदेन' इत्युच्चैष्ट्वं विहितम् यदि निगदा यजूंषि तर्हि उपांशुस्वरेण भवितव्यम् कथमुच्चैष्ट्वमिति चेन्न; सामर्थ्यान्निगदानामुच्चैष्ट्व-स्वीकारात्। परसम्बोधनपरा निगदाः, तत्रोपांशुत्वं नानुकूलम्, पर प्रत्यायनकार्यं निगदानाम्। तत्रोच्चैष्ट्वस्वीकार एवोचितः। किञ्च उपांशुत्वं मन्त्रस्याङ्गम्; परप्रत्यायनकार्यन्तु प्रधानम्। प्रधानानुसारी उच्चैस्स्वरः। उच्चैस्स्वरस्तु निगदमात्रविषयः; उपांशुत्वन्तु यजुरन्तरे सावकाशम्। पदाहवनीययोरिव निरवकाशातिरिक्तविषयत्वेन साव-काशस्य नयनमुचितम्। नितरां गद्यन्ते उच्चैरुच्चार्यन्त इति व्युत्पत्त्या यजुषामेवायं गुणविशेष इति निगदमन्त्रो यजुरेवेति॥

## १५. अर्थैकत्वाधिकरणम्

कियदेकं यजुरिति परिज्ञानाय यजुःपरिमाणमस्मिन्नधिकरणे प्रदर्श्यते। विभागे साकाङ्क्षत्वे सति एकार्थप्रतिपादकत्वं यावति वाक्ये पर्यवस्यति तावदेकं यजुः। अस्य लक्षणस्य लक्ष्यं यजुः, न तु साधारणं वाक्यम्। तेन यावति पदसमूहे उच्चरिते स यागसाधनतामवाप्नोति तावदेकं यजुरिति बोध्यम्। इज्यतेऽनेनेति यजुरिति व्युत्पत्तेः। अत्र 'भगो वां विभजतु' 'पूषा वां विभजतु' 'अर्यमा वां विभजतु' इति हविषः पिष्टस्य विभागरूपैकार्थप्रतिपादकत्वेन त्रयाणामप्येकमन्त्रत्वं स्यादतो विशेषणदलम्। एवं 'स्योनन्ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृत प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इत्यत्रैकमन्त्रत्वं स्यादतो विशेष्यदलम्, पूर्वार्धोत्तरार्धयोर्भिन्नार्थप्रतिपाद-कत्वात् नैकमन्त्रत्वम्॥

## १६. यजुर्भेदाधिकरणम्

'इषे त्वोर्जे त्वा' इति यजुर्मन्त्रः। 'इट्' शब्दस्यान्नमर्थः, तस्य चतुर्थ्येकवचनम्, एवं 'ऊर्क्' शब्दस्यान्नरसोऽर्थः, तस्य चतुर्थ्येकवचनम्।

'त्वा' त्वामित्यर्थः । अन्नाय अन्नरसाय त्वामिति पर्यवस्यति । कयाचन क्रियया विनाऽपरिपूर्णोऽयं पदसमूहः, काञ्चन क्रियामध्याहृत्य परिपूरयितव्यः । तत्र किमेकां क्रियामध्याहृत्यैकमन्त्रत्वेन ग्राह्योऽयं पदसमूहः ? उत क्रियाद्वयमाश्रित्य भिन्नमन्त्रत्वेनेति संशये–क्रियाद्वयमाश्रित्याकाङ्क्षायाः परिपूरणेऽदृष्टद्वयं कल्पनीयं भवेत्; दृष्टस्य प्रयोजनस्यालाभात् । तदपेक्षया एकादृष्टकल्पनं वरमित्यतो मन्त्रैक्यमिति पक्षे प्राप्ते,

सिद्धान्तः––त्वा शब्दद्वयश्रवणात् प्रत्येकमाकाङ्क्षायां सत्यां तां पूरयितुं क्रियापदस्यावश्यकता भवति । तच्च क्रियापदम् 'इति छिनत्ति' 'इत्युन्मार्ष्टि' इतीतिकरणेन मन्त्रयोर्विनियुक्तत्वात् छेदनोन्मार्जनरूपार्थभेदान्मन्त्रैक्यं नाश्रयितुं शक्यम् । अतः 'छिनद्मि' 'उन्मार्ज्मि' इति क्रियाश्रयणेन इषे त्वा' इत्येकं यजुः; 'ऊर्जे त्वा' इत्यपरं यजुरिति भेद एवाश्रयणीय इति ॥

## १७. अनुषङ्गाधिकरणम्

ज्योतिष्टोमे उपसद्धोमेषु मन्त्रोऽयं श्रूयते–'या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचोऽपावधीत् त्वेषं वचोऽपावधीत्स्वाहा' इत्यन्तः प्रथमो मन्त्रः, अनन्तरं 'या तेऽग्ने रजाशया' 'या तेऽग्ने हराशया' इति मन्त्रद्वयम् । अग्निं सम्बोध्य प्रवृत्तः प्रथमो मन्त्रः हे अग्ने या तेऽयोमयी तनूः अतिशयेन वृद्धिं प्राप्ता सती एवं गह्वरे तीक्ष्णे वर्तमाना च सती उग्रं वचः–क्षुत्पिपासादिकं त्वेषं वचः–महापातकं नाशयामास तया-तन्वाऽहमपि नाशयामीति परिपूर्णो निराकाङ्क्षः । द्वितीयतृतीयमन्त्रौ तु साकाङ्क्षौ । तदाकाङ्क्षायाः पूरणं लौकिकेन वाक्येन कर्तव्यम् उत प्रथममन्त्रगतवाक्यमेवानुषज्याकाङ्क्षा पूरणीयेति संशये–एकत्राम्नातस्यान्यत्र नयनेऽपि तस्य लौकिकत्वमेव स्यात् । तदपेक्षया–या ते रजतमयी तनूः हिरणमयी च तनूः साऽस्मान् पातु इति लौकिक एव शेषः स्वीक्रियतामिति पक्षे प्राप्ते;

सिद्धान्तः–एकत्र समाम्नातस्यान्यत्र सम्बन्धकरणेऽन्वये वा आकाङ्क्षा सन्निधिः योग्यता चेति प्रमाणानि क्लृप्तानि सन्ति । तैः प्रमाणैः तनूर्वर्षिष्ठेत्यादेः शेषस्य द्वितीयतृतीयमन्त्रयोः सम्बन्धस्सिद्धो भवति । न चैवमेकत्र समाम्नातस्यान्यत्र नयने वैदिकत्वहानिरिति वाच्यम्, मन्त्रत्रय-

साधारण्येन सम्बन्धस्य तुल्यत्वात् त्रयाणामपि सन्निधौ समाम्नानं तुल्य-मित्यर्थः । सकृदाम्नातस्यापि शेषस्य सन्निधानं बुद्धिविपरिवृत्तिरूप-मत्रिशिष्टमिति यावत् । अतोऽनुषङ्गद्वारा वैदिकेनैव शेषेणाकाङ्क्षा-पूरणीयेति ।

यत्र वाक्यं न परिपूर्णार्थप्रकाशकं यथा—'या ते रजाशया, या ते हराशया इति तत्राकाङ्क्षापरिपूरणायानुषङ्ग उचितः। यत्र च परिपूर्णार्थकानि वाक्यानि—'चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता-पुनातु' इति तत्सन्निधावन्ते 'अच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिः' इति पठितः शेषः, तस्य कथमनुषङ्गः ? परिपूर्णार्थप्रकाशकत्वादाकाङ्क्षा-विरहान्मन्त्राणाम् इति शङ्कायाः समाधानम्—सत्यं पुनात्वित्यन्ता मन्त्रा निराकाङ्क्षाः, 'अच्छिद्रेण' इत्यादेः करणमन्त्रत्वात् तत्करणकक्रियाया अपेक्षितत्वेन तादृशक्रियया‌ऽस्य सम्बन्धो वक्तव्यः । सा च क्रिया पुना-त्वन्तेन प्रतिपादिता । क्रियायाः प्राधान्यम्, शेषस्य च तदङ्गत्वम् । प्रतिप्रधानमङ्गानामावृत्तिर्न्याय्या । अतः पूर्वयोः चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु' इति मन्त्रयोः सम्बन्धोऽनुषङ्गरूपः 'अच्छिद्रेण' इत्यादेः सिध्यति ॥

## १८. व्यवायाधिकरणम्

'सं ते वायुर्वातेन गच्छताम्, सं यजत्रैरङ्गानि, सं यज्ञपतिराशिषा' इति पशुप्रकरणे समाम्नातो मन्त्रः । अत्र ते वायुर्वातेन सङ्गच्छताम् इति परिपूर्णार्थको मन्त्रः 'सं यजत्रैरङ्गानि' इति बहुवचनोपपत्तये सङ्गच्छन्ता-मिति लौकिकं पदमध्याहर्तव्यम् । 'सं यज्ञपतिराशिषा' इत्यत्र यज्ञपति-शब्दस्यैकवचनत्वात् प्रथमश्रुतस्य गच्छतामित्यनुषङ्गो भवत्विति पक्षे प्राप्ते;

सिद्धान्तः——मध्ये बहुवचनान्तेन व्यवधानान्नानुषङ्गः । अनुषङ्गा-धिकरणेऽनुषङ्गं प्रति बुद्धिविपरिवृत्तिरूपं सन्निधानं कारणमुक्तम् । गच्छतामित्यस्य तादृशविपवृत्तेरभावात् बहुवचनेन व्यवधानान्नानुषङ्गः । द्वितीयमन्त्रे गच्छतामित्यस्य विपरिणामोऽपि कर्तुं न शक्यते । विपरिणा-मश्चोहः ऊहश्च विकृतावेव भवति, न प्रकृतौ, अग्नीषोमीयपशोः प्रकृतित्वात् । अतो नानुषङ्ग इति ॥

द्वितीयाध्यायस्य प्रथमः पादः

## अथ द्वितीयः पादः

### १. शब्दान्तराधिकरणम्

पूर्वस्मिन् पादे उपोद्घातप्रसक्तानुप्रसक्ता विषया विचारिताः। अस्मिन् पादे द्वितीयाध्यायस्य प्रधानविषयः कर्मभेदः प्रतिपादयिष्यते। कर्मभेदकानि प्रमाणानि षट्—शब्दान्तरम् अभ्यासः सङ्ख्या संज्ञा गुणः प्रकरणान्तरमिति। तेषु यथाक्रममस्मिन् पादे पञ्च प्रमाणानि षष्ठञ्च प्रमाणं तृतीयपादे विचारयिष्यते। तत्रास्मिन्नधिकरणे एकप्रकरणगतानि विभिन्नधात्वर्थघटितानि वाक्यान्युदाहृत्य विचार्यन्ते। ज्योतिष्टोम-प्रकरणे 'सोमेन यजेत' 'दाक्षिणानि जुहोति' 'हिरण्यमात्रेयाय ददाति' इत्यादीनि वाक्यानि श्रूयन्ते। अत्र कर्मभेदपदेन धात्वर्थभेदः अपूर्व-भेदः भावनाभेदश्च प्रत्येतव्यः। पूर्वस्मिन् पादे भावार्थाधिकरणे धात्वर्थातिरिक्तः प्रत्ययार्थो व्यापारो भावनापदाभिधेयस्साधितः। विधिवाक्येषु सर्वत्र सैव विधीयते। तस्या यदि भेदः, तर्हि तत्साध्यमपूर्वं भिन्नम्, तद्भेदाच्च कर्म भिद्यत इति स्थितिः।

अत्रैवं विचार्यते-यजेत जुहोति ददाति इत्यत्र यान्याख्यातानि तानि किम् एकामेव भावनां विदधति? उत भिन्ना भावनाः? भावनाया आख्यातत्वावच्छिन्नः प्रत्ययो वाचक इत्यवधृतं प्राक्। स च प्रत्यय-स्सर्वत्रैकरूपः। तस्य वाच्यार्थेनाप्येकरूपेण भवितव्यम्। न चानुरञ्जक-धातुभेदेन तदनुरक्तप्रत्ययानां भिन्नत्वात् भिन्नार्थप्रतिपादकत्वमिति वाच्यम्, अनुरञ्जकधातूनां भावनावाचकत्वाभावात्। एक एव देवदत्तः एकदा पीताम्बरधारी भवति समयान्तरे च रक्ताम्बरधारी भवति। अत्रा-म्बरभेदे सत्यपि देवदत्तो न भिन्नो भवति। न हि पीताम्बरं रक्ताम्बरं वा देवदत्तः। अतो धातुभेदो न भावनाभेदको भवितुमर्हति। अथापि अवच्छेदकभेदादवच्छिन्नस्य भेद आश्रीयते तर्हि गुणभेदः प्रधानस्य भेदकस्स्यात्। प्रधानन्तु प्रत्ययार्थः; धात्वर्थस्तु गुणभूतः 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन' इत्यनुशासनाद् धातोस्सहभावेन विना केवलः प्रत्ययः प्रयोगानर्हः, किन्तु प्रत्ययः स्ववाच्यमर्थमुपस्था-

पयितुं नासमर्थः। प्रत्ययप्रयोगावसरे धातूनां सहभावमात्रमपेक्ष्यते, न हि सहभावमात्रेण प्रत्ययार्थं भेत्तुमीशते धातवः। किञ्च प्रत्ययार्थो भावना क्रियारूपा। तस्याश्च फलमपूर्वम्। यदि भावनारूपा क्रिया भिन्ना तर्हि भिन्नं भिन्नं फलं जननीयं स्यात्। तथा सत्यनेकादृष्टकल्पनाप्रयुक्तं गौरवं भवेत्। तदपेक्षयाऽत्र श्रूयमाणाः प्रत्यया एकामेव भावनामाचक्षत इत्यङ्गीकृत्यैकापूर्वकल्पनं वरम्। अपूर्वरूपफलसाधनाय भावनाया उपकारका धात्वर्थाः। यथा वस्त्रकञ्चुकादीनां लम्बनाय कल्पिते कृष्णमृगश्रृङ्गे नागदन्ते वा शाखारूपेण प्ररूढानि लघूनि तद्गतानि श्रृङ्गाणि वस्त्रलम्बनरूपमेकं कार्यं साधयन्ति, तथैव भावनानुरञ्जका धात्वर्था यागहोमदानरूपा अपि। अतस्सर्वेऽपि प्रत्यया एकामेव भावनां प्रतिपादयन्तीति प्राप्ते,

सिद्धान्तः—शब्दान्तरे धातुभेदे सति कर्मभेदो भावनाभेदस्स्यात्। अत्र कर्मपदेन भावनारूपो व्यापारो गृह्यते। यद्यपि प्रत्ययस्सर्वत्रैकरूपः स्वार्थाभिधानसमर्थश्च तथापि यत्किञ्चिद्धात्वर्थानुरक्तस्यैव तस्यार्थावबोधकत्वमिष्यते 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः' इति न्यायात्। एकस्य प्रत्ययस्य नानाधात्वर्थानुरागो न दृश्यते येनानेकधात्वर्थानुरक्तैका भावनेति व्यवहारस्स्यात्। यथा हि नीलो घटः रक्तो घटः पीतो घट इत्यत्र घटज्ञानमेकमपि अनुरञ्जकनीलरक्तपीतादिना भिद्यत एव। घटस्यैकत्वेऽपि नीलघटज्ञानं पीतघटज्ञानञ्चैकं न भवति। तथैव भावनात्वेन भावनाया एकत्वेऽपि तज्ज्ञानं तत्तदनुरञ्जकधात्वर्थभेदेन भिन्नमेव भवेत्। यो दृन्टान्तः प्रदर्शितः कृष्णमृगश्रृङ्गस्य नागदन्तस्य वा तत्रापि उष्णीषलम्बनं कञ्चुकलम्बनम् उत्तरीयलम्बनं कम्बललम्बनमित्यादीनि भिन्नानि कार्याणि साधयतीति ज्ञानभेदोऽस्त्येव। तस्मादनुरञ्जकधात्वर्थभेदाद् भावनाभेदः; तद्भेदाच्चापूर्वभेदः, अपूर्वभेदाच्च धात्वर्थभेदस्सिध्यति॥

## २. अभ्यासाधिकरणम्

पूर्वमनुरञ्जकभेदाद्भावनाभेदः प्रदर्शितः। इदानीमनुरञ्जकभेदाभावेऽपि भावनाभेदः प्रदर्श्यते। तत्र प्रमाणमभ्यासः। अभ्यासो नामानन्यपरविधिपुनःश्रवणम्। दर्शपूर्णमासयोः पञ्च प्रयाजाः—'समिधो

यजति, तनूनपातं यजति; इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इति विहिताः। अत्र पञ्चकृत्वो यजतिरभ्यस्तः किमेकां भावनां बोधयति ? उत भावनाभेदमिति संशयः। पूर्वमनुरञ्जकभेदप्रयुक्तो भावनाभेदः स्थापितः, अत्र तादृशानुरञ्जकभेदाभावात् प्रत्ययांशस्य चैक्यात् कथं भावनाभेदः ? एकस्यैव घटशब्दस्य पुनः पुनः श्रवणेन न घटज्ञानं भिद्यते। तस्मान्नात्राभ्यासाद्भावनाभेदः। ननु यथा 'अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः' इत्यत्र संज्ञया भेदो वक्ष्यते तथा समिदादिसंज्ञाभेदाद्भेद आश्रीयताम्, अभ्यासान्मास्तु इति चेन्न, संज्ञाभेदः कर्मभेदाश्रितः, कर्मभेदश्च संज्ञाभेदाश्रित इत्यन्योन्याश्रयात्। 'अथैष ज्योतिः' इत्यत्र यजिपदं न श्रूयते। अतो यागभेदावगमात्पूर्वमेव संज्ञात्वमवगम्यत इति संज्ञया कर्मभेदः। ननु पुनः श्रवणस्य किं प्रयोजनमिति चेत्–'समिधो यजति' इति वाक्यस्य समिद्यागविधायकत्वमङ्गीकृत्य तनूनपादादिवाक्यानां देवतारूपगुणविधायकत्वेन पुनः श्रवणस्य सार्थक्यं कल्पयामः। नन्वेवं गुणात् कर्मभेदस्स्यादिति चेन्न; उत्पत्तिशिष्टगुणावरुद्धे कर्मणि उत्पन्नशिष्टो गुणोऽसम्भवन्निवेशः कर्म भिनत्तीति गुणाधिकरणसिद्धन्यायः। प्रकृते तु समिद्वाक्यस्य कर्मविधायकत्वे तत्र कस्य चनोत्पत्तिशिष्टगुणस्याभावात् तत्र तनूनपादादिवाक्यैर्गुणविधाने न कश्चिद्दोषः। तस्मादभ्यासान्न कर्मभेद इति पक्षे प्राप्ते,

सिद्धान्तः–अभ्यासेऽनन्यपरविधिपुनःश्रवणे सति तद्भिदा कर्मभेदः। एतेषु पञ्चसु वाक्येषु अप्रवृत्तप्रवर्तनरूपो विधिः पुनः पुनः श्रूयते। इदं पुनःश्रवणमनर्थकं स्यात् यद्यत्र विधिर्नाङ्गीक्रियेत। विधेरयं स्वभावः–यदप्रवृत्तप्रवर्तनम्। तस्मिन् सम्भवत्यानर्थक्यं नाङ्गीकर्तुमुचितम्। 'वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसम्भवे' इति न्यायेन तनूनपादादिवाक्येषु देवतागुणविधिर्न युक्त इति समिद्वाक्यमिव तनूनपादादिवाक्यान्यपि कर्मविधायकान्येव। तस्मादन्यपरकत्वेन नेतुमशक्यत्वाद् विधिपुनः श्रवणस्याभ्यासस्य कर्मभेदकत्वमेवेति॥

## ३. पौर्णमास्यधिकरणम्

दर्शपूर्णमासयोः दर्शे त्रयः पूर्णिमायां त्रय इति षड् यागाः। तेषामुत्पत्तिवाक्यानि–'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्यु-

तो भवति' 'ऐन्द्रं दध्यमावास्यायाम्' 'ऐन्द्रं पयोऽमावास्यायाम्' 'उपांशुयाजमन्तरा यजति' 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति। तथा च दर्शे आग्नेयपुरोडाशयागः, ऐन्द्रं दधि ऐन्द्रं पय इति त्रयो यागाः। पौर्णमास्यामाग्नेयपुरोडाशः, उपांशुयाजः, अग्निषोमीयपुरोडाशश्चेति त्रयो यागाः। इमे कालसंयुक्ताः। कालयोगेन विना प्रयाजानूयाजादयो यागा अनेके। एतेषां सन्निधौ 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति वाक्यद्वयमाम्नायते। अस्याधिकरणस्येदमेव वाक्यद्वयं विषयः। किमिदं वाक्यद्वयं कर्मविधायकम्? उत विहितानां कर्मणामनुवादकम्? इति सन्दिह्यते। पूर्वस्मिन्नधिकरणेऽनन्यपरविधिपुनःश्रवणरूपाभ्यासाद् यथा समिदादिषु वाक्येषु कर्मभेदस्साधितः तथैव 'यजते' 'यजते' इत्यभ्यासस्य सत्त्वात् कर्मविधायकत्वमनयोर्वाक्ययोः। पौर्णमासीसंज्ञकम् अमावास्यासंज्ञकञ्च कर्म विधीयते। अनयोः कर्मणोः किं रूपमिति चेदित्थम्—दर्शपूर्णमासयोराज्यग्रहणावसरे जुह्वाम् उपभृति ध्रुवायाञ्चाज्यस्थालीतो स्रुवेणाज्यग्रहणं भवति—'चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' 'अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तत्' 'चतुर्ध्रुवायां गृह्णाति सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्' इति। तत्र ध्रुवागताज्यस्य सर्वयज्ञार्थत्वेन गृहीतत्वात् विद्वद्वाक्यविहितकर्मणोर्द्रव्यापेक्षायां ध्रौवमाज्यं ग्रहीतुं शक्यते। एवं द्रव्यं लब्धम्। देवता च 'वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्' इति वाक्येन विनियुक्तमन्त्रवर्णैर्लभ्यते। वृत्रहननप्रकाशिके ऋचौ वार्त्रघ्न्यौ, वृद्धिप्रकाशिके ऋचौ वृधन्वत्यौ। ननु वार्त्रघ्नीवृधन्वतीमन्त्रविनियोजकवाक्ये 'अनूच्येते' इति पदेन पुरोनुवाक्ययोरेव प्रतीयमानत्वात् विद्वद्वाक्यविहितकर्मणोः पुरोनुवाक्यायुगलस्य कथं निवेशः क्रियत इति चेत्—एकस्या ऋचः पुरोनुवाक्यात्वेनापरस्या ऋचो याज्यात्वेन समावेशः क्रियत इति न दोषः। एवं द्रव्यदेवतयोर्लाभात् विद्वद्वाक्याभ्यामपूर्वे कर्मणी विधीयेते, एवमनङ्गीकारे तयोरन्यस्य कार्यस्याभावादानर्थक्यं स्यात्। न केवलमनयोरेवानर्थक्यम्, 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इत्यनयोरप्यानर्थक्यम्। आभ्यां वाक्याभ्यां कालो विधेयः। यदाग्ने-

यादिवाक्येषु 'अमावास्यायाम्' 'पौर्णमास्यां' इति कालस्योल्लेखात् तत्र कालविधायकत्वेनानयोस्सार्थक्यं साधयितुं न शक्यते। यदि विद्वद्वाक्याभ्यां कर्म विधीयेत तत्र कालापेक्षायां तद्विधायकत्वेन सार्थक्यं भवितुमर्हति। अन्यथाऽनयोरपि वाक्ययोरानर्थक्यं प्रसज्येत। सर्वेषामानर्थक्यपरिहाराय विद्वद्वाक्येऽपूर्वकर्मविधायके, तत्र कालसमर्पकत्वेन 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इत्यनयोरपि सार्थक्यं स्यात्। तस्माद्विद्वद्वाक्येऽपूर्वकर्मविधायके इति पक्षे प्राप्ते,

सिद्धान्तः—पौर्णमास्याममावास्यायाञ्च क्रियमाणानां त्रयाणां त्रयाणां यागानां सङ्घस्यानुवादके विद्वद्वाक्ये। विद्वद्वाक्ये न कर्म विधायके, विहितयोः कर्मणो रूपाभावात्। कर्मणश्च रूपं द्रव्यं देवता च। तत्र द्रव्यप्राप्तिर्या साधिता तत्रेदं वक्तव्यम्—'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्' इति वाक्याद् ध्रौवाज्यस्य सर्वयज्ञार्थत्वे प्रतीयमानेऽपि तत्रत्यवाक्यशेषेण प्राजापत्योपांशुयाजाज्यभागोपस्तरणाभिघारणार्थत्वमेवावगम्यते, न तु तदतिरिक्तार्थत्वम्। कथञ्चित्सर्वार्थत्वेन तदाज्यस्य ग्रहणेऽपि देवता तु सर्वथा न लभ्यते। यदुक्तं मन्त्रवर्णतो देवतालाभ इति तत्रेयं स्थितिः—आज्यभागाख्यं कर्म पौर्णमास्याममावास्यायाञ्चानुष्ठीयते। यथा प्रयाजानामङ्गत्वेनानुष्ठानं तथाऽऽज्यभागयोरप्यनुष्ठानं भवति। आज्यभागयोः अग्निः सोमश्च देवते। अनयोरनुष्ठाने यः क्रमः-स्थानम् तस्मिन्नेव क्रमे 'अग्निर्वृत्राणि जङ्घनत्' इति, 'त्वं सोमासि सत्पतिः' इति, 'अग्निः प्रत्नेन मन्मना' इनि 'सोमगीर्भिष्ट्वा वयम्' इति चतस्रो ऋचः पठिताः। मन्त्राणां विनियोगः लिङ्गात् क्रमात् वाक्यात् समाख्यातश्च भवति। तदत्राज्यभागदेवतयोरग्नेस्सोमस्य च प्रकाशनसामर्थ्यं लिङ्गं मन्त्रयोरस्ति, क्रमश्चास्तीति लिङ्गक्रमाभ्यां मन्त्राणामाज्यभागाङ्गत्वं स्पष्टं प्रतीयते। लिङ्गं क्रमञ्च बाधित्वा विद्वद्वाक्यविहितकर्माङ्गत्वं वक्तव्यम्। तत्र च 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम्' इति वाक्यमवलम्ब्य पूर्वपक्षिणः। किन्तु वाक्यमिदं मन्त्राणां व्यवस्थया निवेशार्थं प्रवृत्तम्।

वार्त्रघ्नीमन्त्रयोः कुत्र निवेशः, वृधन्वत्योश्च कुत्रेति जिज्ञासायां

वाक्यमिदं पौर्णमास्यामनुष्ठीयमानयोराज्यभागयोः वार्त्रघ्नी मन्त्रौ अमावास्यायामनुष्ठीयमानयोराज्यभागयोर्वृधन्वतीमन्त्रौ इति व्यवस्थाविधायकम् । विद्वद्वाक्यविहितकर्मणोरस्य मन्त्रविनियोजकत्वे मन्त्रप्रतिपाद्ययोरग्नेः सोमस्य च देवतात्वं वक्तव्यम् । तत्राग्निदेवताकत्वे एकस्य मन्त्रस्य पुरोनुवाक्यात्वम् अपरस्य च याज्यात्वं स्वीकृतं तदनुपपन्नं स्यात्, एकस्यापि मन्त्रस्योभयदेवताकत्वाभावात् । तत्र मन्त्रे यद् देवताप्रकाशनरूपं लिङ्गं तद् बाधितं स्यात् । एवं क्रमस्यापि बाधः । किञ्च विद्वद्वाक्ययोर्विधिप्रतिबन्धकयच्छब्दघटितत्वेन विधायकत्वमपि न स्यात् । एवमादयोऽनेके दोषा भवेयुर्विद्वद्वाक्ययोर्विधायकत्वे । यदुक्तं विद्वद्वाक्ययोरानर्थक्यमिति तत्रोच्यते—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यधिकारवाक्ये दर्शपूर्णमासाभ्यामिति द्वित्वोपपत्तये त्रयाणां त्रयाणां यागानां समुदायद्वयस्यानुवादकत्वेन विद्वद्वाक्ययोः सार्थक्यं भवति । यदुक्तं विद्वद्वाक्ययोर्विधायकत्वाभावे 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति वाक्ययोरप्यानर्थक्यमिति; तन्न; आग्नेयादीनां षण्णां यागानां पृथक् पृथक् एकैकस्मिन् पर्वणि अनुष्ठानं भवत्विति शङ्कानिवारणाय वाक्यद्वयस्य सार्थक्यात् । तस्माद्वाक्यद्वयमिदं न विधायकम् किन्त्वनुवादकमिति ॥

## ४. उपांशुयाजाधिकरणम्

दर्शपूर्णमासयोः पूर्णिमायां आग्नेयः पुराडाशः अग्नीषोमीयः पुरोडाशश्चेति यौ द्वौ पुरोडाशयागावानुष्ठीयेते तावधिकृत्य वाक्यमेवं श्रूयते—'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति । अस्यायमर्थः—पूर्णिमायां यौ पुरोडाशयागावनुष्ठीयेते नैरन्तर्येण तौ यज्ञस्यालस्यं जनयतः । एकरूपयोर्द्वयोर्नैरन्तर्येणानुष्ठानेऽवश्यमालस्यं वाऽरुचिर्वा भवेत् । तयोर्मध्ये यदि किञ्चिद्विलक्षणं कर्मानुष्ठीयेत तर्हि आलस्यपरिहारस्स्यात् इति तयोर्मध्ये आज्यद्रव्यकोपांशुयाजोऽनुष्ठातव्यः । अतो जामितादोषनिवारणाय विष्णुः प्रजापतिः अग्नीषोमौ

यष्टव्यत्वेन निर्दिष्टाः। तदत्र 'उपांशुयाजमन्तरा यजति' इति विषयवाक्यम्। तत्र सन्दिह्यते—किमिदं वाक्यं 'विष्णुरुपांशु यष्टव्यः' इत्यादिवाक्यविहितकर्मणामनुवादकम्? उत उपांशुयाजविधायकम्? इति। तत्र यष्टव्य इति तव्यप्रत्ययेन वाक्यानां विधायकत्वं स्पष्टं प्रतीयते। उपांशुवाक्ये च 'यजति' इति वर्तमानापदेशः, न तु विधायकः। पूर्वस्मिन्नधिकरणे विद्वद्वाक्ययोराग्नेयादिषड्यागानामनुवादकत्वं यथा व्यवस्थापितम् तथा 'विष्णुरुपांशु यष्टव्यः' इति वाक्यत्रयेण विहितयागानामन्तरावाक्यमनुवादकम्; न त्वपूर्वकर्मविधायकम्; रूपाश्रवणात्। ध्रौवमाज्यं यद्यपि लब्धुं शक्यम्; किन्तु देवता नैव लभ्यते। आग्नेयाग्नीषोमीयपुरोडाशयागसम्बन्धियाज्यापुरोनुवाक्यानां मध्ये यद्यपि विष्णुप्रजापत्यग्नीषोमीययाज्यापुरोनुवाक्यायुगलत्रयं पठितं तेन देवताप्राप्तिस्सुलभा, तथापि एको यागः; तस्य मन्त्रयुगलत्रयं न घटते। 'विष्णुरुपांशु यष्टव्यः' इति वाक्यत्रयेण विहितानां त्रयाणां यागानां मन्त्रयुगलत्रयस्य सम्बन्धस्तु घटते। न च 'उपांशुयाजमन्तरा यजति' इत्यस्यान्तरालकालमात्रविधायकत्वमिति वाच्यम्; उपक्रमेऽजामित्वानुक्रमात्तेनैव विष्ण्वादियागविधेरन्तराले पर्यवसानात्। तस्मात् उपांशुयाजमन्तरायजतीति विष्ण्वादिवाक्यविहितयागानामनुवादकमिति पक्षे प्राप्ते;

सिद्धान्तः—विद्वद्वाक्यवत् अन्तरावचः—'उपांशुयाजमन्तरा यजतीति वाक्यं नानुवादकम्। उपक्रमानुसारेणोपसंहारश्शास्त्रसिद्धः। उपक्रमे द्वयोः पुरोडाशयागयोर्नैरन्तर्येणानुष्ठाने जामित्वदोषः कीर्तितः। तेन तदन्तरालकाले किञ्चिद्विलक्षणं कर्म कर्तव्यमिति निश्चिततया उपांशुवाक्यस्यैव तद्विधायकत्वं स्वीकर्तव्यम्। विष्ण्वादिवाक्यानां विधिसमर्थानामपि तेषामन्तरालानुष्ठेयत्वं न लभ्यते। अन्तरालसम्बन्धाभावे जामित्वनिरसनं तैः कर्तुं न शक्यते। अतः 'अजामित्वाय' इति प्रशंसा कथं युज्येत। किञ्च विष्ण्वादिवाक्यैरन्तरालकाललाभ आर्थिकः, अन्तरावाक्येन तु तल्लाभश्शाब्दः। तस्मात् उपांशुगुणको यागः अन्तरालकाले विधीयते; विष्ण्वादिवाक्यञ्च मन्त्रवर्णप्राप्तदेवतानुवादेनार्थवादः। एवं सति उपक्रमानुसारेण 'अजामित्वाय' इत्युपसंहारः प्रशंसापरस्सिध्यति।

अतश्च विद्वद्वाक्यवत् 'उपांशुयाजमन्तरा यजति' इति नानुवादकं किन्तु विधायकमिति ॥

### ५. आघाराग्निहोत्राधिकरणम्

अस्मिन्नधिकरणे विषयवाक्यद्वयम्—'आघारमाघारयति' 'अग्निहोत्रं जुहोति' इति। तत्र 'आघारमाघारयति' 'ऊर्ध्वमाघारयति सन्ततमाघारयति ऋजुमाघारयति' इत्यादिरेकस्समुदायः। एवं 'अग्निहोत्रं जुहोति' 'दध्ना जुहोति पयसा जुहोति यवाग्वा जुहोति' इत्यदिरेकस्समुदायः। आघाराग्निहोत्रशब्दयोस्तत्प्रख्यन्यायेन कर्मनामत्वमवधृतम्। अत्र 'ऊर्ध्वमाघारायति' इत्यादिवाक्यविहितकर्मणां समुदायस्यानुवादकम् 'आघारमाघारयति' इति वाक्यम्? उतापूर्वकर्मविधायकम् ऊर्ध्वादिवाक्यानि च गुणविधायकानि इति संशयः। एवम् 'अग्निहोत्रं जुहोति' इति वाक्यं दध्यादिवाक्यविहितकर्मणामनुवादकम् उतापूर्वकर्मविधायकं दध्यादिवाक्यानि च गुणविधायकानीति संशयः। ननु तत्प्रख्याधिकरणेऽनयोश्शब्दयोर्नामधेयत्वं सिद्धान्तितम्। तेन तत्तन्नामककर्मविधायकत्वे सिद्धे कथमनुवादकत्वसंशय इति चेत्—अनयोर्वाक्ययोः विधेयरूपरहितत्वात् सामान्यस्य चानुष्ठानायोग्यत्वात् विशेषरूपेणावगतस्यैव कर्मणोऽनुष्ठानयोग्यत्वात् तादृशविशेषावगमस्य ऊर्ध्वदध्यादिवाक्येषु सत्त्वात् तेषामेव विधायकत्वमित्यधिकाशङ्कानिराकरणायैवं सन्दिह्य विचार्यते किमनयोरनुवादकत्वमुत विधायकत्वमिति। तत्र ऊर्ध्वादिवाक्येषु दध्यादिवाक्येषु च देवताया अभावेऽपि ऊर्ध्वत्वदध्यादिश्रवणात् ऊर्ध्वत्वदध्यादीनाञ्च विशेषावगमकत्वात् तद्विशिष्टकर्मविधायकत्वं न्याय्यम्; सम्भवति रूपवति कर्मविधाने तद्रहिते तद्विधानं न न्याय्यम्। अत ऊर्ध्वत्वसान्तत्यऋजुत्वगुणविशिष्टकर्मणां विधायकानि ऊर्ध्वादिवाक्यानि, तेषां कर्मणामनुवादकमाघारवाक्यम्, एवं दधिपयोयवागूविशिष्टकर्मविधायकानि दध्यादिवाक्यानि, तेषामनुवादकमग्निहोत्रवाक्यम्। देवतायास्तु प्राप्तिर्मन्त्रवर्णादिना भवति। अनुवादस्य प्रयोजनन्तु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यधिकारसम्बन्धः। अतो वाक्यद्वयमिदमनुवादकमिति पक्षे **प्राप्ते,**

सिद्धान्तः—आघाराग्निहोत्रवाक्ये नानुवादके। ऊर्ध्वंदध्यादिवाक्येषु विशिष्टविधित्वाङ्गीकारेऽनेकादृष्टकल्पनाप्रयुक्तं गौरवं स्यात्। ननु सिद्धान्तेऽपि दध्यादिवाक्येषु गुणमात्रविधानं न सम्भवति, व्यापारानाविष्टस्य दध्यादेर्विधिविषयत्वासम्भवात् विशिष्टविधिरेव पर्यवस्यति। को विशेषः पूर्वपक्षसिद्धान्तयोरिति चेन्न; प्राप्ताप्राप्तविवेकन्यायेन विधिशक्तेः गुणमात्रे सङ्क्रमात्। विधितात्पर्यविषयस्यैव विधेयत्वम्, न तु विधिसम्बन्धिनो विषयस्य। विधितात्पर्यञ्चाप्राप्ते। अप्राप्तश्चोर्ध्वत्वदध्यादि। तस्माद् आघाराग्निहोत्रवाक्ये नानुवादके, किन्तु विधायके इति॥

## ६. पशुसोमाधिकरणम्

अस्याधिकरणस्य विषयः—'अग्नीषोमीयं पशुमालभेत' 'सोमेन यजेत' इति। अत्रापि पूर्ववदेव संशयपूर्वोत्तरपक्षाः। तथाहि—'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः' इत्यादिवाक्यविहितकर्मणामग्नीषोमीयवाक्यमनुवादकम् उतापूर्वकर्मविधायकम्; एवं 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्यादिवाक्यविहितकर्मणां सोमवाक्यमनुवादकमुत विधायकमिति विशयः।

तत्राग्नीषोमीयवाक्यं प्रकृत्य श्रुतेषु हृदयादिवाक्येषु यान्यवदानकर्माणि विधीयन्ते तेष्वग्नीषोमीयवाक्यं पशुशब्देनानूद्याग्नीषोमदेवतासम्बन्धं बोधयति। तेन हृदयादिवाक्येभ्यो हृदयादिद्रव्यककर्मस्ववगतेषु देवतालाभात्तेषां कर्मणां रूपं निश्चीयते। यथाऽऽघारवाक्ये आघाराख्ये कर्मण्यवगते तत्र वाक्यान्तरेण द्रव्यदेवतयोस्सम्बन्धे सति यागरूपत्वमवधार्यते तद्वत्। अवद्यतिस्तु चोदकप्राप्तानुवादो यागलक्षकः। एवमालभतिरपि स्पर्शनद्वारा हृदयादियागोपलक्षकोऽनुवादः। यदि च पशुवाक्यं यागविधायकं स्यात्तदा हृदयादिवाक्यानां संस्कारविधित्वं न शक्यते वक्तुम् उत्पत्तिशिष्टपशुद्रव्यावरोधात्। अतः पशुवाक्यमनुवादकम्।

एवं 'सोमेन यजेत' इति वाक्यमप्यनुवादकम्। 'ऐन्द्रवायवं गृह्णाति' इत्यादीनि तद्धितान्तशब्दघटितानि। तद्धितेन च द्रव्यदेवतासम्बन्धो बोध्यते। स च सम्बन्धो यागे पर्यवस्यति। एवञ्चैन्द्रवायवादि-

वाक्यैः द्रव्यदेवताग्रहणविशिष्टा यागा विधीयन्त इति तेषां सोमवाक्यगतो यजिरनुवादकः। सोमशब्दस्तु 'सोमं क्रीणाति' 'सोममभिषुणोति' इत्यादिवाक्यप्राप्तार्थानुवादीभवन् तत्प्रख्यन्यायेन नामधेयम्। न च ज्योतिष्टोमनाम्नो विद्यमानत्वेन नामान्तरस्य कथं सम्बन्ध इति वाच्यम्, न्यायतः प्राप्तत्वेन नामान्तरस्यापरिहार्यत्वात्। पञ्चविधयज्ञेषु अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति सोमशब्दः परिगणितः। एवं सङ्कल्पे 'सोमेन यक्ष्ये' इति सोमशब्दः प्रयुज्यते। सोमशब्देनापि ज्योतिष्टोमस्य व्यवहारे बाधकाभावात्। तथा च कृत्स्नं सोमवाक्यमनुवाद इति पक्षे प्राप्ते;

सिद्धान्तः—पशुसोमवाक्ये नानुवादके। पशुसोमशब्दौ आकृतिविशेषवाचकौ सन्तौ कथं कर्मजातस्यानुवादकौ भवेताम्। पशुसोमशब्दयोः मुख्यार्थत्वे सम्भवति गौण्या वृत्त्या तद्विकृतिद्रव्यपरत्वमाश्रयितुं न युक्तम्। अतो द्रव्यदेवताविशिष्टयागविधायकत्वं पशुवाक्यस्याङ्गीकर्तव्यम्। ननु पशुवाक्यस्य विशिष्टयागविधायकत्वे पशोर्यागकरणत्वं वक्तव्यम्, तच्च हृदयादिविहितहृदयादिभिर्बाधितं स्यादिति चेन्न; हृदयादिप्रकृतित्वेन पशोः यागसाधनत्वसम्भवात् गोमयेन पचतीतिवत्। तदेवं पशुवाक्यं विशिष्टविधिः; हृदयादिवाक्यानि च तत्रैव गुणविधय इति सिद्धम्। अतो नानुवादकं पशुवाक्यम्।

एवं 'सोमेन यजेत' इति वाक्यमपि सोमविशिष्टयागविधायकम्। ऐन्द्रवायवादिवाक्यानि च तत्रैवाङ्गविधायकानि। सोमस्योत्पत्तिशिष्टत्वेऽपि तस्य साक्षान्न यागसाधनत्वम् किन्तु प्रणाड्यैव। सोमस्याभिषवादिसंस्कारविधानात्, 'अभिषुतस्य सोमस्य धारां करोति' 'अण्व्याधारया गृह्णाति' इत्येवं रसग्रहणञ्च विधीयते—ऐन्द्रवायवादिवाक्यैः। दश धाराग्रहाणां सत्वात् तेषां तत्तद्देवतायै पृथक्पृथग्ग्रहणं कर्तव्यं भवति। तानि ऐन्द्रवायवादिवाक्यैर्विधीयन्ते। अतो न यागविधायकानीमानि; सोमवाक्यमेव विधायकम्। अनेन वाक्येन सोमस्य यागसाधनत्वेऽवगते तमुद्दिश्याभिषवादिसंस्काराणां विधानं सङ्गतं भवेत्; अन्यथा 'सोममभिषुणोति' 'सोमं पावयति' इत्यादौ द्वितीयान्तसोम-

पदस्यानुपपत्तिः स्यात् । एतेनाभिषवादिवाक्यप्राप्तसोममुपजीव्य सोमवाक्ये सोमशब्दस्य नामसाधनत्वं निरस्तम् । किञ्च 'ऐन्द्रवायवं गृह्णाति इत्यादिवाक्येषु ऐन्द्रवायवादयः शब्दाः तद्धितान्ताः । तेषां विग्रहवाक्येषु अस्येति सर्वनाम्ना यस्य कस्यचन द्रव्यस्य परामर्शः क्रियते । परामर्शश्च विशेषद्रव्यमन्तरा न घटते । अतो विशेषद्रव्यस्य प्राप्तिरावश्यिकी । तत्प्रापकत्वेन सोमवाक्यमेवैकं साधनम् । तस्मात् 'सोमेन यजेत' इत्येवापूर्वकर्मणः सोमविशिष्टस्य विधायकम् नानुवादकमिति ॥

## ७. सङ्ख्याधिकरणम्

अभ्यासाधिकरणप्रसङ्गेन प्राप्तो विचारस्समाप्तः । सम्प्रति सङ्ख्यया कर्मभेदः प्रतिपाद्यते । सङ्ख्या क्वचित् क्रियासामानाधिकरण्यं प्राप्य कर्मभेदिका भवति, क्वचिच्च द्रव्यगता सती कर्मभेदिका भवति । तत्र द्रव्यगतसङ्ख्यायाः कर्मभेदकत्वे उदाहरणम्——

वाजपेययागे 'सप्तदश प्राजापत्यान् पशूनालभते' इति श्रूयते । अत्र सप्तदश पशुद्रव्यक एको यागः, उत सप्तदश यागा इति विचारः । एतद्वाक्यगतालभतिशब्दो यागपरः, द्रव्यदेवतासम्बन्धबोधकतद्धितान्तपदघटितत्वात् । विचारे कोटिद्वयसिद्ध्यर्थं प्राजापत्यशब्दस्य विग्रहः कीदृश इति निर्णेतव्यम् । अयं शब्दः 'साऽस्य देवता' इत्यधिकारे विहिततद्धितसंज्ञकण्यप्रत्ययान्त इति तावात्स्पष्टम् । तत्र 'अस्य' 'अस्य' इति सप्तदशवारं सङ्कीर्त्य एकशेषे कृते 'एषाम्' इति सिद्धेन सर्वनाम्ना प्रजापतिर्देवता येषाम्' इति विग्रहे जाते प्रजापतिशब्दात्कृतेषु सप्तदशसु तद्धितेषु तेषामेकशेषे सति शिष्टस्यैकस्य तद्धितस्य प्रथमं बहुत्वेनान्वितस्य पश्चात् प्रकृत्या प्रजापतिशब्देनान्वयः, तदा केवलानां द्रव्याणामेव भेदः । भिन्नैर्द्रव्यैस्सम्बद्धा प्रजापतिदेवता व्यासज्यवर्तिनी । तेन प्रजापतिसम्बद्धानि द्रव्याणि सप्तदशेति सिध्यति । तैर्द्रव्यैः कल्प्यमानो याग एक एव स्यात् । यदि च 'प्रजापतिर्देवता अस्य प्राजापत्य इति शब्दं निष्पाद्य प्राजापत्यश्च प्राजापत्यश्चेति सप्तदशवारमुच्चार्य तद्धितान्तानामेकशेषे कृते शिष्टस्य प्राजापत्यशब्दस्य सप्तदशसु प्रजापतिविशिष्टद्रव्येषु सत्त्वात् प्रथमं प्रकृत्यन्विततद्धितार्थेषु पश्चाद्बहुत्वान्वयः । तेन सप्तदशभिर्द्रव्य-

देवतासम्बन्धैः कल्प्यमाना यागाः सप्तदश भवेयुः । तत्र तद्धितान्तेषु पदेषु तद्धितस्य द्रव्यमर्थः, तद्धितसम्बन्धाद्देवता प्रकृतेरर्थः । एवञ्च तद्धितार्थस्य द्रव्यस्यैव बहुत्वेनान्वयः । यद्यपि तद्धितान्तादेव पदात् बहुवचनोत्पत्तिः । अतः तद्धितस्य प्रथमं प्रकृत्याऽन्वयेन भवितव्यम्, तथापि प्राजापत्यशब्दः प्राधान्येन द्रव्यमेवाभिधत्त इति तस्यैव बहुत्वेनान्वयो युक्तः । विशिष्ट-स्यान्वये स्वीक्रियमाणे 'द्वौ' इत्युक्ते चत्वारः प्रतीयेरन्, त्रय इत्युक्ते नव प्रतीयेरन् । तस्मात् विशेष्यद्रव्यमात्रस्य बहुत्वेनान्वये यागभेदो न सिध्यति, सप्तदशद्रव्यकः प्रजापतिदेवताक एक एव, न यागभेद इति पक्षे प्राप्ते,

सिद्धान्तः—'प्राजापत्यान्' इति कृततद्धितान्तैकशेषशब्दः प्रजापति-विशिष्टद्रव्यवाचीति तावत् स्पष्टम् । तद्विशेषणं 'सप्तदश' पदम् । सप्त-दशशङ्ख्याकप्रजापतिदेवताविशिष्टद्रव्याणीत्यर्थः पर्यवस्यति । द्रव्याणां देवतासम्बन्धे यागः प्रत्येतव्यो भवति । सङ्ख्यायाश्च पृथक्त्वनिवेशित्व-स्वाभाव्यात् सङ्ख्येयगतत्वात् सङ्ख्येयानां यागरूपत्वाच्च तावन्तो यागा इति सिध्यति । किञ्चात्र सर्वे पशवो यागसाधनानि । यागसाधनत्वञ्च प्राजापत्यत्वविशिष्टम् । तन्निर्वाहाय तद्धितान्तानामेकशेषेण बहुत्वान्वय आश्रीयते । 'द्वौ' 'त्रय' इत्यादौ तु द्वित्वबहुत्वद्योतकयोः प्रत्यययोः विभक्तिज्ञानार्थत्वम् प्रकृत्यर्थानुवादकत्वं वा स्वीक्रियत इति न चतुर्णां नवानां वा बोधः । तस्मादत्र सप्तदशसङ्ख्या द्रव्यद्वारा कर्मभेदिका ।

कर्मसमानाधिकरणसङ्ख्याया कर्मभेदकत्वं 'तिस्र आहुतीर्जुहोति' इत्यत्राश्रीयते । अत्र किमेको होमो विधीयते उत तिस्र इति संशये 'समिधो यजति' 'तनूनपातं यजति' इत्यादिष्विव पुनः श्रवणरूपाभ्यासा-भावात् सकृच्छ्रुतस्याख्यातस्यानेकत्र व्यापारायोगात् यथा प्रकृतौ श्रुतानां पञ्चप्रयाजानां चोदकेन विकृतौ गतानामेकादशत्वसङ्ख्याऽभ्यासेन सम्पा-द्यते; तथा प्रकृतेऽपि त्रित्वसङ्ख्याऽभ्यासेन सम्पादनीयेति न कर्मभेद इति प्राप्ते,

सिद्धान्तः—कर्मसमानाधिकरणया सङ्ख्यया कर्मभेदः स्वीकार्यः, सङ्ख्यायाः पृथक्त्वनिवेशित्वस्वाभाव्यात् । यद्यत्र होमविधानं पृथग्वाक्येन

स्यात्तदनुवादेन त्रित्वविधाने तत्त्रित्वमभ्यासेन पूर्येत। न चैतदस्ति। अतः कर्मसमानाधिकरणा त्रित्वसङ्ख्या कर्मभेदिकैवेति ॥

## ८. संज्ञाधिकरणम्

अग्निष्टोमे 'अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिः; एतेन सहस्रदक्षिणेन यजेत' इति श्रुतम्। ज्योतिः विश्वज्योतिः सर्वज्योतिरिति कर्मनामधेयानि। अत्रेदं विचार्यते किं ज्योतिरादिशब्दैः प्रकृतमग्निष्टोममनूद्य सहस्रदक्षिणाख्यो गुणो विधीयते? उत ज्योतिरादिनामकानि कर्मान्तराणि विधीयन्त इति। पूर्वं सङ्ख्याधिकरणे सङ्ख्यायाः सङ्ख्येयभेदनियमात्कर्मभेदकत्वमुक्तम्। संज्ञायास्तु न तथा, एकस्यैव दर्शपूर्णमासक्रतोः दाक्षायण–साकम्प्रस्थायीयादिनामभेदे सत्यपि कर्मभेदाभावात्। अतः 'एषः' इत्येतच्छब्दानुसारेण प्रकृतज्योतिष्टोम एव ज्योतिरादिशब्दैरुच्यते। ज्योतीरूपस्तोमवत्वाज्ज्योतिष्टोम संज्ञा क्रतोः। ज्योतिष्टोमगतानां स्तोमानां त्रिवृदादिसङ्ख्यानां ज्योतीरूपेण संस्तवो दृश्यते–'त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वावतानि ज्योतींषि य एतस्य स्तोमा' इति। अतो ज्योतिरादिशब्दानामर्थान्तरप्रत्यायकत्वं नास्ति। ज्योतिरादिशब्दैः प्रकृतं ज्योतिष्टोममनूद्य तत्र सहस्रदक्षिणाख्यो गुणो विधीयत इति पक्षे प्राप्ते,

सिद्धान्तः–नाम्नां भेदात् तद्भेदः। 'अथैष ज्योतिः अथैष विश्वज्योतिः, अथैष सर्वज्योतिरिति त्रीण्युत्पत्तिवाक्यानि। उत्पत्तिवाक्यगतानि च नामानि कर्मभेदकानि भवन्ति। ज्योतिष्टोमशब्देन ज्योतिरादिशब्दानामेकदेशसाम्ये सत्यपि अर्थान्तरावगमात् प्रकरणविच्छेदस्तावत्स्पष्टः। ज्योतिष्टोमानुवादेन सहस्रदक्षिणाख्यो गुणोऽप्यनेन विधातुं न शक्यते, ज्योतिष्टोमस्य द्वादशशतदक्षिणावरुद्धत्वात्। अतो ज्योतिरादिपदानि पृथक्कर्मावबोधकानि। यद्यपि ज्योतिश्शब्दः 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यत्र ज्योतिष्टोमवाचकत्वेन प्रयुक्तः, तथापि न केवलमक्षरसाम्यमात्रेण तदेवेदमित्युन्नेतुं शक्यते, तादृशाक्षरसाम्यं यज्ञदत्त देवदत्त इत्यादौ सत्वात् एकनामत्वं साधयितुं न शक्यम्। अतो भिन्नार्थप्रतिपादका ज्योतिरादयश्शब्दाः। नन्वेवं दाक्षायणसंज्ञया कर्मभेदः

कुतो न स्वीक्रियते इति चेन्न; उत्पत्तिवाक्यगतानामेव नाम्नां कर्मभेदकत्वस्वीकारात् ।

'अथैष ज्योति' रित्यादौ यजतिपदाश्रवणात् कथं विधायकत्वमिति चेत्–एतेन सहस्रदक्षिणेन यजेत' इत्यत्र यजति शब्दस्य सत्वात् 'एतेन' इत्येतच्छब्देन प्रकृतज्योतिरादीनां परामर्शान्न दोषः । अतो नामभेदतः कर्मभेदः स्वीकार्यः ॥

## ९. गुणाधिकरणम्

गुणात्कर्मभेदः प्रतिपाद्यते । चातुर्मास्येषु वैश्वदेवपर्वणि 'सा वैश्वदेव्यामिक्षा; वाजिभ्यो वाजिनम्' इति श्रुतम् । विश्वेदेवा देवता अस्या इति वैश्वदेवीशब्दस्तद्धितान्तः । तेन विश्वेदेवदेवताकामिक्षाद्रव्यकयागविधायकं वाक्यमिदम् इति सम्पद्यते । तप्ते पयसि दधनि आनीते तत्पयः द्वेधा परिणमते । तत्र घनीभूतं वस्तु आमिक्षापदेन द्रवीभूतञ्च वाजिनपदेनाभिधीयते । तदत्र सन्दिह्यते 'वाजिभ्यो वाजिनम्' इति किं चतुर्थ्यन्तेन वाजिभ्यपदेन विश्वेदेवदेवता अनूद्य वाजिनरूपगुणं विधत्ते ? उत वाजिदेवताकवाजिनद्रव्यककर्मान्तरं विधत्त इति । तत्र 'वाजिभ्य' इति चतुर्थ्यन्तेन पदेन वाजमन्नमामिक्षारूपं येषाम् इति विग्रहबलेन सन्निहितविश्वेदेवा देवता अनूद्यन्ते । एवमनूद्य विश्वेदेवदेवताकयागे वाजिनाख्यगुणोऽनेन विधीयते । तत्रापि वाजिभ्य इति पदं विश्वेदेवान् विश्वेदेवत्वेनैवानुवदति न वाजित्वेन, नाप्यामिक्षायुक्तविश्वेदेवत्वेन । एवं सति उत्पत्तिशिष्टामिक्षाख्यं द्रव्यं वाजिनद्रव्यं न निरुन्ध्यात् । आमिक्षावाक्ये द्रव्यदेवतासम्बन्धात् 'आमिक्षया यजेत' इति यजतिपदं कल्पनीयम् । तच्च यजतिपदं केवलं यागस्वरूपमात्रमभिधत्ते । तस्य द्रव्याकाङ्क्षायां यथाऽऽमिक्षायास्सम्बन्धः तथा वाजिनस्यापि सम्बन्धो भवितुमर्हति । यतो हि 'वैश्वदेवी' इति तद्धितश्रुत्या सामान्यरूपेणैव द्रव्यमभिधीयते । आमिक्षारूपेणाभिधानन्तु पदान्तरेणैव वक्तव्यम् इत्यामिक्षासम्बन्धो वाक्यगम्यः, तथैव वाजिनसम्बन्धोऽपि वाक्यगम्य एवेति नानयोः प्रबलदुर्बलभावः । तथा च तुल्यबलत्वादुभयोर्द्रव्ययोर्विकल्प इति नात्र कर्मभेद इति पक्षे प्राप्ते,

सिद्धान्तः—संज्ञाया यथा कर्मभेदकत्वं तथा गुणस्यापि कर्मभेदकत्वम्। तादृशो गुणः कर्मभेदकः यश्च पूर्वस्मिन् कर्मण्यसम्भवन्निवेशः। 'सा वैश्वदेव्यामिक्षा' 'वाजिभ्यो वाजिनम्' इति वाक्यद्वयं निरपेक्षम्। पूर्वं वाक्यं सापेक्षं यदि भवेत् उत्तरेण वाक्येन गुणस्समर्पयितुं शक्यते। आमिक्षाविश्वेदेवसम्बद्ध एव यागः, तत्र यागमात्रस्य स्वरूपेणानुवादे सति सगुण एव बुद्धौ विपरिवर्तेत तदा गुणान्तरस्यापेक्षा कुतः ? किञ्च 'वैश्वदेवी' इति तद्धितश्रुतिः आमिक्षात्वेनैव द्रव्यमभिधत्ते, नात्र पदान्तरापेक्षा। आमिक्षेति पदान्तरं तदुपस्थापकत्वेन पर्यवस्यति। तदुक्तं वार्तिककारैः—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्॥ इति।

तस्मादामिक्षावाजिनयोस्तुल्यबलत्वाभावेन विकल्पो नाशङ्कितुं शक्यते। एवञ्चोत्पत्तिशिष्टगुणावरुद्धे कर्मणि उत्पन्नशिष्टो गुणोऽसम्भवन्निवेशः कर्म भिनत्ति इति॥

## १०. गुणापवादाधिकरणम्

'अग्निहोत्रं जुहोति' इति विहिताग्निहोत्रसन्निधौ 'दध्ना जुहोति' 'पयसा जुहोति' 'यवाग्वा जुहोति' इति वाक्यान्याम्नातानि। तान्यवलम्ब्य पूर्वाधिकरणापवादतया विचार्यते—किमिमानि दध्यादिवाक्यानि कर्मान्तरविधायकानि ? उताग्निहोत्र एव गुणविधायकानि इति। अग्निहोत्रवाक्येन होमो विहितः। तस्य द्रव्यापेक्षायां द्रव्यसमर्पणायैकैकं दध्यादि वाक्यं प्रवर्तते। प्रथमं दधिवाक्ये प्रवृत्ते दधिविशिष्टे होमे पयोऽसम्भवन्निवेशम् सत् पूर्वन्यायेन कर्म भिनत्ति। एवं पयोवाक्ये प्रथमं प्रवृत्ते दधिवाक्यं कर्मान्तरं विधत्त इति पक्षे प्राप्ते,

सिद्धान्तः—अग्निहोत्रहोमस्य द्रव्यापेक्षायां दध्यादिवाक्यानि खलेकपोतन्यायेन युगपदेव प्रवर्तन्ते, नैकैकशः। एकैकशः प्रवृत्तौ प्रमाणाभावात्। उपकारबुद्धिमादधानाः पुरुषाः परमुपकर्तुं युगपदेव प्रवर्तन्ते। दध्यादिवाक्यान्युपकारकाणि। अतस्तेषां युगपत्प्रवृत्तौ एकेनोपकारे सम्पादितेऽन्यस्य कालान्तरे ग्रहणं भविष्यतीति दध्यादिवाक्यानि गुणविधायकानि इति॥

## ११. इन्द्रियकामाधिकरणम्

अग्निहोत्रप्रकरणे 'दध्नेन्द्रियकामस्य जुहुयात्' इति श्रूयते। किमिदं वाक्यमग्निहोत्रात् कर्मान्तरं दधिसाधनकेन्द्रियफलकं विधत्ते ? उत प्रकृतमग्निहोत्रमाश्रित्य फलाय दधिमात्रं विधत्त इति सन्देहः। तत्र फलभाव्यकभावनायां धात्वर्थस्य करणत्वमिति भावार्थाधिकरण सिद्धत्वात् गुणमात्रं फलाय विधातुं न शक्यते। फलाय गुणे विधीयमाने 'दध्ना फलं भावयेत्' इति वाक्यार्थस्स्यात्। सिद्धस्य दध्नः फलसम्पादकत्वमनुपपन्नमिति होमोद्देशेनापि दध्नो विधानमिति वक्तव्यम्—दध्ना होमं भावयेदिति। तथा सति वाक्यभेदः। अतो दधिविशिष्टो होमः फलाय विधीयते। स च होमः प्रकृताग्निहोत्रात् भिन्न एव स्यात्। तस्मात्कर्मान्तरविधायकमिति पक्षे प्राप्ते,

सिद्धान्तः—कर्मान्तरविधाने प्रकृतहानाप्रकृतकल्पना प्रसज्येत, विशिष्टविधिगौरवञ्च स्यात्। अग्निहोत्रवाक्येन होमः प्राप्त इत्यत्र न कश्चिद्विवादः। होमस्य प्राप्तत्वाद् 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यनेन होमो न विधेयः। विधेयान्तरञ्चास्मिन् वाक्ये दधि वर्तते। तत्र विधिशक्तिः विश्राम्यति। ननु 'दध्ना जुहोति' इति दध्नः प्रापके वाक्ये विद्यमानेऽत्र दध्नः पुनर्विधानमनुपपन्नमिति चेन्न; 'दध्ना जुहोति' इति क्रत्वर्थतया दधि विधत्ते, अत्र तु पुरुषार्थतयेति स्वीकारात्। क्रत्वर्थतया पुरुषार्थतया च विधेर्भेदेऽपि विधेयं दधि भिन्नं न भवति। तत्र क्रत्वर्थतया विधीयमानस्य दध्नः तृतीयाश्रुत्या होमसाधनत्वम्, पुरुषार्थतया विधीयमानस्य तु फलसाधनत्वमिति भेदः। दध्नो होमसाधनत्वञ्च होमनिर्वर्तकतया, एवं निर्वर्तितो होमो धात्वर्थः करणत्वेन भावनायामन्वेति। अत एव 'अग्निहोत्रं जुहोति' इत्यत्राग्निहोत्रहोमेन भावयेदिति 'दध्ना-जुहोति' इत्यत्र च दध्नो विधेयत्वात् होमस्य च प्राप्तत्वात् दध्ना होमं भावयेदिति च बोधो भवति। 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र च विधेयं दधि उद्देश्यञ्च फलम् दध्ना फलं भावयेदिति सम्पन्ने जुहोतेः कथमन्वयः ? साध्यत्वेन वा साधनत्वेन वाऽन्वयोऽनुपपन्नः, होमोद्देशेन दध्नो विधानाभावात् होमस्य च प्राप्तत्वात् इति जिज्ञासायां फलाय

दधिरूपो गुणः काञ्चन क्रियामाश्रित्यैव फलसम्पादको भवितुमर्हतीति कृत्वा यस्याः कस्याश्चिद् क्रियायाः प्राप्त्यपेक्षया अग्निहोत्रहोम एवोपतिष्ठते प्रकृतत्वात्। एवमुपस्थितो होमः फलार्थस्य दध्नस्साहाय्यमाचरति—स्वाश्रितं सत् दधि फलसम्पादकं भवत्विति। तथा च जुहोतेराश्रयत्वेनान्वयः फलति प्रकृतहोमाश्रितेन दध्ना इन्द्रियरूपं फलं भावयेदिति ॥

## १२. रेवत्यधिकरणम्

'त्रिवृदग्निष्टुदग्निष्टोमः' इति वाक्येनाग्निष्टुद्यागो विहितः। अग्निष्टुत् इति कर्मणो नाम। अग्निष्टुत्संज्ञको याग इत्यर्थः। अयम् अग्निष्टोमः-अग्निष्टोमाख्यस्तोत्रेण संस्थाप्यः। त्रिवृत्-स्तोत्रीयानवकस्तोमक इत्यर्थः। तथा च स्तोत्रीयानवकस्तोमकेन अग्निष्टोमसंस्थाकेन अग्निष्टुत्क्रतुना इष्टं भावयेदिति बोधः। अयं सोमयागोऽग्निष्टोमसंस्थाकज्योतिष्टोमविकृतिः। अयमेव क्रतुः फलविशेषाय 'तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत' इत्यनेन विहितः। तस्येति प्रकृताग्निष्टुद्यागस्य परामर्शः। तत्राग्निष्टोमसाम्नः प्रकृतिवदाधारभूता 'यज्ञायज्ञा वो अग्नये' इत्याग्नेय्यः ऋच आसन्। तत्स्थाने वायव्या ऋचः। तत्र स्तोमः उत्पत्तिवाक्येन त्रिवृत् प्राप्तः। तत्स्थाने एकविंशस्तोमः कर्तव्यः। तथा च वायुदेवताकासु ऋक्षु अग्निष्टोमसाम एकविंशस्तोमकं सम्पाद्याग्निष्टुद्यागानुष्ठाने सति ब्रह्मवर्चसं फलं भवति। एवञ्च वायुदेवताकर्गधिकरणकैकविंशस्तोमकाग्निष्टोमसामसाध्यकाग्निष्टुद्यागेन ब्रह्मवर्चसं भावयेत् इति वाक्यार्थः पर्यवस्यति। तृतीयं वाक्यम्—'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति। इदमेवास्याधिकरणस्योदाहरणम्। अस्यार्थः—'रेवत्यः' रेशब्दघटिता 'रेवती नः' इत्याद्या ऋचः। 'वारवन्तीयं' 'अश्वं न त्वा वारवन्तमि'त्यस्यामृचि गेयं साम। तदिह साम 'अग्निष्टोम साम कृत्वा' अग्निष्टोमसाम्नो यत्र गानं तत्र कृत्वा पशुफलकामनावान् यजेत इति।

अत्रैवं सन्दिह्यते—किं प्रकृतमग्निष्टुद्यागमाश्रित्य फलाय गुण-

विधिः ? उत गुणविशिष्टापूर्वकर्मणः फलोद्देशेन विधिरिति । तत्र 'एतस्यैव' 'एतेन' इत्येतच्छब्दाभ्यां प्रकृतस्याग्निष्टुद्यागस्य परामर्शः क्रियत इति स्फुटं प्रतीयते । तदुत्सृज्य कर्मान्तरविधाने प्रकृतस्य हानिः, अप्रकृतस्य कल्पना, विशिष्टविधिगौरवञ्चेत्यनेके दोषास्स्युः । अत इन्द्रियकामाधिकरणन्यायेन पूर्वस्मिन्नेव कर्मणि फलाय गुणविधिर्युक्तः । न चेन्द्रियकामवाक्ये दध्ना साक्षात् होमस्साध्यत इति फलाय विधीयमानस्य दध्नो होम आश्रयो भवतीति युक्तं फलाय गुणविधानम् । अत्र तु फलाय विधीयमानं वारवन्तीयं साम, तेन न यागस्साध्यते । अतः कथं वारवन्तीयमाश्रयेण विना फलसम्पादनक्षमं स्यादिति वाच्यम्, साम्नस्साक्षाद्यागसाधनत्वाभावेऽपि आनर्थक्यतदङ्गन्यायेन यागाङ्गस्तोत्रसाधनत्वात्परम्परया यागसाधनत्वसम्भवात् । न च वारवन्तीयसाम्नो रेवतीषु ऋक्षु गानमप्राप्तं विधेयम्, अग्निष्टोमसामसम्बन्धश्चाप्राप्तः सोऽपि विधेयः; फलसम्बन्धश्च विधेय इत्यनेकविधाने वाक्यभेद इति वाच्यम्, 'यजेत' इति श्रूयमाणस्य विधेर्व्यापाराभावात्, 'कृत्वा' शब्देनैव रेवतीवारवन्तीयसम्बन्धस्याग्निस्टोमसामसम्बन्धस्य च सिद्धत्वेन तदुपस्थितस्य रेवत्याधारवारवन्तीयस्य फलसम्बन्धमात्रविधानेन विध्यावृत्यभावाच्च । तस्मादग्निष्टोमस्तोत्रद्वाराऽग्निष्टुद्यागमाश्रित्य रेवत्याधारवारवन्तीयगुणः पशुफलाय विधीयत इति पक्षे प्राप्ते,

सिद्धान्तः—वारवन्तीयं साम; साम च गीतिविशेषः, तस्य द्रव्यदेवतासाधनकयागं प्रति साधनत्वमनुपपन्नम् । एवं सति यागमाश्रित्य वारवन्तीयं फलाय विधीयत इति कथं स्यात् ? ननु आनर्थक्यतदङ्गन्यायेन स्तोत्रद्वारा यागसम्बन्धः साम्नोऽस्तीति चेन्न; आनर्थक्यतदङ्गन्याये सप्तदशारत्नित्वस्य वाजपेयसम्बन्धः चोदितः—'सप्तदशारत्निर्वाजपेयस्य' इति सम्बन्धो न सम्भवतीति वाजपेयाङ्गभूतयूपमुपसर्पतीति युक्तम्, प्रकृते वारवन्तीयं फलोद्देशेन चोदितम्; न तु यागोद्देशेनेति वैषम्यात् । अतो नात्रानर्थक्यतदङ्गन्यायावतारः । यदुक्तम् कृत्वाशब्देनैव रेवतीवारवन्तीयसम्बन्धस्याग्निष्टोमसामसम्बन्धस्य च सिद्धत्वेन वाक्यभेदो नास्तीति, तत्रोच्यते—वारवन्तीयस्य रेवत्याधारकत्वाग्निष्टोमसामस्थानकत्वयोः प्रापकवाक्यान्तरसत्त्वे कृत्वाशब्दस्य तदनुवादद्वारा तदुपस्थापक-

त्वं सिद्धं स्यात्। न चैतदस्ति, अनेनैव वाक्येनोक्तसम्बन्धद्वयमवगन्तव्यम्। तथा सति विध्यावृत्तिः कुतो न स्यात्? न च 'वारवन्तीयमग्निष्टोमसाम कार्यम्' इति प्राकरणिकवाक्येन वारवन्तीयस्याग्निष्टोमसामस्थानकत्वस्य प्राप्तत्वेन न तत्र विधेर्व्यापार इति वाच्यम्; इदं वाक्यं क्रत्वर्थतया वारवन्तीयविधानाय प्रवृत्तम्। रेवत्याधारवारवन्तीयन्तु पुरुषार्थतया प्राप्तमित्युभयोर्वाक्ययोर्भिन्नार्थविधायकत्वात्। एवञ्च रेवत्याधारवारवन्तीयस्याग्निष्टोमसामसम्बन्धस्य फलसम्बन्धस्य च विधानमनेनैव वाक्येन स्वीकर्तव्यम्। तथा च वाक्यभेदो दुर्वारः। तदर्थं रेवतीवाक्येऽपूर्वकर्मविधिरेवाश्रयणीयः। तत्रैवं प्रकारः—सर्वत्र विधिवाक्येषु भावना विधीयत इति भावार्थाधिकरण उक्तम्। यदि प्रमाणेन सा भिन्ना भवति, तर्हि तत्तनुरक्तो धात्वर्थोऽपि भिन्नो भवति; अपूर्वञ्चापि भिन्नं भवतीति स्थितौ सत्यां प्रकृते रेवतीवाक्यगतेन 'यजेत' पदेनाख्यातोपात्तभावना विहिता। एवमेव त्रिवृद्वाक्येन वायव्यवाक्येन च भावना विहिता। तत्र त्रिवृद्वाक्यवायव्यवाक्याभ्यामेकैव भावनेत्यत्र कारणं विद्यते। त्रिवृद्वाक्येन यागं विधाय 'तस्य' इति वायव्यवाक्यं प्रवृत्तम्। तच्छब्दस्य पूर्वपरामर्शकत्वं स्फुटं प्रतीयते। तस्यैव यागस्य वायव्यवाक्योक्तगुणविशिष्टतयाऽनुष्ठाने ब्रह्मवर्चसं फलमित्यङ्गीकारे प्रकृतहानाप्रकृतकल्पनादिकं न भवति। रेवतीवाक्यगतेन 'एतस्यैव' इति पदेन त्रिवृद्वाक्यविहितयागस्य परामर्शे सति तत्रानेकेषां गुणानां विधाने वाक्यभेदस्स्यादिति विशिष्टविधिराश्रयणीयः। तत्र 'कृत्वा' इति क्त्वाप्रत्ययः साहाय्यमाचरति। क्त्वाप्रत्ययार्थो भावना। सा रेवतीवारवन्तीयसम्बन्धाग्निष्टोमसामसम्बन्धविशिष्टा। इयञ्च 'यजेत' इत्याख्यातोपात्तप्रधानभावानाया उपसर्जनीभूता। एवञ्च रेवतीवारवन्तीयसम्बन्धाग्निष्टोमसम्बन्धविशिष्टक्त्वाप्रत्ययोपात्तभावनोपसर्जनकभावना फलोद्देशेन विधीयत इति सिध्यति। तत्र 'एतस्यैव' 'एतेन' इति पदद्वयं प्रस्तूयमानकर्मपरम् इति कर्मान्तरमेवाङ्गीकर्तव्यम्॥

## १३. सौभराधिकरणम्

ब्रह्मसामाभिधस्स्तोत्रविशेषो ज्योतिष्टोमे सवनीयदिने विहितः। तत्र सौभरं साम। तदधिकृत्य श्रूयते—'यो वृष्टिकामो योऽन्नाद्यकामो

यस्स्वर्गकामः स सौभरेण स्तुवीत' इति । सौभरस्तवनेन फलत्रयं प्राप्नुयादित्यर्थः । एवं फलोद्देशेन स्तुतिं विधाय 'हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाय' इति श्रुतम् । साम्नः पञ्च भक्तयः–अवयवा भवन्ति–प्रस्ताव उद्गीथः प्रतिहारः उपद्रवः निधनञ्चेति । अन्तिमा भक्तिः निधनमिति कथ्यते । फलत्रयोद्देशेन सौभरं विधाय हीष् ऊर्क्, ऊ इति निधनानां प्रत्येकं वृष्ट्यादिफलमाम्नातम् । इदमेव वाक्यमस्याधिकरणस्य विषयः । अत्र सन्देह––किमिमे निधनविशेषाः सौभरफलात् फलान्तरार्थत्वेन विधीयन्ते ? उत फलं साधयतस्सौभरस्यैव निधनविशेषा नियम्यन्त इति ।

तत्र 'हीषिति वृष्टिकामाय' इत्यादौ चतुर्थ्यन्तेन पदेन तत्तफलाभिलषितृपुरुषशेषत्वं निधनानां प्रतीयते । पुरुषशेषत्वञ्च साधनत्वरूपम्। हीषिति निधनेन वृष्टिकामः फलं साधयेदिति पर्यवस्यति । नियमविधौ तु 'वृष्टिकामाय' इत्यस्य–सौभरेण साम्ना वृष्टिमभिलषन् पुरुषः हीषित्येव निधनं कुर्यादित्यर्थः कर्तव्यस्स्यात् । अयञ्चार्थो लक्षणयैव स्यात् । अपूर्वविधितो नियमविधिर्यद्यपि ज्यायान्, तथापि लक्षणाग्रस्तत्वान्नियमो नाश्रीयते, अतः फलान्तरार्थतयैव हीषादयो विधीयन्त इति पक्षे प्राप्ते,

सिद्धान्तः––'यो वृष्टिकामो योऽन्नाद्यकामो यस्स्वर्गकामस्स सौभरेण स्तुवीते' ति तत्तत्फलार्थतया सौभरे साम्नि चोदिते हीषादीनि निधनानि नियम्यन्ते । सर्वावयवोपेतस्य सौभरसाम्नो वृष्ट्यादीनि फलानि विधिना बोध्यन्ते । निधनञ्च साम्नोऽवयवः । हीष् इति निधनोच्चारणमात्रेण न खलु वृष्टिः फलं भवितुमर्हति । तदर्थं सर्वावयवोपेतसाम्नो गानमावश्यकम् । तच्च गानं 'यो वृष्टिकाम' इत्यादिवाक्येन चोदितम् । 'हीषिति वृष्टिकामाय निधनं कुर्यात्' इति वाक्ये वृष्टिशब्दः सामविधायकवाक्यगतवृष्टेः प्रत्यभिज्ञापकः । वृष्ट्यादीनि च फलानि सौभरं साम साधनमवाप्य निराकाङ्क्षाणि न हीषादिनिधनान्यपेक्षन्ते । न च वृष्टिफलाय हीषिति निधनस्य पृथक्साधनस्य विहितत्वात् प्रत्यभिज्ञां बाधित्वा फलान्तरपरत्वमेवास्त्वति वाच्यम्, विधीयमानहीषादि

निधनानामाश्रयालाभात् । न हि सौभरमाश्रयो भवितुमर्हति, तस्य सर्वावयवोपेतत्वात् निधनमात्रेण निर्वर्तयितुमशक्यत्वाच्च । यदुक्तं फलोद्देशेन निधनस्य विधाने लक्षणेति तत्रोच्यते स्वसाधनसौभराधारत्वसम्बन्धेन हीषिति निधनस्य फलोद्देशेन विधीयमानत्वान्न दोषः । तस्मात् 'हीषिति वृष्टिकामाय निधनं कुर्यात्' इति वाक्यस्य वृष्टिकामाय यत्सौभरं तत्र हीषिति निधनं कुर्यादित्यर्थः स्वीकर्तव्यः । तथा च निधनानामव्यवस्थया प्राप्तानां व्यवस्थार्थमिमानि वाक्यानीति सिध्यति ॥

इति द्वितीयाध्यायस्य द्वितीयः पादः

---

## द्वितीयाध्यायस्य तृतीयः पादः

### १. रथन्तरसामाधिकरणम्

पूर्वस्मिन् पादे कर्मभेदः प्रतिपादितः, अस्मिन्पादे तदपवादः प्रतिपाद्यते । ज्योतिष्टोमे 'यदि रथन्तरसामा सोमस्स्यादैन्द्रवायवाग्रान् ग्राहन् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान् इति श्रुतम् । अस्याधिकरणस्येदमेव विषयवाक्यम् । अस्यार्थः--रथन्तरं साम यस्य सः रथन्तरसामा सोमो-ज्योतिष्टोमो यदि स्यात्तर्हि ग्रहेष्वैन्द्रवायवग्रहस्याग्रता स्यात्-बहुषु ग्रहेषु ग्रहीतव्येषु ऐन्द्रवायवग्रहस्याग्रता-प्राथम्यं स्यात् । यदि च बृहत्सामा ज्योतिष्टोमस्तर्हि ग्रहग्रहणे शुक्रग्रहस्य प्राथम्यं स्यात् । ज्योतिष्टोमे माध्यन्दिनसवने क्रियमाणेषु सप्तदशस्तोमकपृष्ठस्तोत्रेषु षट् सामानि विहितानि रथन्तरं बृहत् वामदेव्यम् नौधसं श्यैतं कालेयमिति । तेषु बृहद्रथन्तरयोः नौधसश्यैतयोर्विकल्पो विहितः–'रथन्तरं वा पृष्ठं भवति बृहद्वा; नौधसं वा श्यैतं वा' इति । तथा सति चत्वारि सामानि–रथन्तरवामदेव्य-नौधस-कालेयानि, अथवा बृहद्वामदेव्यश्यैत कालेयानि नियतानि भवन्ति । तत्र यदि रथन्तरसामा ज्योतिष्टोमस्तदा ऐन्द्रवायवग्रहस्याग्रता; यदि च बृहत्सामा सः तर्हि शुक्रग्रहस्याग्रता इति । 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' 'आश्विनं गृह्णाति'

इत्यादि वाक्यैर्ग्रहग्रहणानि विहितानि। तेषु कस्य ग्रहस्याग्रतेति बोधनाय 'यदि रथन्तरसामा' इत्यादिवाक्यं प्रवृत्तम्।

अत्र सन्दिह्यते—किमिदं वाक्यं ज्योतिष्टोमात्कर्मान्तरं रथन्तरसामेति बृहत्सामेति च विधत्ते? उत ज्योतिष्टोमे एव नैमित्तिकग्रहाग्रतारूपगुणं विधत्ते इति। तत्र 'रथन्तरसामा' शब्दस्य बहुव्रीहिसमासः—रथन्तरं साम यस्येति। सर्वं वाक्यं सावधारणमिति न्यायेन रथन्तरातिरिक्तसामवतः क्रतोः 'यस्ये'ति यच्छब्देन ग्रहणं न भवति। तदा रथन्तरसामवान् क्रतुरनेनोच्यत इत्यङ्गीकर्तव्यम्। प्रकृतज्योतिष्टोमे तु न केवलं रथन्तरं साम वर्तते गायत्रवामदेव्यादीनामपि सत्त्वात्। ज्योतिष्टोमस्य सामान्तरसापेक्षत्वेन रथन्तरसामशब्दस्य व्यपेक्षालक्षणसामर्थ्याभावेन समासानुपपत्तिर्भवेत्। समासे च रथन्तरस्य विशेषणत्वमनुपपन्नं स्यात्। तथा च प्रकृते ज्योतिष्टोमकर्मणि निवेशमलभमानस्यास्य कर्मान्तरबोधकत्वं कल्पनीयम्। ननु कर्मान्तरत्वे निमित्तबोधकयदिशब्दस्य सङ्गतिः कथमिति चेत्—यदि रुचिस्स्यात् रथन्तरसामानं क्रतुं कुर्यादिति वा, यद्यैन्द्रवायवाग्रान् ग्रहान् ग्रहीतुमिच्छेत्तदा रथन्तरसामानं क्रतुं कुर्यादिति वा यदिशब्दो नेतुं शक्यते। तस्माद्रथन्तरबृहदन्यतरस्तोत्रकम् ऐन्द्रवायवाग्रतादियुक्तं कर्मान्तरं विधीयत इति पक्षे प्राप्ते,

सिद्धान्तः—नात्र कर्मान्तरविधिः, अपितु रथन्तरे निमित्ते ऐन्द्रवायग्रता विधिः; बृहति निमित्ते शुक्राग्रताविधिः। निमित्तत्वप्रतिपादकयदिशब्दबलात् प्रकृतस्यैव कर्मणः सोमशब्दो वाचकः। ननु प्रकृते कर्मणि रथन्तरातिरिक्तसाम्नां सत्त्वात् कथं रथन्तारसामाशब्दः प्रकृतं ज्योतिष्टोममनुवदेदिति चेत्—अन्ययोगव्यावृत्तिद्वारा विशेषणत्वासम्भवेऽपि स्वायोगव्यावृत्तिद्वारा विशेषणत्वोपपत्तेः। बृहद्रथन्तरयोस्साम्नो वैकल्पिकत्वेन बृहत्पक्षे रथन्तरस्य, रथन्तरपक्षे च बृहतोऽयोगोऽस्तीति तद्व्यावृत्त्या विशेषणत्वोपपत्तेः। अयोगव्यावृत्तिदशायां सामान्तारसत्त्वेऽपि न कश्चन विरोधः। व्यवच्छेदस्तु विरोधनिबन्धनः, सामान्तारैस्सह रथन्तारस्य न विरोधः; किन्तु बृहता सहास्ति, उभयोर्विकल्पितत्वात्। एवञ्च व्यपेक्षालक्षणसामर्थ्यस्य सत्त्वात् समासे न काप्यनुपपत्तिरिति सिद्धम्।

तस्मात्प्रकृताज्योतिष्टोमे रथन्तरादिनिमित्ते ग्रहाग्रतारूपगुणविधिः, न तु गुणात्कर्मभेदः ॥

## २. अवेष्ट्यधिकरणम्

राजकर्तृके राजसूये 'दिशामवेष्टयो भवन्ति' इत्यारभ्य 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा, ऐन्द्रमेकादशकपालमृषभो दक्षिणा, वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा, बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा' इति दिशामवेष्टिसंज्ञकाः पञ्च यागा विहिताः। पिशङ्गी पष्ठौही-पिङ्गलवर्णा बालगर्भिणी गौः। वशा-वन्ध्या गौः। तत्रेदं श्रूयते--'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेत्, यदि राजन्य ऐन्द्रम्, यदि वैश्यः वैश्वदेवम्' इति। यदि ब्राह्मणकर्तृकः प्रयोगस्तदा आग्नेयादीनि चत्वारि हवींषि प्रतिदिशमवस्थाप्य मध्ये बार्हस्पत्यं चरुं संस्थाप्य क्रमेणाग्नेयादिकं हुत्वा मध्ये निहितं हविरभिघारयेत्–संस्रावं क्षारयेत्, एवं राजन्यकर्तृके प्रयोगे ऐन्द्रहविषो मध्ये निधानम् तस्य तस्य हविषो होमानन्तरं मध्यहविषोऽभिघारणम्, एवं वैश्यकर्तृकप्रयोगे वैश्वदेवहविषो मध्ये निधानं तत्तद्धविषो होमानन्तरं मध्यहविषोऽभिघारणम् अन्ते च मध्यहविषो होम इति वाक्यस्यार्थः। अस्याधिकरणस्येदमेव विषयवाक्यम्। अत्रैवं सन्दिह्यते--किमिमा इष्टयः पूर्वाधिकरणन्यायेन प्रकृतराजसूये ब्राह्मणादिकर्तृकत्वनिमित्तेन गुणविधायकाः? उतापूर्वकर्मणः प्रयोगविधायका इति। तदर्थं किं राजशब्दः क्रियाप्रवृत्तिनिमित्तकः? उत जातिप्रवृत्तिनिमित्तकः? इति विचारः। तत्र प्रजापालनरूपं राज्यं करोति यः स राजेति सार्वत्रिकप्रयोगदर्शनात् त्रैवर्णिकेषु तादृशकर्तृत्वसम्भवात् ब्राह्मणादिकर्तृकत्वे निमित्ते गुणविधिः। ननु राजशब्दवाच्यक्षत्रियजात्यधिकृते राजसूये ब्राह्मणवैश्ययोः कथमधिकारः? येन ब्राह्मणादिवर्णनिमित्ते गुणविधिसम्भव इति चेत्–न; राज्ययोगाद्राजेति सर्वलोकप्रसिद्धेः ब्राह्मणवैश्ययोरपि तद्योगेन निमित्तत्वसम्भवात्। न च क्षत्रियजातिपरत्वं राजशब्दस्येति युक्तम्, तस्यैकदेशप्रसिद्धिविषयत्वात् विप्रतिपन्नत्वाच्च। यद्यपि धर्मग्रन्थेषु पुराणेषु च क्षत्रियस्यैव राज्ययोगो दृश्यते न तु ब्राह्मणादेः, तथापि शब्दप्रवृत्तिनिमित्तविषये सर्वलोकप्रसिद्धिरेव

ज्यायसी, अतो ब्राह्मणादीनामपि राजशब्दवाच्यत्वे न किञ्चिद्बाधकम् । ननु राज्यशब्दो राज्ञः कर्मेत्यर्थे यक् प्रत्ययान्तो व्याकरणस्मृतिसिद्धः । स्मृतिश्चाचारात्प्रबला । अतो योगाश्रयणं नोचितमिति चेत्—अत्र वदामः—आचाराद्स्मृतिर्बलीयसीत्यत्र न विवादः किन्तु व्याकरणस्मृतिः राज्ञः कर्मेत्यर्थे यक् प्रत्ययं विधाय राज्यशब्दस्य साधुत्वे नियामिका सती शब्दप्रयोगरूपमाचारं बाधितुं न क्षमा, व्याकरणस्य प्रयोगमूलत्वात् । 'यदि ब्राह्मणो यजेत' 'यदि वैश्यो यजेत' इत्यत्र यदिशब्दौ ब्राह्मणवैश्ययोः कर्तृत्वं सिद्धवदनुवदतः । प्राप्तिं विनाऽनुवादो न घटते । तस्माद् ब्राह्मणादिनिमित्ते राजसूयान्तर्गतावेष्टियागेषु मध्यनिधानादिगुणविधायकमिदं वाक्यमिति पक्षे प्राप्ते,

सिद्धान्तः—'यदि ब्राह्मणो यजेत' इत्यादिवाक्यमप्राप्तप्रापकम्—अपूर्वकर्मविधायकमित्यर्थः । राजा 'राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र 'राजसूय' शब्द आख्यातपरतन्त्रः । आख्यातान्तशब्दो यान् यागान् वदति ते राजसूयशब्दवाच्याः । स्वाराज्यकामशब्दोऽधिकारिणं पुरुषं वदति तस्य विशेषणं 'राजा' इति । अर्थात् राजा सन् यस्स्वाराज्यकामः स राजसूयेन यजेत । अत्र पुरुषविशेषणत्वेन श्रूयमाणस्य 'राजा' इति शब्दस्य जातिप्रवृत्तिनिमित्तकत्वमेव स्वीकर्तव्यम् यथा—अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्र ब्राह्मणमातापितृजन्यस्य ब्राह्मणशब्देन परिग्रहः; तथा 'राजानमभिषेचयेत्' इत्यत्रपि क्षत्रियमातापितृजन्यस्यैव 'राजानम्' इति पदेन ग्रहणं युक्तं भवति । अभिषेचनश्चेदं प्रजापरिपालनरूपराज्ययोगनिमित्तकं कर्तव्यत्वेन वाक्यमुपदिशति । एतादृशवाक्ये 'राजानम्' इति पदं प्रयुक्तम् । अभिषेकानन्तरमेवायं राजा भविता । ततः पूर्वं राजपदं संस्कार्यत्वेन निर्दिष्टं वर्तते । तदिदमसङ्गतं स्यात् यदि राजपदं राज्ययोगनिमित्तकं स्यात् । व्याकरणस्मृतेर्वेदमूलकत्वेन प्रामाण्यं व्याकरणाधिकरणे व्यवस्थापितम् । राजशब्दात्कर्मणि यग्विधायकव्याकारणस्मरणं 'राजानमभिषेचयेत्' इत्यभिषेकविध्यनुगृहीतप्रामाण्यकमिति प्रजापालनकारित्वनिबन्धनः प्रयोगो गौणतया नेयः । यदुक्तं यदिशब्दो निमित्तबोधक इति तत्रोच्यते—निपातत्वाद्यदिशव्दस्य निमित्तातिरिक्तार्थपरत्वेन नेतुं शक्यत्वात् । एवञ्च 'यदि ब्राह्मण' इत्यादिः

ब्राह्मणविशिष्टप्रयोगान्तरविधायकः । अस्यैव फलसम्बन्ध 'एतयाऽन्नाद्यकामं याजयेत्' इति वाक्येन बोध्यते । क्षत्रियकर्तृकराजसूयान्तर्गतावेष्टेः फलन्तु स्वाराज्यप्राप्तिरिति व्यवस्थापि सङ्गच्छते । तस्माद् 'यदि ब्राह्मणो यजेत' इत्यादिवाक्यमवेष्टिप्रयोगान्तरं ब्राह्मणादिविशिष्टं विदधातीति ॥

## ३. आधानाधिकरणम्

पूर्वाधिकरणे यदिशब्दसत्त्वेऽपि तस्य निमित्तबोधकत्वं निराकृत्य प्रयोगान्तरविधायकत्वमवस्थापितम् । अस्मिन्नधिकरणे यदिशब्दाभावेऽपि निमित्तबोधकत्वं वाक्यानामाशङ्क्य निराक्रियते । 'वसन्ते ब्राह्मणोऽग्नीनादधीत; ग्रीष्मे राजन्यः, शरदि वैश्यः; वर्षासु रथकारः' इति वाक्यान्याम्नायन्ते । अत्र विचार्यते-किमाधाने ब्राह्मणादिनिमित्ते वसन्तादिकालविधिः? उत ब्राह्मणादिवसन्तादिविशिष्टाधानविधिरिति । तत्र दर्शपूर्णमासादय उत्तरक्रतव आहवनीयाद्यग्निसापेक्षाः । अतस्तत्तत्क्रतुविधय आहवनीयादिसिद्ध्यर्थमाधानमाक्षेप्तुं शक्नुवन्ति । आक्षिप्ते आधाने कर्तृत्वेन ब्राह्मणादीनां प्राप्तिस्सम्भवति । एवं प्राप्तान् ब्राह्मणादीन् निमित्तीकृत्य वसन्तादिर्गुणो विधातुं शक्यते । ननूत्तरक्रतुविधयोऽग्निसाध्या इति हेतोराधानमाक्षिपन्तु, परं तेऽग्नय आहवनीयादय आधानसाध्या इति कथं ज्ञानं भवेदिति चेन्न; 'य एवं विद्वानग्निमाधत्ते' इति सामान्यविधिनाऽग्नीनां साध्यत्वज्ञानसम्भवात् । एवं प्राप्ताधाने ब्राह्मणादिनिमित्ते सति वसन्तादिर्विधीयत इति पक्षे प्राप्ते,

सिद्धान्तः—वसन्तादिवाक्यं ब्राह्मणादिवसन्तादिविशिष्टाधानप्रापकम् न तु प्राप्तमाधानमुद्दिश्य कालविशेषबोधकम्, सर्वक्रत्वर्थतयाऽऽधानस्य प्राप्त्यभावात् । ननु क्रतुविधिभिराधानस्याक्षेप इत्युक्तमिति चेन्न; क्रतुविधिभिराधानमात्रस्याक्षेपेऽपि तस्य स्वकर्तव्यत्वासिद्धेः । परानुष्ठिताधाननिष्पन्नाग्नीनां याच्ञाक्रयादिना लब्धुं शक्यत्वात् । यदुक्तं 'य एवं विद्वानग्निमाधत्ते' इति वाक्यं प्रापकमिति तन्न; प्रत्यक्षेण विधायकवाक्ये विद्यमाने 'आधत्ते' इति लट्लकारस्य विधित्वकल्पनाक्लेशः कुतोऽनु-

भवितव्यः । यद्यपि वसन्तादिवाक्येषु आहवनीयादीनामुल्लेखो नास्ति, तथापि गुणवाक्येषु 'नक्तं गार्हपत्यमादधाति' 'अर्धोदिते सूर्य आहवनीयमादधाति' इत्यादिषु गार्हपत्यादीनां साध्यत्वदर्शनात् तद्बलेन वसन्तादिवाक्यगताग्निशब्दस्य गार्हपत्यादिपरत्वे पर्यवसानं भवितुमर्हति । तस्माद् वसन्तादिवाक्यमाधानप्रापकं न गुणविधायकम् इति ॥

## ४. दाक्षायणयज्ञाधिकरणम्

दर्शपूर्णमासौ प्रकृत्य श्रूयते 'दाक्षायणयज्ञेन सुवर्गकामो यजेत' साकम्प्रस्थायीयेन यजेत पशुकामः' इति । अत्रापि पूर्ववत्कर्मान्तरविधिः गुणविधिर्वेति विचार्यते । दक्षस्येमे दाक्षा ये ऋत्विजः तेषामयजम् आवृत्तिरिति दाक्षायणः तत्संज्ञको यज्ञ इति दाक्षायणशब्दार्थः । एवं दर्शे दधिकुम्भी पयःकुम्भीति कुम्भीद्वयम् । 'सहकुम्भीभिरभिक्रामं जुहोति' इति वाक्येन कुम्भीभिस्साकं सहप्रस्थानमाहवनीयदेशं प्रति चोदितम् । सहप्रस्थानसम्बन्धी साकम्प्रस्थायीयः तेन पशुकामो यजेत इति वाक्यद्वयस्यार्थः । तत्र दाक्षायण इति साकम्प्रस्थायीय इति संज्ञाबलात् 'अथैष ज्योतिः अथैष सर्वज्योतिः' इत्यादाविव कर्मान्तरविधानं युक्तम् । अथवा 'दर्शपूर्णमासाभ्यां यजेत' 'दाक्षायणयज्ञेन यजेत' 'साकम्प्रस्थायीयेन यजेत' इति यजतिपदाभ्यासेन प्रयाजादिष्विवाभ्यासात् कर्मभेद इति युक्तम् । दाक्षायणयज्ञादिवाक्येषु लोकप्रसिद्धगुणस्याश्रवणात् । ततश्चाभ्यासात्कर्मभेदस्सिध्यतीति पक्षे प्राप्ते,

सिद्धान्तः——दर्शपूर्णमासयोरवस्थाविशेषविधायके इमे वाक्ये; न तु कर्मान्तरविधायके । तथा हि—दर्शपूर्णमासप्रकरणे 'द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत' इति वाक्यशेषात् 'सहकुम्भीभिरभिक्रामञ्जुहोति' इति वाक्यशेषाच्च दर्शपूर्णमासयोरावृत्तिरूपः, कुम्भीभिस्सह प्रस्थानरूपश्च गुणः प्रतीयते । ततश्च दक्षस्योत्साहिनो यजमानस्य सम्बन्धिनो दाक्षा ऋत्विजः, तत्कर्तृकद्विः प्रयोगः तादृशो यो यज्ञः तेन यजेत इति; एवं साकम्प्रस्थायः-सहप्रस्थानम् तत्सम्बन्धी साकम्प्रस्थायीयः तेन यजेत इत्यावृत्तिसहप्रस्थानरूपो गुणः फलाय विधीयत इति सिध्यति, यद्यपि फलाय गुणविधिस्थले धात्वर्थस्यैव विधानमङ्गीकर्तव्यम्, फलस्या

विधेयत्वात्, तथापि प्राप्ताप्राप्तविवेकन्यायेन विधिर्गुणे एव विश्राम्यति, 'दध्नेन्द्रियकामस्य जुहुयात्' इतिवत्। अतो न कर्मान्तरं किन्तु गुणविधिरेव। किञ्च 'त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत यदि दाक्षायणयज्ञी स्यात् पञ्चदश वर्षाणि यजेत तत्र्ह्येवं सम्पद्यते' इति वाक्येन त्रिंशतं वर्षाणि दर्शपूर्णमासयाजिनो यावती दर्शपूर्णमासप्रयोगाणां सङ्ख्या सा दाक्षायणयज्ञयाजिनस्सम्पद्यत इति बोध्यते। तदिदं कर्मान्तरत्वविधाने न घटेत। यदुक्तं संज्ञया कर्मभेद इति; तत्रोच्यते—संज्ञया कर्मभेदः 'अथैष ज्योतिः' इत्याद्युत्पत्तिवाक्यगतया संज्ञया स्वीकृतः। दाक्षायणयज्ञ इति साकम्प्रस्थायीय इति च संज्ञा नोत्पत्तिवाक्यगता। दर्शपूर्णमासयोरुत्पत्तिवाक्यानि 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति' इत्यादीनि। एतेषूत्पत्तिवाक्येषु अमावास्यापौर्णमासीकालसंयोगात्तत्कालानुष्ठेयत्वेन प्रसिद्धत्वात् अधिकारवाक्यगतदर्शपूर्णमासशब्दस्य षण्णां यागानां नामधेयत्वं स्वीकृतम्। एवञ्च दर्शपूर्णमाससंज्ञावरुद्धे कर्मणि दाक्षायणयज्ञसाकम्प्रस्थायीययोः संज्ञात्वं कथं सिध्येत्। अपि चानयोस्संज्ञयोः सिद्धिः आवृत्तिसहप्रस्थानप्रयुक्ता। आवृत्तिः सहप्रस्थानञ्च गुणभूते। इमौ गुणौ प्रकृतदर्शपूर्णमासयोस्सम्भवन्निवेशौ। असम्भवन्निवेश एव गुणः कर्मभेदक इति गुणाधिकरणे स्थितम्। अतो नात्र गुणादपि कर्मभेदसिद्धिः। तस्मात् फलाय गुणविधायकमेवेदं वाक्यद्वयम् इति ॥

## ५. ईषालम्भाधिकरणम्

'वायव्यं श्वेतमालभेत भूतिकामः' 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यनारभ्य श्रूयेते। तथा दर्शपूर्णमासयोः 'ईषामालभेत' 'चतुरो मुष्टीन्निर्वपति' इति श्रूयेते। युगलद्वयेऽस्मिन् प्रथमयुगलमस्याधिकरणस्य विषयः। अनारभ्याधीतानां प्रकृतिगामित्वमिति न्यायेन प्रथमयुगलस्य दर्शपूर्णमासाभ्यां सम्बन्ध इत्यवगम्यते। तत्र 'ईषामालभेत' इतीषायाः शकटावयवदारुविशेषस्य आलम्भः-स्पर्शः, एवं चतुर्णां मुष्टिपरिमितानां व्रीहीणां निर्वापः—पृथक्करणञ्च 'चतुरो मुष्टीन् निर्वपति' इत्यनेन विधीयेते। तत्र प्रथमयुगलस्यानारभ्याधीतत्वेन प्रकृतावागतस्य

प्रथमवाक्येनालभतिना ईषालम्भनमनूद्य वायव्यश्वेतत्वे विधीयेते, द्वितीय-वाक्येन निर्वपतिना मुष्टिनिर्वापमनूद्य सौर्यचरू गुणौ विधीयेते ? उत यावदुक्तकर्मणी विधीयेते ? आहोस्वित् विशिष्टकर्मणी विधीयेते इति त्रेधा संशयः ।

तत्र दाक्षायणादिवाक्यानि दर्शपूर्णमासप्रकरणपठितानीति प्रकरणा दाश्रयलाभेन फलाय गुणविधानं तेषां युक्तम् । प्रकृते तु प्रकरणानधी-तत्वेनाश्रयालाभे फलाय गुणविधानं न सम्भवति । अतः दार्शपौर्णमासिके-षासंस्कारतया विहितालम्भे व्रीहिसंस्कारतया विहितनिर्वापे च श्वेतत्व-चरुलक्षणगुणविधायके वायव्यसौर्यवाक्ये । अर्थात् ईषां श्वेतगुणयुक्तां वायुस्पर्शवतीञ्च विधाय आलभेत-स्पृशेत्, एवं मुष्टिनिर्वापं चरुणा-स्थाल्या युक्तं सौर्यतेजोयुक्तञ्च कृत्वा निर्वपेत्–पृथक्कुर्यादिति । वाक्य-द्वये च विद्यमानं फलपदं सर्वकामार्थत्वेन विहितदर्शपूर्णमासफलैकदेशा-नुवादकम्–इति प्रथमः पक्षः ।

गुणमात्रविधाने वाक्यभेदः फलपदानर्थक्यञ्च भवेदिति यावदुक्त-कर्मणी फलाय विधीयेते । आलम्भान्तरं निर्वापान्तरञ्च गुणफलविशिष्टं विधीयते । प्रथमपक्षे नित्यवच्छ्रुतस्य फलपदस्य देवतापदयोश्चानुवाद, त्वमन्याय्यं स्यादित्ययं द्वितीयः पक्षः । एवं पक्षे प्राप्ते,

सिद्धान्तः––दर्शपूर्णमाससम्बन्धिनि 'ईषामालभेत' इत्यालम्भे वाय-व्यवाक्यं गुणविधायकमिति न युक्तं किन्तु वायव्यवाक्यं सौर्यवाक्यञ्च द्रव्यदेवताविशिष्टकर्मविधायकम् । वायव्यमिति सौर्यमिति च देवता-तद्धितान्तम् । द्रव्यदेवताफलभोक्तॄणां यागेनाविनाभावस्सम्बन्धः । वायुदेवतासम्बन्धो द्रव्यस्य देवतातद्धितेन प्रतीयते; त्यज्मानद्रव्योद्देश्य-त्वञ्च देवतात्वम् । तादृशदेवतात्वं तदुद्देशेन द्रव्यत्यागादेव सिध्यति । अतो वायव्यवाक्ये आलभतेः सौर्यवाक्ये निर्वपतेश्च श्रवणेऽपि याग एव तयोरर्थः पर्यवस्यति, द्रव्यदेवतासंयोगेन यागस्याक्षेपात् । फलपदमपि यागनिर्वाहकतयादेयमेव; अन्यथा फलकामी देवतोद्देशेन स्वीयं द्रव्यं कथं त्यजेत् । तस्मात् श्वेतद्रव्यकवायुदेवताकयागेन भूतिं सम्पादयेत् एवं सूर्यदेवताकचरुद्रव्यकयागेन ब्रह्मवर्चसं भावयेत् इति वाक्ययोरर्थः–इति ॥

## ६. विशयाधिकरणम्

अग्निहोत्रदोहनप्रसङ्गे 'वत्समालभेत' इति वाक्यं श्रूयते। किमत्र यागविधिः ? उत स्पर्शनमात्रविधिरिति संशयः। तत्रालम्भोऽयं प्राणिद्रव्यकः श्रुतः। प्राणिद्रव्यकालम्भो यत्र यत्र श्रुतस्तत्र तत्र याग एव निश्चितः, 'अग्नीषोमीयं पशुमालभेत' 'वायव्यं श्वेतमालभेत' इत्यादौ। अत्रापि प्राणिद्रव्यकालम्भो दृश्यते। अतोऽयं यागविधिः। ननु वायव्याग्नीषोमीयवाक्येषु द्रव्यदेवतासंयोगादालभतिः यागत्वेन निश्चीयते। प्रकृते द्रव्यमात्रेणालभतेस्संयोग इति कथं याग इति निश्चीयत इति चेत्—प्राणिद्रव्यकयागानामग्नीषोमीयः पशुयागः प्रकृतिः। प्रकृतिवद्विकृतिः कर्तव्येति अतिदेशेनान्याङ्गकलापेन सह देवताया अपि प्राप्तत्वाद् द्रव्यदेवतासंयोगस्सुलभः। अतोऽयं यागविधिरिति पक्षे प्राप्ते;

सिद्धान्तः——नायं यागविधिः किन्तु संस्कारविधिः। अग्निहोत्र्या दोहनप्रसङ्गे कतिपयसस्कारा विहिताः—'वत्समुपसृजति' 'दुह्यमानां गामनुमन्त्रयते' 'प्राचीमावृत्य गां दोग्धि' इत्यादयः। तेषु 'वत्समालभेत' इत्यपि विधीयते। यथा वत्सोपसर्जनम् गोः प्राच्यावर्तनम् अनुमन्त्रणञ्चेति संस्काराः, तथैव वत्सालम्भनम्-वत्सस्पर्शनमपि संस्कार एव भवितुमर्हति, न यागः, आलम्भनस्य प्राणिद्रव्यकत्वमात्रेण याग इति निश्चेतुं न शक्यते, 'अध्वर्युमालभेत' इत्यादौ व्यभिचारात्। किञ्च 'वत्सनिकान्ता हि पशवः' इत्यर्थवादेन धेनोः प्रस्रवनार्थतया स्पर्शनमिदमवगम्यते। वत्सस्य स्पर्शनं लालनम्, तेन प्रीता धेनुः प्रस्नविष्यतीति गम्यते। तस्माद् वत्सालम्भनं-वत्सस्पर्शनं संस्कार इति॥

## ७. चरूपधानाधिकरणम्

'इष्टकाभिरग्निं चिनुते' इति चयनं विहितम्। तत्रेष्टकोपधानेन स्थण्डिलं निर्मायाग्निष्टोमादयः क्रतवोऽनुष्ठीयन्ते। तत्र 'चरुमुपदधाति' इति चरोरुपधानं विहितम्। अत्र किमुपधानयुक्तो यागो विधीयते ? उत यावदुक्तमुपधानमात्रमिति सन्देहः। तत्र पूर्वस्मिन्नधिकरणे 'वत्समालभेत' इत्यत्र द्रव्यदेवतासम्बन्धाभावेन न यागविधिः, किन्तु स्पर्शनसंकारविधिरित्युक्तम्। प्रकृते तु चरूपधानं विधाय 'बृहस्पतेर्वा

एतदन्नं यन्नीवारा:' इति श्रुतवाक्यशेषेण बृहस्पतिदेवतासम्बन्धस्य श्रवणात् बृहस्पतेर्देवतात्वं कल्पयितुं शक्यमिति द्रव्यदेवतासम्बन्धात् चरूपधानमिदं याग एव। किञ्च 'चरुमुपदधाति' इत्युपधानं संस्कारतया विधायेत, तर्हि संस्कृतस्य चरोः भूतभाव्युपयोगाभावेन संस्कार्यत्वं न सिध्येत्। द्रव्यस्य संस्कारस्तस्यैव भवितुमर्हति यच्च भूतोपयुक्तं भाव्युपयोक्ष्माणं वा। यागविधौ तु एकदेवताकत्वौषधि प्रभवद्रव्यकत्वसादृश्येनाग्नेयविध्यन्तानुसारेण यागं परिसमाप्य स्विष्टकृत्स्थाने चरोरुपधानं प्रतिपत्तित्वेन विधीयत इति न द्वितीयानुपपत्तिः। तस्माद् उपधानरूप प्रतिपत्तियुक्तबृहस्पतिदेवताकचरुद्रव्यकयागोऽनेन विधीयत इति पक्षे प्राप्ते,

सिद्धान्तः—अत्रोपदधातिना चरुस्संयुक्तः उपधानरूपकार्यार्थं एव भवति। तन्मात्रं विधीयते न तु यागः। वाक्यशेषाद्देवतासम्बन्धो नीवारेष्वेव श्रुतः 'बृहस्पतेर्वा एतदन्नं यन्नीवारा' इति। नात्र चरोस्सम्बन्धः। नीवारसम्बन्धोऽपि बृहस्पतेः स्वरूपेणैव, न तु देवतात्वेन, तद्धितचतुर्थ्याद्यभावात्। न चात्रोपधानस्य देवतापेक्षाऽस्ति। अतः कथं वाक्यशेषाद्देवतासम्बन्धलाभः। स्थण्डिलनिष्पत्त्यर्थतया इष्टकानां यथोपधानम् तथा चरोः विहितम् उपधानसंस्कृतेन चरुणा स्थाण्डिलं सम्पादयेत् इत्यर्थस्सम्पद्यते। तस्मादुपधानमात्रं यावदुक्तं विधीयते न याग इति॥

## ८. पात्नीवताधिकरणम्

'त्वाष्ट्रं पात्नीवतमालभेत' इति प्रकृत्य 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति श्रुतम्। इदमेवास्याधिकरणस्य विषयवाक्यम्। पत्नीवद्गुणकत्वष्टृदेवताकपशुद्रव्यकयागः त्वाष्ट्रवाक्येन विहितः। ज्वलदङ्गारैर्भ्रामणं पर्यग्निकरणम्। एवं पर्यग्निकृतं पात्नीवतं पत्नीवद्देवताकं पशुमुत्सृजति इति पर्यग्निकृतवाक्यस्यार्थः। अत्र सन्देहः—किमनेन कर्मान्तरं विधियते ? उत पूर्ववाक्यविहते कर्मणि पर्याग्निकरणान्ताङ्गकलापो विधीयते ? इति। पूर्वस्मिन्नधिकरणे 'चरुमुपदधाति' इत्यत्र देवतासमर्पकं प्रमाणं नास्तीति हेतोरुपधानमात्रविधिरिति सिद्धान्तितम्। प्रकृते तु 'पात्नीवतम्' इति तद्धितान्तेन पदेन देवतावगमात्, 'उत्सृजति' इत्यस्य

सन्निधानात् पात्नीवतमित्यनेनान्वयात् द्रव्यदेवतासम्बन्धेन यागाक्षेपे दोषाभावाच्च यागान्तरविधिः पर्यग्निकृतशब्दश्चातिदेशप्राप्तपर्यग्नि-करणस्यानुवादः। तथा च 'पात्नीवतयागेनेष्टं सम्पादयेत्' इति वाक्यार्थः। ननु पात्नीवतशब्देन त्वाष्ट्रवाक्यगतपात्नीवतस्य प्रत्यभिज्ञानाद्यागान्तर विधानं कथमिति चेत् न; त्वाष्ट्रवाक्ये पत्नीवद्गुणकत्वष्टृदेवतात्वम्; अत्र च केवलं पत्नीवतो देवतात्वात्। किञ्च त्वाष्ट्रवाक्यविहिते कर्मणि पर्यग्निकृतवाक्येन किं विधातुं शक्यते? पर्यग्निकरणमिति चेत्, तस्या-तिदेशेन प्राप्तत्वादेव न विधानम्। नाप्युत्सर्गो विधातुं शक्यते, देवतो-द्देशेन द्रव्यत्याग एवोत्सर्गः स च त्वाष्ट्रवाक्येनैव सिध्यति। न चापि पर्यग्निकृत्वोत्सृजतीति क्रमो विधातुं शक्यते; तस्याप्यतिदेशत एव प्राप्तेः। न चापि पर्यग्निकरणान्ताङ्गकलापविधिरिति वक्तुं शक्यते; तस्याप्यतिदेशतः प्राप्तत्वात्। उत्तराङ्गानां परिसङ्ख्यार्थमयं विधि-रिति न युक्तं वक्तुम्, परिसङ्ख्याया त्रिदोषग्रस्तत्वात्। अतश्च विधेयान्तरस्य कस्यचिदभावात् यागान्तरविधानमेवेति पक्षे प्राप्ते,

सिद्धान्तः—नात्र कर्मान्तरविधिः, किन्तु प्रत्यभिज्ञायमाने पूर्वकर्मण्येव पर्यग्निकरणान्ताङ्गकलापविधिः। नन्वतिदेशेनेव प्राप्तत्वात् किं प्रयोजनं विधानस्येति चेन्न; उत्तराङ्गनिवृत्तिफलकत्वाद्विधानस्य। ननु परि-सङ्ख्यात्वे त्रिदोषापत्तिरित्युक्तमिति चेन्न; अतिदेशतः पदार्थानां प्राप्तेः पूर्वमेव पर्यग्निकरणान्ताङ्गकलापविधिस्वीकारात्। अनेनैवशान्ता-काङ्क्षः क्रतुर्नातिदेशमपेक्षते गृहमेधीयवत्। ननु 'त्वाष्ट्रं पात्नीवत-मालभेत' इति विहिते यागे पत्नीवद्गुणकत्वष्टा देवता। तस्या अनु-वादः पात्नीवतशब्दमात्रेण कथं स्यात् इति चेदित्थम्—'त्वाष्ट्रं पात्नी-वतमालभेत' इति वाक्यगततद्धितान्तपदद्वयेन प्रत्येकमेव देवतात्वं बोध्यते। तत्र पर्यग्निकृतवाक्यगतेन पात्नीवतशब्देन त्वाष्ट्रवाक्य-विहितयागस्य प्रत्यभिज्ञा भवितुमर्हति। यथा देवदत्तयज्ञदत्तयोर्माता देवदत्तमाता यज्ञदत्तमातेति व्यवहारः। एवं त्वष्टृपत्नीवतोर्यागः पात्नी-वत इति पृथग्व्यवहारे बाधकाभावात्। तस्मात्प्रकृते कर्मणि पर्यग्नि-करणान्ताङ्गकलापविधिः। यद्यपि नवमोपान्त्याधिकरणे 'पर्यग्निकृता-नारण्यानुत्सृजति' इत्यत्र पर्यग्निकरणान्ताङ्गकलापविधिः इति निर्णेष्यते,

तथाऽपि अस्मिन्नधिकरणे केवलपात्नीवतशब्देन प्रकृतयागस्य प्रत्यभिज्ञा भवितुमर्हति वेति विशेषविचारः क्रियत इति न पौनरुक्त्यम् । तस्माद् गुणविधिरेव पर्यग्निकृतवाक्ये इति ॥

## ९. अंश्वदाभ्याधिकरणम्

'योऽदाभ्यं गृहीत्वा सोमाय यजते' 'योंऽशुंगृह्णाति' इत्यनारभ्याधीतं वाक्यद्वयमस्याऽधिकरणस्य विषयः । अदाभ्य इति अंशुरिति च ग्रहयोर्नामधेयम् । अनयोर्वाक्ययोः यागान्तरविधायकत्वम् ? ऊत ज्योतिष्टोमे ग्रहणविधायकत्वमिति सन्देहः । पूर्वस्मिन्नधिकरणे पात्नीवतशब्देन त्वाष्ट्रपात्नीवतयागस्य प्रत्यभिज्ञानात् तत्र गुणविधिरिति युक्तमुक्तम् । प्रकृते तादृशप्रत्यभिज्ञापदस्याभावात् यागान्तरविधिस्स्यात् । ननु द्रव्यदेवतयोरभावात् कथं यागान्तरविधिरिति चेत्सत्यम्, अदाभ्यवाक्ये 'गृहीत्वा' इति, अंशुवाक्ये (यहधुडडाया) 'गृह्णाति' इति श्रवणात् ताभ्यां ज्योतिष्टोमप्रकृतिकत्वमिति निश्चिते ततो द्रव्यदेवतयोर्लाभाद्यागत्वनिश्चयः । 'आघारमाधारयति' इत्यत्राधाराख्ये कर्मणि विहिते यथा मन्त्रवर्णात् वाक्यशेषाच्च द्रव्यदेवतयोर्लाभः तद्वदत्रापि द्रव्यदेवतयोर्लाभात् अंश्वदाभ्यनामकयागान्तरविधिरिति पक्षे पाप्ते,

सिद्धान्तः—अंश्वदाभ्यसंज्ञकग्रहग्रहणसंस्कार एवात्र विधीयते, न तु यागान्तरविधानम् । अत्र च कारणं द्रव्यदेवताराहित्यम् । अंशुरिति अदाभ्य इति च संस्कारनाम इत्यङ्गीकारे न किमपि बाधकम् । 'यजते' इति श्रवणबलात् यागनामत्वं न युक्तम् 'अदाभ्यं गृहीत्वा' इति व्यवधानात् । अंशुवाक्ये तादृशो यजिरपि न श्रूयते । अतिदेशाद् द्रव्यदेवतयोर्लाभ इति यदुच्यते, तन्न सङ्गतम्, अन्योन्याश्रयात् । तस्माद् ग्रहणसंस्कारविधायके इमे वाक्ये, न यागान्तरविधायके इति ॥

## १०. चयनाधिकरणम्

'य एवं विद्वानग्निं चिनुते' इति श्रूयते । अत्र संशयः किमग्निनामकं कर्मान्तरं विधीयते ? उतानेनाग्निसंस्कारात्मकं चयनं विधीयते ? इति ॥

अस्मिन् वाक्ये यजिपदाभावेऽपि 'अग्निं चिनुते' इत्यत्राग्निशब्दस्य

क्रतुपरत्वमङ्गीकृत्य अग्निसंज्ञकयागं कुर्यादित्यर्थो भवितुमर्हति। तेन 'इष्टकाभिरग्निं चिनोति' इति वाक्यमिष्टकाविशिष्टचयनविधायकं सम्पद्यते। एवं सत्यपि यजिसामानाधिकरण्याभावादग्निशब्दस्य यागनामत्वं नोपपद्यते इति चेत्--न 'अग्नेः स्तोत्रम्' 'अग्नेः शस्त्रम्' इति स्तोत्रशस्त्रविधानबलाद् ज्योतिष्टोमयागं मनसि आनीयास्य यागात्मकत्वमध्यवसातुं शक्यम्। किञ्च अनुयजनविधायकवाक्य बलेनास्य यागत्वं सिध्यति 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति; तमुक्थ्येन, तमतिरात्रेण, तं द्विरात्रेण' इत्यादीनि वाक्यानि श्रूयन्ते। एभिर्वाक्यैः 'अग्निं यजन्तीति यत् तदग्निष्टोमेन' 'अग्निं यजन्तीति यत् तद्द्विरात्रेण त्रिरात्रेण चतूरात्रेण' इत्यादिवचनव्यक्तयो निष्पद्यन्ते। गुरुमनुगच्छति शिष्य इत्यत्र गुरोर्गमने सत्येव शिष्यस्यानुगमनं सिध्यति यथा; तथाऽग्नेर्यागात्मकत्वे सत्येवाग्निष्टोमादीनामनुयजनं सम्भविष्यति। अतोऽग्नेर्यागात्मकत्वमिति पक्षे प्राप्ते,

सिद्धान्तः–नायं यागविधि, किन्तु संस्कारविधिः। अग्निशब्दस्तु ज्वलने रूढः। कथमस्य यागवचनत्वं भवितुमर्हति। उद्भिदादिशब्द-वदग्निपदं यौगिकमभविष्यत् यदा तदा, नामधेयमप्यभविष्यत्। नायं शब्दो योगिकः। अनेन वाक्येन यद्यग्निर्विधीयेत तर्हि प्रापकशास्त्रा-न्नामत्वं घटेत। प्रसिद्धज्वलनरूपमग्निमनूद्य चयनसंस्कारोऽत्र विधीयते। 'चयनेन स्थण्डिलं निर्माय तत्राग्निस्थापनद्वारा कारयिष्यमाणक्रतूनुप-कुर्यात्' इति वाक्यार्थे सम्भवति न नामत्वसम्भवः। 'अथातोऽग्निमग्नि-ष्टोमेनानुयजन्ति' इत्यत्राग्निशब्दः चयनसंस्कृताग्नेरनुवादकः। तथाच स्थण्डिलनिष्पत्तिद्वारा चयनसंस्कृतेनाग्निनाऽग्निष्टोमादीन् क्रतून् कुर्या-दिति बोधः। अग्निमिति द्वितीया च तृतीयार्था। यदुक्तं स्तोत्रशस्त्रयोः श्रवणात् ज्योतिष्टोमसम्बन्ध इति तत्रोच्यते--'अग्नेः स्तोत्रम् अग्नेः शस्त्रम्' इत्यत्राग्निशब्दः क्रतौ लाक्षणिकः, इह तु ज्वलनवाचकत्वमेव युक्तम्। तस्मात् अग्निष्टोमादीनामनुष्ठानाय गुणविधिरयम् इति॥

## ११. प्रकरणान्तराधिकरणम्

कुण्डपायिनामयनमिति संवत्सरसाध्यं सत्रं गवामयनसत्र प्रकृतिकम्। तत्र श्रूयते 'उपसद्भिश्चरित्वा सोममुपनह्य मासमग्निहोत्रं

जुह्वति, मासं दर्शपूर्णमासाभ्यां यजन्ते; मासं वैश्वदेवेन, मासं वरुणप्रधासैः' इत्यादि। अस्याधिकरणस्येदमेव विषयवाक्यम्। 'यावज्जीवमग्निहोत्रं जुहोति' इति विहिते नित्याग्निहोत्रे 'मासमग्निहोत्रं जुह्वति' इत्यनेन गुणो विधीयते ? उत कर्मान्तरं विधीयत इति संशये 'अग्निहोत्रं जुहोति' इत्यनेन कर्मणः प्राप्तत्वेनाविधेयत्वात् तदुद्देशेन गुणविधिरेव युक्तः। नित्याग्निहोत्रस्य मासाग्निहोत्रस्य च सन्निध्यभावेऽपि अग्निहोत्रमिति नाम्ना नित्याग्निहोत्रस्योपस्थितत्वात्तदुद्देशेन गुणविधानं भवितुमर्हति। ननु मासाख्यो गुणो विधेयः। स च कालरूपः। कालश्च पुरुषकृत्यसाध्य इत्यनुपादेयो भवति। कथं तस्य विधिविषत्वमिति चेन्न, विधेरप्राप्तपक्षपतितया कर्मोद्देशेन मासविधौ बाधकाभावादिति पक्षे प्राप्ते,

सिद्धान्तः—प्रकरणान्तरान्मासागिहोत्रं नित्याग्निहोत्राद्भिन्नम्। अन्यत् प्रकरणं प्रकरणान्तरम्. तस्मान्मासाग्निहोत्रं नित्याग्निहोत्राद्भिन्नं स्यात्। नित्याग्निहोत्राख्यं कर्मासन्निहितम्, असन्निहितस्य तस्योपस्थितिर्न भवति। उपस्थित्यभावे तदनुवादेन मासाख्यो गुणो न विधातुं शक्यते। अतो मासविशिष्टमग्निहोत्रसंज्ञकं कर्मान्तरमेव मासाग्निहोत्रवाक्येन विधीयत इति सिध्यति। ननु नाम्नोपस्थितिरुक्तेति चेन्न; वाक्यभेदप्रसङ्गात्। मासाग्निहोत्रवाक्यं केवलं न पठ्यते; किन्तु 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वति' इति तस्य पाठः। उपसदां तदानन्तर्यस्य मासाख्यगुणस्य च विधाने वाक्यभेदस्स्यात्। अतश्च कथञ्चिन्नाम्नोपस्थितमपि नित्याग्निहोत्रं परित्यज्य कर्मान्तरविधान एव वाक्यं पर्यवस्यति। न च 'दीक्षितो न ददाति न जुहोति न पचति' इति दीक्षितस्य दानहोमपाकादीनां निषेधात् कथमत्र होमाख्यं कर्मान्तरं विधीयत इति वाच्यम्। पुरुषार्थदानहोमपाकादीनां निषेधात्, क्रत्वर्थानाञ्च विधानान्न दोषः। तस्मादत्र कर्मान्तरविधानं प्रकरणान्तरात्। प्रकरणान्तरञ्च सन्निध्यभावसहकृतोपस्थित्यभाव इति॥

## १२. फलसंस्कार्याधिकरणम्

देशः कालो निमित्तञ्च फलं संस्कार्यमेव च।
इति मीमांसकाः प्राहुरनुपादेयपञ्चकम्॥

इत्यनुपादेयपञ्चके कालस्यानुपादेयत्वात्-विधेयत्वाभावात् कालविशिष्टकर्मणो विधायकत्वं पूर्वस्मिन्नधिकरणे प्रदर्शितं कर्मान्तरमिति। अस्मिन्नधिकरणे फलस्यानुपादेयत्वं प्रदर्श्य कर्मभेदः प्रतिपाद्यते। अस्याधिकरणस्य विषयवाक्यं—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति' इति केचनोदाहरन्ति। इदञ्च वाक्यं कालद्वयसंयुक्तमाग्नेययागं विधत्ते। तत्रामावास्यायां य आग्नेययागः सःपूर्णिमायां क्रियमाणयागादभिन्नः? उत भिन्न इति संशयः। कालभेदे सत्यपि द्रव्यदेवतयोरैक्यात् एक एव याग इति पक्षे प्राप्ते,

सिद्धान्तः——अमावास्यायां पूर्णिमायाञ्च कृतानां यागानां फलसम्बन्धबोधनाय 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यधिकारवाक्यं प्रवृत्तम्। अत्र दर्शपूर्णमासशब्दः तत्तदुत्पत्तिवाक्यविहितकालसंयुक्तयागानां नामधेयम्। तन्नामकयागानां विहितत्वात्पुनर्विधानं न भवितुमर्हति। शिष्टं फलपदम्। फलञ्चानुपादेयम्। अतश्च विहिता अपि यागाः फलसम्बन्धविशिष्टाः विधेयाः। फलसम्बन्धश्च पूर्णिमायाममावास्यायाञ्च विहितानां यागानाम्। तत्राग्नेयस्य कालद्वयेऽपि कर्तव्यत्वेन विहितत्वात् द्वयोराग्नेययोः फलसम्बन्धलाभाय कर्मभेदः प्रसिध्यति इति॥

अपरे च 'आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः' 'त्रैधातवीया दीक्षणीया भवति' इति फलवाक्यं संस्कार्यवाक्यञ्चोदाहृत्य विचारं प्रवर्तितवन्तः किं फलसंस्कार्ययोर्विधिविषयत्वमस्ति न वेति। यद्यस्ति तर्हि प्रसिद्धाग्नेयदीक्षणीयातो न भेदः, यदि विषयत्वं नास्ति तर्हि कर्मभेद इति सिद्धान्तं प्रदर्शितन्वतः॥

## १३. प्रकरणान्तरप्रत्युदाहरणाधिकरणम्

अनुपादेयगुणयुक्तानां वाक्यानां कर्मभेदकत्वमुपपाद्य तदपवादोऽस्मिन्नधिकरणे विचार्यते। 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यत्र समरूपो देशः, 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यत्र कालः, 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यत्र निमित्तम्; दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र फलम्, 'शेषात्स्विष्टकृते समवद्यति' इत्यत्र संस्कार्यम्। एतेष्वनु-

पादेयगुणानां सम्बन्धात् किं कर्मभेदः ? उत प्रकृतमेव कर्म देशाद्युद्देशेन विधीयत इति संशयः। देशादीनामनुपादेयत्वेन विधेयत्वं नास्तीत्यत्र न्यायस्य प्रदर्शितत्वाद् विहितस्य च पुनर्विधानायोगात् कर्मभेद एवेति पक्षे प्राप्ते;

सिद्धान्तः——सन्निधिपाठमात्रेण न कर्मभेदः। तथा सति प्रयाजानूयादीनामपि दर्शपूर्णमासतः कर्मान्तरत्वं स्यात्। प्रयाजादीनि प्रकृतकर्मात्मकतया प्रत्यभिज्ञायन्ते। दर्शपूर्णमासादिसान्निध्येन तदेव बुद्धौ विपरिवर्तते। अतोऽनुपादेयदेशकालादिसम्बन्धमात्रेण कर्मान्तरत्वाङ्गीकारो नोचितः। मासाग्निहोत्रस्थले तु नित्याग्निहोत्रसन्निध्यभावाद् अनुपादेयस्य देशकालादेस्सत्त्वात् कर्मान्तरत्वं साधितम्। अत्र देशकालादेर्विध्यनर्हत्वेऽपि उद्देश्यत्वे न काचन हानिः। एकस्मिन् देशे प्रान्तभाषाभेदेन विभिन्नशासनेषु सत्स्वपि अत्र देशभेदो यथा न परिगण्यते तथैव प्रकृतेऽपि। किञ्चोद्देश्यत्वं नाम प्राधान्येन निर्देश्यत्वम्, उपादेयत्वं नाम पारतन्त्र्येण निर्देश्यत्वम्। एवञ्च देशकालादेः प्रकृतकर्मपारतन्त्र्येण निर्देश्यत्वमङ्गीकृत्य वाक्यार्थे वर्ण्यमाने कर्मभेदो न प्रसिध्यतीति॥

## १४. आग्नेयद्विरुक्त्यधिकारम्

कालद्वययुक्त आग्नेययागः 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति' इति विहितः। तथा 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इत्येककालयुक्तोऽपर आग्नेयः। अत्र किं कालद्वययुक्ताग्नेयाद् यागान्तरं एककालयुक्तवाक्येन विधीयते ? उत स एवानूद्यत इति संशयः। तत्र पुनःश्रवणरूपाभ्यासेन कर्मभेदः कालद्वययुक्तवाक्यगतामावास्यापदमनुवादकम् उतैककालयुक्तवक्यगतामास्यापदमनुवादकमित्यत्र विनिगनाविरहाद् आनर्थक्यभयाच्च द्वयोरपि वाक्ययोर्विधायकत्वे कर्मभेद इति पक्षे प्राप्ते;

सिद्धान्तः——नात्र विनिगमनाविरहः, नाप्यानर्थक्यम्। अमावास्यायां सान्नाय्ययागानुष्ठानाभावपक्षे तत्स्थाने ऐन्द्राग्नपुरोडाशयागो विहितः। 'ऐन्द्राग्नमेकादशकपालममावास्यायामपश्यत्' इति। अस्यैककालयुग्वाक्यं प्रशंसापरकतया नेतुं शक्यते यदाहि केवलाग्निसंयुक्तोऽष्टाक-

पालः प्रशस्तः तदा किमु वक्तव्यमिन्द्रसहिताग्निदैवत्य एकादशकताले विद्यमाने इति । एवमैन्द्राग्नविध्येकवाक्यतथा तत्प्रशंसार्थं केवलामावास्यायुग्वाक्यमेवानुवाद इति स्वीकारे नाभ्यासन्यायावतारः । तस्मादमावास्यायामाग्नेययागस्य सकृदनुष्ठानमिति सिध्यतीति ॥

॥ इति द्वितीयाध्यायस्य तृतीयः पादः ॥



## द्वितीयाध्यायस्य चतुर्थः पादः

### १. यावज्जीवाधिकरणम्

एवं तावत्कर्मभेदाभेदौ विचारितौ अस्मिन् पादे एकस्यैव कर्मणः प्रयोगभेदाभेदौ विचर्यंते । कानिचन कर्माणि नित्यतथा काम्यतया च विहितानि । 'यावज्जीवमग्निहोत्रं जुहोति' 'अग्निहोत्रं जुहुयात्स्वर्गं काम' इति, एवं यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति, 'वसन्ते वसन्ते ज्योतिषा यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । अत्र विहितकाम्यप्रयोगस्यैकस्य यावज्जीवकालमभ्यासो विधीयते ? उत जीवने निमित्तेऽग्निहोत्रादीनां प्रयोगाणां काम्यादन्येषां विधानमिति सन्देहः । तत्र 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादीनि वाक्यान्यधिकारवाक्यानि । फलबोधकवाक्यैरेव प्रकरणं प्रायो निश्चीयते । तच्च प्रकरणम् अधिकाराख्यम् उभयाकाङ्क्षालक्षणञ्चेति द्वेधा व्यवह्रियते । तत्राकाङ्क्षालक्षणप्रकरणेन प्रधानेन सहाङ्गानां सम्बन्धो भवति । तदत्र यावज्जीवकालः काम्यप्रयोगाङ्गतया विधीयत इत्युक्ते अकाङ्क्षालक्षणप्रकरणस्यानुग्रहो भवति, जींवने निमित्ते प्रयोगान्तरविधाने प्रकरणबाधो भवेत् । यत्र फलाय कर्म विधीयते तत्रैवेतिकर्तव्यताकाङ्क्षायाः स्पष्टमुदयः । तस्याः पूरणं सन्निध्याम्नातैरङ्गैः क्रियते । यदि यावज्जीववाक्यैः पुरुषार्थतया कर्माणि विधीयन्ते तर्हि प्रकरणं बाधितं स्यात् सत्यामाकाङ्क्षायां तदपूरणं दोषाय स्यात् । आकाङ्क्षापूरणसामर्थ्ये सति तदपूरणं लोकेऽपि दोषाय परिगण्यते । यावज्जीवनकालं विधीयमानः

काम्यप्रयोगोऽभ्यासेन सम्पादयितुं शक्यते। तस्मदवभ्यस्तरूप एक एव काम्यप्रयोग इति पक्षे प्राप्ते,

सिद्धान्तः--काम्यप्रयोगान्नित्यप्रयोगो भिन्नः। 'यावज्जीव' पदं णमुल्प्रत्ययान्तम्। जीवन् जीवन् इति तदर्थः। जीवनञ्च पुरुषधर्मः, न कर्मधर्मः। जीवनक्रियावाचिनो यावज्जीवपदस्य काले लक्षणा स्यात्, एवं 'यजेत' पदस्य यागवाचिनोऽभ्यासे लक्षणा स्यात् यदि यावज्जीवकालः कर्मधर्मत्वेन काम्यप्रयोगे विधीयेत। पुरुषधर्मत्वेन स्वीकारे तु जीवन् जीवन् पुरुषो यागं कुर्यादिति निना लक्षणया बोधो भवति। यावज्जीववाक्यैः पुरुषधर्मतया जीवनं निमित्तं विधीयेत तर्हि तादृशजीवनस्याहोरात्रं मरणपर्यन्तं सत्त्वात् आहारव्यवहारादिकं न स्यादिति चेन्न; 'सायं जुहोति' 'प्रातर्जुहोति' 'पौर्णमास्याममावास्यायां यजते' इत्यादिवाक्यैः तत्तत्कालावच्छिन्नजीवनस्य निमित्तत्वस्वीकारात्। किञ्च दर्शपूर्णमासयोः कालातिपाते प्रायश्चित्ततया पथिकृतीष्टिर्विहिता–'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन् अमावास्यां पौर्णमासीं वाऽतिपातयेत्' इति। अत्र 'दर्शपूर्णमासयाजी' शब्दो भूते णिनिप्रत्ययान्तः। दर्शपूर्णमासाभ्यामिष्टवान् सन् कालातिपातं कुर्यात्तदा प्रायश्चित्तेष्टेः प्रवृत्तिः। कर्मधर्मत्वपक्षे 'दर्शपूर्णमासयाजी' त्यस्यौपपत्तिर्न स्यात्, यावज्जीवमभ्यासरूपेण सम्पाद्यमानस्य प्रयोगस्य समाप्त्यभावात्। कर्तृधर्मपक्षे तु यावज्जीवकालो न कर्माङ्गम्, पौर्णमास्यादिकालावच्छिन्नस्य जीवनस्य भेदान्नैमित्तिकप्रयोगो भिद्यत इति प्रतिमासं प्रयोगस्य समाप्तेस्सत्त्वात् कालातिपातस्सम्भाव्यते, अतः प्रायश्चित्तविधानं समञ्जसं भवति। किञ्च सोमस्येष्टिपूर्वत्वं विहितम्–'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति। तदिदं यावज्जीवस्य कर्मधर्मत्वपक्षेऽनुपपन्नं स्यात्, प्रक्रान्तं दर्शपूर्णमासाख्यं कर्म विगुणं स्यात् यदि मध्ये सोमयागः क्रियते। कर्तृधर्मत्वे च न काचिदनुपपत्तिः। तस्मात् काम्यप्रयोगान्नित्यप्रयोगो भिद्यत इति॥

## २. शखान्तराधिकरणम्

शब्दान्तरादिभिः षड्भिः प्रमाणैः कर्मभेदः प्रदर्शितः, तथा पूर्वस्मिन्नधिकरणे प्रयोगभेदोऽपि प्रदर्शितः। इदानीं शाखाभेदेन विहितेष्वग्नि-

होत्रदर्शपूर्णमासज्योतिष्टोमादिषु कर्मसु पूर्वोक्तप्रमाणैः कर्मभेदोऽस्ति वा न वेति विचार्यते। तत्र 'काठकाग्निहोत्रम्' कालापाग्निहोत्रम् इत्यादि-संज्ञाभेदेन यदाग्निहोत्रस्य विधानं तदा संज्ञया कर्मभेदः कुतो न स्यात्? 'एकादशकपालम्' 'द्वादशकपालम्' इति शाखाभेदेन गुणभेदे विद्यमाने कथं गुणात्कर्मभेदो न सिध्येत्? एकमेवाग्निहोत्राख्यं कर्म शाखाभेदेन पुनः पुनरुच्यमानमभ्यासात्कर्म भिद्यत इति कथने को दोषः? एवमन्यै-रपि कर्मभेदप्रमाणैः कर्मणां भेदे सिध्यति सति एकं कर्मेति कथमङ्गीकर्तुं शक्यते? इति पक्षे प्राप्ते;

सिद्धान्तः——अग्निहोत्रमिति ज्योतिष्टोम इति दर्शपूर्णमासाविति समाख्यायास्सर्वत्राविशेषेण विद्यमानत्वात् तदेवेदं कर्मेति प्रत्यभिज्ञानात् सर्वासु शाखास्वेकमेव कर्म। तदिदमेकस्यामेव शाखायां विभिन्नब्राह्मण भागैर्विधीयमानेष्वग्निहोत्रादिषु कर्मसु यथा न भेदः, तथा शाखाभेदेन विहितेषु कर्म स्वकविधेषु कथं भेदस्स्यात्? सर्वासु यजुश्शाखासु अग्नि-होत्रदर्शपूर्णमासज्योतिष्टोमादीनि द्रव्यदेवतावन्ति विहितानि। तानि चेतरनिरपेक्षाणि विहितानि। तत्रैकस्यां स्वशाखायां विहितमेव कर्म शाखान्तरेऽपि विहितमिति प्रत्यभिज्ञा जायते। तदा कर्मान्तरत्वं कथं सिध्येत्। किञ्च स्वाध्यायाध्ययनविधौ स्वाध्यायस्य विधेयतया पश्वे-कत्वाधिकरणन्यायेन तद्गतैकत्वस्य विवक्षितत्वादेकशाखाध्यायिना शाखान्तराध्ययनं नावश्यमनुसर्तव्यम्। वेदान्तराध्ययनन्तूपपन्नं वचन बलात् याज्यापुरोनुवाक्यानां स्तोत्रशस्त्राणाञ्चापेक्षितत्वाद् वेदान्तरानु-सरणमावश्यकम्। अतो नैकस्यानेकशाखाध्ययनमावश्यकम्, वेदान्तराध्य-यनन्त्वावश्यकम्। तस्माद्भेदकारणाभावादभेदप्रत्यभिज्ञानाच्च सर्व-शाखास्वेकं कर्म, न कर्मभेदः। यदुक्तं काठकाग्निहोत्रमित्यादि संज्ञया कर्मभेद इति तन्न सङ्गतम्; उत्पत्तिवाक्यगतैव संज्ञा कर्मभेदिका, काठकाग्निहोत्रमिति नोत्पत्तिवाक्यम्। तद्गता संज्ञा कथं कर्मभेदिका स्यात्? अतः शाखाभेदेन कर्मभेदो न सिध्यतीति॥

॥ इति द्वितीयाध्यायस्य चतुर्थः पादः॥ इति द्वितीयाध्यायस्समाप्तः॥



## तृतीयोऽध्यायः

### तत्र प्रथम पादः

### १. शेषलक्षणप्रतिज्ञाधिकरणम्

कर्मणां भेदेऽवगते तत्राङ्गं किम् कश्चाङ्गीति निर्णयः कर्तुं शक्यत इति भेदाध्यायानन्तरं शेषाध्याथः प्रवर्तते। अतोऽनयोर्हेतुहेतुमद्भाव-सङ्गतिः। ननु कर्मणां भेदमात्रेण तेषां शेषशेषिभावो न निश्चेतुं शक्यते। दर्शपूर्णमासतः ज्योतिष्टोमस्य भेदोऽस्तीति न तयोः शेषशेषित्व-मिति चेन्न; सर्वत्रान्वयनियमेनैव न कार्यकारणभावः, सस्योत्पत्तिकारणे वर्षादौ सत्यपि कार्यस्य सस्यस्योत्पत्त्यदर्शनात् किन्तु व्यतिरेकनिर्णय-द्वारापि कार्यकारणभावदर्शनात् यदि वृष्टादिर्नास्ति न तर्हि सस्योत्पत्ति-रिति। अतोऽसति कारणे कार्याभावो नियत इति रीत्या भेदेऽसति शेष-शेषिभावो न भवतीति कर्मणां भेदः शेषशेषिभावहेतुरिति स्वीक्रियते। अथवा-उत्पत्तिविधिभिः पदार्थेष्ववगतेषु तेषां विनियोगः कर्तुं शक्य इति प्रथमद्वितीयाध्यायाभ्यामुत्पत्तिविधिस्वरूपे निरूपिते तृतीयचतुर्था-ध्यायाभ्यां विनियोगविधिर्निरूप्यत इति सङ्गतिः। शिखायां प्रादुर्भू-तायां तद्ग्रहणेन शिखी ग्रहीतुं शक्यत इति यथा। अतः शेषशेषिभाव-लक्षणम्-अध्यायः प्रारभ्यते॥

### २. शेषलक्षणाधिकरणम्

ननु किमिदं शेषत्वम्? येन विना यन्न भवति स तस्य शेष इत्य-विनाभावः शेषत्वबोधक इत्युक्ते आग्नेययागानुष्ठानेन विनाऽग्नीषोमीय-पुरोडाशानुष्ठानं न भवतीति तयोर्यागयोरङ्गाङ्गिभावस्स्यात्। गुरु-शिष्ययोरिव यत्र प्रयोज्यप्रयोजकभावः तत्र शेषशेषित्वमित्युक्ते 'पुरोडा-शकपालेन तुषानुपवपति' इत्यत्र कपालतुषोपवापयोः शेषशेषित्वे सत्यपि प्रयोज्यप्रयोजकभावाभावात् अव्याप्तिस्स्यात्। अतः किमिदं शेषत्वम्? इति चेत् पारार्थ्यमेव शेषत्वम् इति ब्रूमः। पारार्थ्यञ्च परोद्देशप्रवृत्तपुरुष-व्यापारगोचरत्वम्। इदञ्च लक्षणं कर्तृदेशकालादिषु श्रुत्यादि प्रमाण-सहकृततत्तद्विधिवाक्यैस्समन्वितं भवति। अतः पारार्थ्यमेव शेषत्वम् इति॥

## ३. बादर्यधिकरणम्

यथा द्रव्यगुणसंस्कारेषु शेषता तथा कर्मफलपुरुषेष्वपि शेषता। अत्रायं सन्दर्भः—द्वितीयप्रथमे तानिद्वैधाधिकरणे प्रधानकर्माणि गुणकर्माणि चेति द्विविधानि कर्माणि प्रदर्शितानि। अङ्गकर्मणामेवायं विभागः। तत्र प्रधानकर्मशब्देन प्रयाजादीनां ग्रहणम्, गुणकर्मशब्देन संस्कारकर्मणां ग्रहणमिति स्थितिः। अस्मिन्नधिकरणे सूत्रकारेण बादरिमतं स्त्रीयमतमिति मतद्वयं सूत्रितम्। तत्र बादरेर्मते द्रव्यगुणसंस्कारेषु शेषत्वम्, न कर्मफलपुरुषेषु शेषत्वमस्तीति सूत्रयित्वाऽनन्तरं 'कर्माण्यपि जैमिनिः फलार्थत्वात्' इत्यादिना कर्म-फल-पुरुषेष्वपि शेषताऽस्तीति स्वमतेन जैमिनिः सूत्रयामास। बादरेर्मते कर्म-फल-पुरुषेषु शेषित्वमेव, जैमिनिमते तु तेषु शेषत्वमपीति भाष्याकारा व्याचख्युः।

## ४. तेषामर्थाधिकरणम्

शेषलक्षणमुक्तम्। इदानीं विनियोगविचारः प्रस्तूयते। विनियोगो नामाङ्गत्वेनान्वयः। अर्थादङ्गस्याङ्गिना सहान्वयबोधनम्। तत्र श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि षट् प्रमाणानि। तेषु श्रुत्या विनियोगविचारोऽस्मिन् पादे क्रियते। श्रुतिर्नाम सर्वा अपि कारकविभक्तयः, वाचकताशक्तिश्च। दर्शपूर्णमासयोः ओषधिप्रभवद्रव्यसंयुक्ता धर्मा अवहननपेषणादयो 'व्रीहीनवहन्ति' इत्यादिना विहिताः। एवमाज्यसम्बन्धिनो धर्मा उत्पवनविलापनादय आम्नाताः 'आज्यमुत्पुनाति' इत्यादिना। तथा सान्नाय्यधर्मा दोहनादयः 'सायंदोहं दोहयति' इत्यादिना विहिताः। इमानि वाक्यान्युदाहृत्यात्र चिन्त्यते—किमिमे सर्वे धर्माः सर्वेषामपि शेषभूताः? उत यथायोगं व्यवस्थया शेषभूता इति। तत्र अवघातादयो धर्मा व्रीह्यादिस्वरूपोद्देशेन 'व्रीहीनवहन्ति' इत्यादिना न विधीयन्ते; विनाप्यवहननप्रोक्षणादिना स्वरूपसिद्धेः। अतस्स्वरूपं परित्यज्योद्देश्यतावच्छेदकतयाऽन्यत्स्वीकर्तव्यम्। अन्यच्च व्रीहित्वं न भवितुमर्हति तथा सति यवेष्ववहननप्राप्तिर्न स्यात्। अतो नवमाद्यन्यायेन अपूर्वसाधनत्वमुद्देश्यतावच्छेदककोटौ निवेशनीयम्। प्रकृतापूर्वसाधनत्वावच्छिन्नान् अवहन्यात् प्रोक्षेत् इत्यादि। प्रकृतापूर्वश्च दर्शपूर्णमासजन्यं

परमापूर्वम् । तस्यैव फलवत्त्वात् । एतादृशापूर्वसाधनत्वं व्रीह्याज्यदोहेषु समानम् । अतस्सर्वे धर्मास्सर्वत्र कर्तव्या इति पक्षे प्राप्ते,

सिद्धान्तः—ये धर्मा यत्र युज्यन्ते ते तत्र कर्तव्याः । परमापूर्वं सर्वेषां समानमिति तु युक्तम् । दर्शपूर्णमासयोः प्रधानयोः फलजनकत्वं दर्शपूर्णमासवाक्यादवगम्यते । तयोः फलजननसामर्थ्यं पूर्वोत्तराङ्गकलापानुष्ठानेनैवोन्मिषति, न केवलमाग्नेयादिप्रधानानुष्ठानमात्रेण । पूर्वोत्तरभावेनानुष्ठीयमानेष्वङ्गेष्ववहननादिषु कानि चन दृष्टफलकानि कानिचिच्चादृष्टफलकानि । दृष्टफलकेष्वपि नियमविधिबलेनादृष्टमप्यङ्गीकर्तव्यम् । अन्यथा नियमस्य वैयर्थ्यं स्यात् । तत्र व्रीहीणां सम्बन्ध आग्नेयाग्नीषोमीयैन्द्राग्नयागेषु वर्तते, आज्यसम्बन्ध उपांशुयाजयागे, दोहादिसम्बन्धश्च सान्नाय्ययागे इति व्यवस्थया द्रव्याणां सम्बन्धे स्थिते व्रीहिपदेन पुरोडाशसम्बन्धियागत्रयजन्योत्पत्त्यपूर्वजनकयागनिष्ठकार्यतानिरूपितप्रदेयप्रकृतिभूततण्डुलरूपव्यापारकसाधनताश्रयत्वस्योद्देश्यतावच्छेदकत्वं लक्षणया स्वीकर्तव्यम् । एवमाज्यपदेन दोहपदेन च तत्तदुद्देश्यतावच्छेदकं विवक्षणीयम् । तथा सति व्रीहिधर्मा व्रीहिषु आज्यधर्मा आज्ये, दोहधर्माः सान्नाय्ये च व्यवस्थिता भवेयुः । ननु परमापूर्वस्यैव फलवत्वात् तत्रैव निवेश उचित इत्युक्तमिति चेन्न; सन्निपत्योपकारकाङ्गेषु स्वस्वापूर्वप्रयुक्तत्वमुत्सृज्य परमापूर्वप्रयुक्तत्वस्वीकारे दीक्षणीयावाङ्नियमन्यायविरोधस्स्यात् । तत्राप्यवहनेन यद्दृष्टं प्रयोजनं तुषविमोकादि तदाज्ये सान्नाय्ये च न सिध्यति । सम्भवति दृष्टफलेऽदृष्टस्यान्याय्यत्वात् यथायोगं व्यवस्थिता एव धर्माः कर्तव्या इति ॥

## ५. स्फ्यकपालाधिकरणम्

दर्शपूर्णमासप्रकरणे 'स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृषच्चोपला चैतानि वै दशयज्ञायुधानि' इति यज्ञसाधनानि श्रूयन्ते । एतेषां विनियोजकवाक्यानि 'स्फ्येन वेदिमुद्धन्ति' 'कपालेषु श्रपयति' इत्यादीन्यपि श्रूयन्ते । अत्रायं संशयो भवति—स्फ्यादिसाधनैर्यद्यत्कर्तुं शक्यते तत्र तत्र तस्य शेषत्वम् ? अथवा विनियोजकवाक्यनिर्दिष्टकार्यवशेन व्यवस्थया शेषत्वमिति । 'यज्ञा-

युधानि' इत्यनेन स्फ्यादीनां यज्ञसाधनत्वं तावत्प्रतीयते। तत्र यागनिर्वृत्तिरूपदृष्टप्रयोजनजनकत्वमवघातादेर्लभ्यते। तेन अवघातप्रोक्षणादेरुत्पत्त्यर्वप्रयुक्तत्वम्। किन्तु 'यज्ञायुधानि' इति यज्ञशब्दोल्लेखेन यागीयपरमापूर्वप्रयुक्तत्वं स्फ्यादीनामवगम्यते। तत्रोत्पत्तिवाक्यं पुरोडाशद्रव्यावरुद्धम्। अतस्तत्र निवेशमलभमानानि स्फ्यादीनि तदङ्गेषूद्धननादिषु निविशन्त इति स्वीकर्तव्यम्। तेन व्यवस्थाया नियामकाभावात् सर्वार्थत्वं स्फ्यादीनां सिध्यति। स्फ्येनोद्धन्ति' इत्यादिवाक्यानि तु स्तावकत्वेन नेतुं शक्यन्ते इति पक्षे प्राप्ते;

सिद्धान्तः—व्यवस्थयैवोद्धननादिषु कार्येषु स्फ्यादीनां विनियोगः। स्फ्यश्चेति वाक्यस्य विधायकत्वे बहूनां वाक्यानामानर्थक्यं स्वीकर्तव्यं स्यात्। किञ्च स्फ्यादिवाक्येष्वाख्यातश्रवणमस्ति, यज्ञायुधवाक्ये च तन्नास्ति। आख्याताभावेऽपि तस्य विधायकत्वस्वीकारे बहूनां वाक्यानामानर्थक्यम्। तदपेक्षया यज्ञायुधवाक्यस्यैकस्य स्तावकत्वस्वीकार एवोचितः। ततश्च स्फ्यादीनां श्रुतोद्धननादिष्वेव कार्येषु व्यवस्थया शेषत्वमिति॥

## ६. अरुणाधिकरणम्

ज्योतिष्टोमे श्रूयते—'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति। एकं हायनं यस्यास्सा एकहायनी गौः। पिङ्गे अक्षिणी यस्यास्सा पिङ्गाक्षी। अनयोर्द्रव्यवाचित्वात् क्रीणातावन्वयस्सुलभः। अरुणयेति गुणवचनत्वात्क्रीणातावन्वयो न भवितुमर्हति। अतः किं वाक्यादरुणापदं विच्छिद्य प्राकरणिकेषु अजादिद्रव्येष्वस्य निवेशः? उत क्रीणातिना प्रथममन्वयः तदनन्तरं क्रयसाधनीभूतायामेकहायन्यामेवान्वय इति सन्देहः। एतदर्थमरुणाशब्दो गुणविशिष्टद्रव्यवाचको वा केवलगुणवाचको वेति विचारणीयम्। यदि प्रथमः पक्षस्तर्हि लक्षणया तद्द्रव्यं हृदयमानीय करणत्वेन क्रयभावनायामन्वयो वक्तव्यः ततः प्रागेव 'एकहायन्या' इति श्रुत्या बोधितस्य एकहायनीद्रव्यस्यान्वितत्वेन क्रयभावनाकाङ्क्षाशान्तेः लाक्षणिकद्रव्यस्यान्वयो दुर्लभः, अरुणयेत्यस्यैकहायन्याऽन्वयोऽपि नोपपद्यते कारकाणां क्रिययैवान्वयनियमात्। अतः प्रकरणादरुणापदं विभज्य प्रकरणादुपस्थितेषु समावेशस्सिध्यति। यदि च द्वितीयः पक्षः तर्हि

अरुणाशब्दस्य गुणवाचित्वात्क्रयभावनायामन्वयं प्राप्यापि करणत्वं नोपपद्यत इति एकहायनीद्रव्यपरिच्छेदद्वारा क्रयसाधनत्वं लभत इति फलफलिभावः।

तत्र स्फ्यकपालाधिकरणे स्फ्यादीनां द्रव्याणामुद्धननादिकार्येष्वन्वयसम्भवेन व्यवस्थायां स्वीकृतायामपि प्रकृते आरुण्यस्यामूर्तत्वेन क्रयं प्रति करणत्वेनान्वयासम्भवात् कारकाणां क्रियान्वयस्य नियतत्वेनैकहायन्यामन्वयासम्भवात् प्रकरणात्परमापूर्वप्रयुक्तत्वमङ्गीकृत्यारुणावाक्याद् 'अरुणया' इति पदं विच्छिद्य प्राकरणिकसर्वद्रव्येषु निवेशः कर्तव्यः। तथा सति यागीयानि सर्वाणि करणान्यरुणीकर्तव्यानीति पक्षे प्राप्ते,

सिद्धान्तः——अरुणापदं यथा गुणिनं ब्रवीति तथा गुणमपि ब्रवीतीति सत्यम्, किन्तु 'क्रीणाति' इति धात्वर्थस्यैकत्वात् एकार्थप्रतिपादकत्वं तावद्वाक्यगतानां पदानामाश्रयणीयम्। पदानि संहत्यैकार्थप्रतिपादकानि भवन्ति इति न्यायः। तेनैकहायन्याः पिङ्गाक्ष्याः यथान्वयः तथा अरुणापदोत्तरस्य करणकारकस्याप्यन्वयः कर्तव्यः। एकहायनीपिङ्गाक्षीपदयोः द्रव्यवाचकत्वेन क्रीणातिना सहान्वये किमपि बाधकं नास्ति। अरुणया इत्यत्र स्त्रीप्रत्ययेन स्त्रीत्वं तच्च प्राणिद्रव्यकमिति बोधे जाते प्रकृत्या तावल्लक्षणया तद्विशिष्टं द्रव्यं गम्यते। द्रव्यं गम्यमानमपि द्रव्यांशस्य लाक्षणिकत्वादुपेक्ष्य श्रुतिप्रतिपाद्यं गुणमेव तृतीया क्रयं प्रति करणतयाऽभिधत्ते। अथवाऽरुणशब्दो द्रव्यमनादृत्य गुणवाचक एव सन्नन्वेति, मुख्ये सम्भवति लक्षणाश्रयणस्यायुक्तत्वात्। यद्यपि स्त्रीप्रत्ययसत्वाद् गुणवचनोऽरुणाशब्दो न भवितुमर्हति, तथापि परिच्छेद्यैकहायनीद्वारा लिङ्गान्वयोपपत्तेः। एवञ्चारुणाशब्दस्य स्त्रीप्रत्ययान्तस्यापि केवलगुणवचनत्वमुपपन्नम्। आरुण्यस्य द्रव्यपरिच्छेदकत्वशक्तिमालोच्य परिच्छेद्यां स्ववाक्योपात्तामेकहायनीं परिच्छिद्य तद्द्वारा क्रियासाधनत्वेनान्वेति। परिच्छेदो नाम इतरव्यावृत्ततया द्रव्यस्य प्रतीतिविशेषः। तथा चारुणगुणपरिच्छिन्नैकहायनीकरणकक्रयभावना प्रकृतवाक्यस्यार्थः पर्यवस्यति। एवञ्च प्रकृतवाक्यगतैकहायनीद्रव्यपरिच्छेदकतया क्रयभावनायामन्वये सम्भवति वाक्याद्विच्छिद्य प्राकरणिकान्यद्रव्यपरिच्छेदकत्वमारुण्यस्येति वर्णनं न युक्तमिति सिध्यति। ननु कथमारुण्यस्यै-

कहायन्वा एव परिच्छेदकत्वम् 'अजया क्रीणाति' 'हिरण्येन क्रीणाति, 'धेन्वा क्रीणाति' 'ऋषभेण क्रीणाति' इत्यजादीनामपि क्रयसाधनत्वेन विधानात् तेष्वप्यारुण्यस्य निवेशो भवतिवति चेन्न; स्ववाक्यगत क्रयसाधनीभूतद्रव्य एवारुण्यस्य परिच्छेदकत्वसम्भवे क्रयान्तरसाधनेष्व-जादिषु निवेशासम्भवात्। अजादिवाक्यानि क्रयान्तरविधायकानि। आनत्यर्थं क्रयभेदोऽत्र स्वीकृतः। नात्रैक एव क्रयः। अत्रैकस्य वाक्यस्य क्रयविधायकत्वम् अन्येषाञ्च गुणविधायकत्वमिति वक्तुं न शक्यते उत्पत्तिशिष्टगुणावरुद्धत्वेन गुणान्तरस्य निवेशासम्भवात्। अतो विनि-गमनाविरहेण प्रतिवाक्यं तत्तद्द्रव्यविशिष्टक्रयविधायकमित्यङ्गीकर्तव्य-मेव। अस्मिन्नरुणावाक्ये प्रथममेकहायनीवदारुण्यस्यापि क्रयभावनायां विना परिच्छेद्यपरिच्छेदकभावेनान्वयः, साक्षात्तस्य क्रयसाधनत्वं न शक्यत इति पर्यालोच्यैकहायनीद्रव्यद्वाराऽनन्तरमन्वेति। अयं पार्ष्ठि-कान्वय इत्युच्यते। पार्ष्ठिकान्वयश्चार्थिकः। यथा विशिष्टविधिस्थले विशेषणस्यार्थिको विधिः, तथैव प्रकृतेऽप्यार्थिको विधिः। तस्मादारुण्य-स्यैकहायनीद्वारा क्रयभावनायामन्वयः॥

### ७. ग्रहैकत्वाधिकरणम्

एवं तावत् अवहनन-पेषणोत्पवनादीनां संस्काराणां संस्कार्य-व्रीह्यादिसंयोगेन तेषामर्थाधिकरणे व्यवस्थाम्, अनन्तरं स्फ्यकपाला-धिकरणे 'स्फ्येनोद्धन्ति' 'कपालेषु श्रपयति' इत्यादिषु वाक्येषू-द्धननादीनां स्फ्याद्विद्रव्यसबन्धेन व्यवस्थाम्, तदनन्तरमरुणाधिकरणे ऽरुणगुणस्यैकहायनीसम्बन्धेन व्यवस्थां प्रतिपाद्य सम्प्रति शेषस्य विवक्षित-विशेषणकेन शेषिणा सम्बन्धः अथवा अविवक्षितविशेषणकेन शेषिणा सम्बन्ध इति विचारः प्रस्तूयते। सोमयागे 'ग्रहं सम्मार्ष्टि' इति श्रूयते। वासःखण्डेन प्रोञ्छनं सम्मार्गः। ग्रह इति वितस्तिपरिमाणः उलू-खलाकारो दारुपात्रविशेषः। धाराग्रहा अधाराग्रहाश्चेत्यनेके सन्ति ग्रहाः। तेषां सम्मार्गोऽनेन वाक्येन विधीयते। अत्र विधीयमानस्स म्मार्गश्शेषः; तस्य शेषी ग्रहः। किमयं शेषी विवक्षितविशेषणकः? उताविवक्षितविशेषणक इति संशयः। अर्थात् ग्रहगतैकत्वस्य विशेषणस्य विवक्षा वा अविवक्षा वा। यदि विवक्षा एकस्य ग्रहस्य सम्मार्गः, यद्य-

विवक्षा सर्वेषां ग्रहाणां सम्मार्गः कर्तव्यः। तत्रैकवचनस्य श्रवणात् व्यक्तिविशेषस्य सम्मार्ग इति युक्तम्। एकत्वं यदा श्रूयते तदा तद-विवक्षायां न किमपि प्रमाणम्। अत एकत्वविशिष्टं ग्रहमुद्दिश्य सम्मार्गो विधीयत इति पक्षे प्राप्ते,

सिद्धान्तः—आकृत्यधिकरणन्यायेन ग्रहशब्दस्य ग्रहत्वे शक्तिः। तच्च सर्वा व्यक्तीरुपस्थापयति। एकत्वञ्च प्रत्ययार्थः। प्रातिपदिकार्थापेक्षया वचनरूपप्रत्ययार्थो दुर्बलः; 'सत्त्वप्रधानानि नामानि' इति स्मृतेः। प्रबलीभूतं ग्रहत्वं कृत्स्नव्यक्त्युपस्थापकम् दुर्बलीभूतश्चैकत्वमेकां व्यक्ति-मुपस्थापयति। अत्र च विधेयः सम्मार्गः। विधिश्च ग्रहत्वमुद्दिश्य सम्मार्गं विदधाति। ग्रहत्वस्य सम्मार्गो न भवितुमर्हतीति तदविना-भूतव्यक्तिमाश्रयते सम्मार्गः। व्यक्त्याश्रयावसरे सर्वा ग्रहव्यक्तय उपस्थिता भवन्ति। तत्र प्रत्ययार्थं एकत्वं प्रविश्य एकस्या एव व्यक्तेस्सम्मार्गः कर्तव्य इति बोधयेत्। यावदेकत्वस्य विधिसंस्पर्शित्वं न स्यात्तावद्वि-धिस्सम्मार्गमेकस्यां नियन्त्रयितुं न शक्नुयात्। अतस्सम्मार्गेण सहैकत्व-स्यापि विधेयत्वमङ्गीकर्तव्यम्। तथा सति ग्रहं सम्मृज्यात् तच्चैकम् इति वाक्यार्थस्स्यात्। आसादनवाक्यप्राप्तग्रहोद्देशेन विधेयद्वये सति वाक्यभेद आपतेत्। किञ्चैकत्वस्य विधिसंस्पर्शित्वे सङ्ख्यायास्सङ्ख्यान्तरव्या-वर्तकत्वस्वाभाव्यात् ग्रहान्तरस्य सम्मार्गो न कर्तव्य इत्यर्थस्स्यात्। एवं सति स्वार्थत्यागः परार्थस्वीकारः ग्रहत्वेनोपस्थापितव्यक्तिषु प्राप्तस्य सम्मार्गस्य बाध इति दोषत्रयमापतेत्। अतो विधेयतया विधिसंस्पर्शित्वं परित्यज्योद्देश्यतया विधिसंस्पर्शित्वमेकत्वस्याश्रयणीयम्। तदापि वाक्य-भेद आपतेत्—उद्देश्यतया विधिसंस्पर्शित्वमेकत्वस्य स्वीक्रियेत तर्हि एकत्वस्य सम्मार्गोऽनुपपन्नः। यदि ग्रहद्वारा एकत्वं गृह्यते तदा ग्रहं सम्मृज्यात् यं सम्मृज्यात्तच्चैकम् इति वाक्यभेदः। अतो वाक्यभेद-परिहारायोद्देश्यगतमेकत्वादिकं न विवक्ष्यते। ननु यथा विशेषण-विशिष्टविधेयस्थले विशिष्टस्य विधेयत्वमाश्रित्य वाक्यभेदः परिह्रियते तथा विशिष्टोद्देश्यस्थलेऽपि वाक्यभेदः परिह्रियताम् इति चेन्न; विशिष्टविधेयस्थले 'पशुना यजेत' इत्यादौ तृतीयाविभक्तिः करण-कारकमेकत्वञ्च वदति, प्रातिपदिकन्तु पशुमाचष्टे। तत्र प्रातिपदिकार्थः

पशुः एवं प्रत्ययार्थं एकत्वञ्च प्रथमं तृतीयाकारकेण प्रधानीभूतेनान्वयं प्राप्नुतः। ततः प्रधानक्रियायामन्वयः। एवञ्च प्रधानभूतं कारकं गुणभूते पश्वेकत्वे वशीकृत्य यागक्रियायामन्वेतीति सिध्यति। सा च यागक्रिया विधावन्वेति कारकाणां क्रियान्वयनियमात्। तच्च कारकं पश्वेकत्वे वशीकृत्य प्रधानक्रियायामन्वयं प्राप्नोतीति गुणानुरोधेनावृत्तेरभावात् न वाक्यभेदः। सम्मार्गवाक्ये तु ग्रहैकत्वे प्रधानभूते। सम्मार्गश्च गुणभूतः। प्रतिप्रधानं गुणस्यावृत्तिरिति वाक्यभेदस्स्यात्। अत्र ग्रहैकत्वाभ्यां प्रत्येकं कर्मकारकस्यान्वयः। तथा च एकत्वविशिष्टकर्मकारकयुक्तः सम्मार्गः, ग्रहविशिष्टकर्मकारकयुक्तस्सम्मार्गं इति सम्मार्गक्रियाविधौ विध्यावृत्तिलक्षणो वाक्यभेदो दुर्वारः। तस्माद् उद्देश्यविशेषणमविवक्षितमिति॥

## ८. चमसाधिकरणम्

सर्वे ग्रहास्सम्मार्जनीया इति प्रतिपाद्य ग्रहवच्चमसा अपि सम्मार्जनीया न वेति विचार्यते। प्रत्ययार्थस्याविवक्षायां हेतुरुद्देश्यविशेषणम्। तद्वद् ग्रहत्वमप्युद्देश्यविशेषणम्। अतस्तस्याप्यविवक्षा। पात्रेषु सोमावसेकनिर्हरणार्थं सम्मार्गः क्रियते। तादृशसोमावसेकश्चमसेष्वपि सम्भाव्यते संस्कारत्वात्सम्मार्गस्य। अतश्चमसेष्वपि सम्मार्गो भवत्येव। किञ्चाङ्गानामपूर्वप्रयुक्तत्वात् अपूर्वसाधनत्वं यथा ग्रहाणां तथा चमसानामपि तथात्वात् सोमपात्रत्वात् ग्रहपदस्योपलक्षणत्वाच्चमसेष्वपि सम्मार्गः कर्तव्य इति प्राप्ते,

उद्देश्यविशेषणस्यैकत्वस्य विवक्षायां वाक्यभेदो भवेदिति तस्याविवक्षा साधिता। तद्वद् ग्रहत्वस्य विवक्षायामपि व्यक्तेरविनाभावित्वाद् व्यक्त्युपस्थितिरनिवार्या। अतो न वाक्यभेददोषः येन ग्रहत्वाविवक्षा स्यात्। यदुक्तं सम्मार्गस्यापूर्वप्रयुक्तत्वाच्चमसेष्वपि सम्मार्ग इति तत्रोच्यते—अपूर्वसाधनत्वं वाक्योपात्तग्रहशब्देन लक्षणीयम्। यथा 'व्रीहीन् प्रोक्षति' इत्यत्र व्रीहिशब्दलक्षितापूर्वसाधनत्वं आज्यादिषु नाङ्गीक्रियते, तथा ग्रहशब्दलक्षितापूर्वसाधनत्वं चमसेषु नाङ्गीक्रियते। अतो ग्रहशब्दलक्षितापूर्वविशेषनिबन्धनस्सम्मार्ग इत्याश्रीयमाणे चमसेषु सम्मार्गो न भवति इति॥

## ९. आनर्थक्यतदङ्गाधिकरणम्

### ( आनर्थक्यतदङ्गन्यायः )

वाजपेययागे 'सप्तदशारत्निर्वाजपेयस्य यूपः' इति वाक्यं श्रूयते। कनिष्ठिकां प्रसार्य बद्धमुष्टेर्हस्तस्य यत्परिमाणं तद्वाची अरत्निशब्दः। तत्र सप्तदशसङ्ख्या। यूपशब्दः पशुबन्धनार्थं दृष्टादृष्टसंस्कारैस्संस्कृतं काष्ठमभिधत्ते। अथवा संस्कारगणमभिधत्ते। अत्र विचार्यते—किं सप्तदशारत्निशब्दस्य सन्निहितवाजपेयपदेनान्वयः ? उत व्यवहितयूपशब्देनान्वयः ? प्रथमपक्षे सप्तदशारत्नित्वस्य वाजपेयाङ्गत्वं सिध्यति; द्वितीयपक्षे यूपाङ्गत्वं सिध्यति। प्रकरणञ्च वाजपेयस्य सोमयागस्य। तत्राङ्गानां प्रधानेनान्वयोऽभ्यर्हितः। प्रधानञ्च वाजपेयः। यूपस्तु वाजपेयाङ्गाङ्गम्। वाजपेयस्याङ्गं पशुयागः, तदङ्गं यूपः। अङ्गाङ्गेन सम्बन्धापेक्षया प्रधानेनान्वयः सप्तदशारत्नित्वस्य युक्तम्। प्रधानञ्च सन्निहितम्। अनेन कारणेन सप्तदशारत्निरित्यस्य 'वाजपेयस्य' इत्यनेनैवान्वयः। परिमाणवाचकस्सप्तदशारत्निः सोमयागेन सम्बन्ध्य कमुपकारं जनयेत् इति प्रश्ने सति, वाजपेये षोडशिग्रहनामकं किञ्चिदेकमूर्ध्वपात्रमस्ति; तस्य सप्तदशारत्नित्वं सम्पाद्य वाजपेयस्योपकारं जनयेदिति समाधानम्। अथवा सोमलतासाध्यकत्वाद्यागस्य सप्तदशारत्निपरिमाणां सोमलतां सम्पाद्य तया यागानुष्ठानेनोपकारो भवतु। यूपशब्द ऊर्ध्वत्वसादृश्यात् षोडशिपात्रे वर्तते। तस्मात् सप्तदशारत्नित्वस्योर्ध्वपात्रे सोमलतायां वा निवेश उचित इति पक्षे प्राप्ते,

सिद्धान्तः—अरत्नीनां साप्तदश्यं-सप्तदशसङ्ख्या पशोरङ्गम्। पशुयागे विद्यमानो यो यूपस्तत्र निविशते। अङ्गानां प्रधानगामित्वमिति युक्तम्; किन्तु यदङ्गं यस्य प्रधानस्योपकारकं स्यात् तेन प्रधानेन तस्य सम्बन्धो न्याय्यः। वाजपेयस्येति षष्ठी सम्बन्धवाचिनी। सम्बन्धस्यैकस्सम्बन्धी वाजपेयः, अपरस्सम्बन्धी यूपो वा सप्तदशारत्निर्वा। यूपो यदि स्वीक्रियते तदा सोमयागात्मकवाजपेयाङ्गभूतपशुयागे यो यूपः तत्र सप्तदशारत्नित्वस्य सम्बन्ध इति कथनं युक्तियुक्तम्। यदि च सप्तदशारत्निः सम्बन्धी स्वीक्रियते तदा यूपपदेन लक्षितं

यदूर्ध्वपात्रं वाजपेयसम्बन्धि तत्र सप्तदशारत्नित्वं निविशत इति वक्तव्यम्। उपकार्योपकारकभावसम्बन्धमादायाङ्गत्वमाश्रयणीयम्। यूपः पशुद्वारा वाजपेययागोपकारकः। स च यूपपदेनोपस्थाप्यते। एवमुपस्थापितेन यूपेन ऊर्ध्वपात्रं लक्षणीयम्, लक्षितेन तेनारत्निसम्बन्ध इत्यङ्गीकर्तव्यम्। तथा सति यूपशब्दो गौणस्स्यात्। गौणत्वस्वीकारापेक्षया व्यवहितान्वयो ज्यायान्। तस्मात् सप्तदशारत्निर्यूप इत्यन्वय एवोचितः न तु सप्तदशारत्निर्वाजपेयस्येति। ततश्च सप्तदशारत्निता यूपस्यैव, न तु यूपशब्दलक्षितोर्ध्वपात्रस्येति सिद्धम्। यदुक्तं सोमलतायां सप्तदशारत्नित्वस्य निवेश इति तत्रापि यूपपदेन सोमो लक्षणीयः। दशमुष्टिपरिमितस्य सोमस्य ग्रहणविधायकं शास्त्रमुल्लङ्घनीयमिति दोषस्स्यात्। अतः सप्तदशारत्निताया निवेशो यूप एवेति॥

## १०. अभिक्रमणाधिकरणम्

दर्शपूर्णमासयोः प्रयाजसन्निधौ 'अभिक्रामञ्जुहोति' इति श्रुतम्। होमकर्ता अभिक्रम्याभिक्रम्य होमं कुर्यादित्यर्थः। अत्र सन्देहो भवति किमिदमभिक्रमणं प्राकरणिककर्मणां कर्तारोऽभिक्रम्य जुहुयुरित्यर्थः? उत प्रयाजकर्ता प्रयाजान् अभिक्रमणपूर्वकं जुहुयादित्यर्थो वेति। यद्यवान्तरप्रकरणं नास्ति तर्हि महाप्रकरणेन गृहीतमभिक्रमणं सर्वकर्मकर्तृषु प्राप्नुयात्। यदि च तदस्ति तर्हि प्रयाजकर्तर्येवाभिक्रमणं व्यवस्थितं तिष्ठति। तत्राभिक्रमणं व्यापारः, तस्य कारकत्वं द्रव्यद्वारैव सिध्यति। अरुणावाक्ये द्रव्यमेकहायनी वर्तत इति तद्द्वारारुण्यस्य क्रयसाधनत्वं साधितम्। अत्र तु तादृशं द्रव्यं नोपात्तम्। यद्यपि 'जुहोति' पदेन कर्तुः प्रतीतिरस्ति तथापि भावार्थाधिकरणन्यायेन धात्वर्थातिरिक्ताया भावनाया आख्यातवाच्यत्वनिर्णयात् तस्य कर्तृवाचकत्वाभावात् न कर्तुर्द्रव्यस्य लाभः। यद्याक्षेपलभ्यस्स इत्युच्यते तर्हि प्राकरणिकसर्वकर्मकर्तारः प्राप्नुयुः। तेष्विदमभिक्रमणं प्राप्नोति, न प्रयाजकर्तर्येव। तथा च जुहोतितो विच्छिन्नमभिक्रमणं प्रकरणेन गृह्यते। यथा प्रकरणं प्रयाजादीन् गृह्णाति तथाऽभिक्रमणमपि, तत्र जुहोतिपदमवयुत्यानुवादः। तस्मादिदमभिक्रमणं कर्तृसंस्कारद्वारा प्रकरणगृहीतसर्वप्रयोगाङ्गमिति पक्षे प्राप्ते,

सिद्धान्तः—'अभिक्रणम्' इति पदं णमुल्प्रत्ययान्तम् । णमुल्प्रत्ययश्च समानकर्तृकयोः पूर्वकाले' इत्यधिकारे विहितः । तेन पूर्वकालक्रियावाचीदं पदमिति सिध्यति । इदञ्चोत्तरकालक्रियामपेक्षते । सा च क्रिया स्वसमभिव्याहृतजुहोतिपदेन प्रतिपादिता । तामुत्सृज्य प्राकरणिकक्रियाः किमित्यपेक्षेत । जुहोतिसम्बन्धेनैवाकाङ्क्षायाश्शान्तत्वात् । अत्रत्यजुहोतिना सन्निहितप्रयाजहोमा एव गृह्यन्ते । ततश्च तत्कर्तर्येवाभिक्रमणं सम्बध्यते । अतश्च प्रयाजाङ्गमेवाभिक्रमणम् । अयं भाष्यकाराणां पन्थाः ।

भाष्यकाराणां मते होमकर्तृष्वभिक्रमणस्य संबन्ध इति निश्चित्य सन्निहितत्वात् प्रयाजहोमकर्तर्येवाभिक्रमणं सम्बध्यते न तु सर्वहोमकर्तृष्विति विचारसरणिः । अत्र वार्तिककाराः—अभिक्रमणस्य क्रियारूपत्वेन प्रकरणस्य क्रियाग्राहकत्वात् यथा तत् प्रयाजक्रिया इतिकर्तव्यतापूरकत्वेन गृह्णाति तथाऽभिक्रमणमपि गृह्णातीति सर्वहोमाङ्गत्वमभिक्रमणस्य पूर्वपक्षयित्वा अवान्तरप्रकरणद्वारा प्रयाजहोमाङ्गत्वमेवाभिक्रमणस्य । यथा प्रधानभावनाया इतिकर्तव्यताकाङ्क्षा तथाऽङ्गभावनाया अप्युदेति । तन्नियन्त्रणाय अवान्तरप्रकरणं स्वीकृत्याभिक्रमणं प्रयाजहोमाङ्गमिति सिद्धान्तयन्ति ॥

## ११. उपवीताधिकरणम्

अस्याधिकरणस्य विषयवाक्यम्—'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इति । दैविककर्मानुष्ठानावसरे उपवीतं मनुष्यसम्बन्धिकर्मानुष्ठानावसरे निवीतम्, पैतृककर्मानुष्ठानावसरे प्राचीनावीतमिति यज्ञोपवीतधारणप्रकारः । तत्रेदमुपवीतं सामिधेन्यङ्गकलापमध्ये आम्नातमस्ति । सामिधेन्यश्चाग्निप्रज्वलनफलकसमिदाधानार्था मन्त्राः 'प्रवोवाजा अभिद्यवः' इत्याद्याः । मन्त्रैः क्रियमाणं समिदाधानकर्मापि सामिधेनीशब्देन व्यवह्रियते । तदस्य कर्मणस्सन्ति नानाङ्गानि । तेषूपवीतमाम्नातम् । तदिदमुपवीतं सामिधेन्यङ्गम् उत दर्शपूर्णमासाङ्गमिति संशयः । अर्थात् सामिधेन्याख्यं कर्मैवोपवीतं धृत्वानुष्ठेयम् उत दर्शपूर्णमासाख्यं कर्मेति । पूर्वस्मिन्नधिकरणेऽवान्तरप्रकरणमङ्गीकृत्याभिक्रमणस्य प्रयाजाङ्गत्वं

व्यवस्थापितम् । तथैव सामिधेन्यवान्तरप्रकरणं स्वीकृत्योपवीतस्य सामिधेन्यङ्गत्वमाश्रीयताम् । ननु सामिधेनीसम्बन्धरहितैर्निविन्नामकमन्त्रैर्व्यवधानाद् अवान्तरप्रकरणं विच्छिन्नमिति चेन्न; यथा दर्शपूर्णमाससम्बन्धरहितैः पूषानुमन्त्रणमन्त्रैः व्यवधानसत्त्वेऽपि न प्रकरणविच्छेदस्तथा निविदामपि परप्रकरणपाठमात्रेण प्रकरणविच्छेदकत्वानुपपत्तेः । अतोऽवान्तरप्रकरणात् सामिधेन्यङ्गमुपवीतमिति पक्षे प्राप्ते,

सिद्धान्तः—महाप्रकरणेनोपवीतं दर्शपूर्णमासाङ्गम् । निविन्मन्त्रा अग्निप्रकाशकाः, सामिधेनीमन्त्रा अप्यग्निप्रकाशकाः । तुल्यार्थप्रकाशकत्वेन नोभयेषामङ्गाङ्गिभावस्सम्भवति । अनङ्गभूतानां निविदां मध्ये पठितत्वात् प्रकरणविच्छेदकत्वमस्त्येव । सन्निधिपाठमात्रेण निविदां सामिधेन्यङ्गत्वं वक्तव्यम् । सन्निध्यपेक्षया प्रकरणस्य दर्शपूर्णमासाख्यस्य प्रबलत्वेन सामिधेनीनां दर्शपूर्णमासाङ्गत्वे सिद्धे निविदां सामिधेन्यङ्गत्वमनुपपन्नम्, गुणानां मिथोऽङ्गाङ्गिभावाभावात् । यदि सन्निधिमात्रेणाङ्गाङ्गिभावो निर्णीयेत तर्हि अङ्गानामपि मिथोऽङ्गाङ्गिभाव आपतेत् । अतो महाप्रकरणाद्दर्शपूर्णमासाङ्गमेवोपवीतम्, तत्कर्तृसंस्कारकं सत् दर्शपूर्णमासकर्तार उपवीतिनो भूत्वा दर्शपूर्णमासप्रयोगं कुर्युरिति बोधयति ॥

## १२. वारणाधिकरणम्

'गुणानाञ्च परार्थत्वादसम्बन्धस्समत्वात् स्यात्' इति सूत्रं वार्तिककारैः पूर्वाधिकरणशेषत्वेन व्याख्यातम् । भाष्यकारैस्त्वधिकरणान्तरतया योजितम् । 'वारणो यज्ञावचरः' 'वैकङ्कतो यज्ञावचरः इति श्रुतमग्न्याधेये । अग्न्याधेय एव पवमानेष्टयः 'अग्नये पवमानाय, अग्नये शुचये अग्नये पावकाय' इति तिस्रः श्रुताः । यज्ञावचरः इत्यस्य यज्ञपात्रमित्यर्थः । तत्र यानि पात्राणि तानि पवमानेष्ट्यङ्गभूतानि ? उत सर्वयज्ञाङ्गभूतानीति सन्देहः । सन्देहस्येदं बीजम्—यदग्न्याधेयसन्निधौ श्रुतानां यज्ञावचराणां न कोऽप्युपयोगः यतो हि अग्न्याधेयं नाम मन्त्रपुरस्सरं मथितस्याग्नेः तत्तत्कुण्डेषु निधानम् । तत्र पात्राणां जुह्वादीनां उपयोगाभावेऽपि तत्सन्निधावाम्नातासु पवमानेष्ट्यादिषु आधानाङ्गभूतासु आनर्थक्यतदङ्गन्यानये निवेशो भवत्विति पक्षे प्राप्ते,

सिद्धान्तः—आधानस्य पवमानेष्टीनाञ्च नाङ्गाङ्गिभावः। यथाऽऽधानमग्निसिध्यर्थमनुष्ठीयते तथा पवमानेष्टयोऽप्यग्निसिध्यर्थाः। तथा सत्याधानं यथाऽन्यङ्गम् तथा पवमानेष्टयोऽप्यग्न्यङ्गमिति पर्यवस्यति। अतः पवमानेष्टीनां पात्राणाञ्चासम्बन्धः। तस्मादानर्थक्यतदङ्गन्यायस्य नात्र प्रसरः। 'यदाहवनीये जुहोति' इत्यनारभ्याधीतं वाक्यं होमाधिकरणत्वेनाहवनीयं विदधाति। अनारभ्याधीतानाञ्च प्रकृतिगामित्वं न्यायतस्सिद्धम्। प्रकृतिश्च दर्शपूर्णमासौ। पवनेष्टीनाञ्चेष्टित्वाद्दर्शपूर्णमासविकृतित्वं सिद्धम्। प्रकृतितोऽन्याङ्गवदाहवनीयस्यापि प्राप्तिरस्त्येव। अतः पात्राणां सर्वयज्ञार्थता सिध्यति। न च पवमानेष्टिसन्निधौ 'यदाहवनीये जुहोति' इति पाठादेवाहवनीयस्य प्राप्तिरस्तु किमतिदेश प्रतीक्षणेनेति वाच्यम्। अस्य वाक्यस्याहवनीयविधिपरत्वाभावात्। आहवानीयाख्ये पदार्थे सिद्धेऽनन्तरं होमाधारत्वेन स विधातुं शक्यते। आधानेन पवमानेष्टिभिश्च साध्यः सः। तस्यामवस्थायां वाक्यमिदं कथं विधायकं स्यात्। नेदं वाक्यमतिदेशतः प्राप्तस्याहवनीयस्यानुवादकमपि भवितुमर्हति, आहवनीयस्यासिद्धत्वात्। अत एतद्वाक्यं आहवनीये निष्पादयितव्ये पवमानहविषां जुहोतिसंयुक्तानां 'जुहोतिना' लक्षितानां साधनत्वबोधकतया कथञ्चिन्नेयम्। तस्मात्पवमानहविषामाधानवदग्न्यर्थत्वेन पात्राणां सर्वयज्ञार्थत्वं स्वीकर्तव्यमिति॥

## १३. वार्त्रघ्न्यधिकरणम्

दर्शेष्टौ पौर्णमास्येष्टौ च द्वौ द्वावाज्यभागाख्ये कर्मणी भवतः। 'आज्यभागौ यजति' इति तदुत्पत्तिवाक्यम्। एकोऽग्निदेवताकः, अपरस्सोमदेवताकः, आज्यञ्च द्रव्यम्। अस्मिन् क्रमे संहिताभागे ऋग्युगल द्वयमाम्नातम्—'अग्निर्वृत्राणि जङ्घनत्' 'त्वं सोमासि सत्पतिः त्वं राजोत वृत्रहा' इत्येकं युगलम्। 'अग्निः प्रत्नेन जन्मना' 'सोम गीर्भिष्ट्वा-वयम्' इत्यपरं युगलम्। प्रथमयुगलं वृत्रहननप्रकाशकत्वाद् 'वार्त्रघ्नी' त्युच्यते। द्वितीयं युगलञ्च वृद्धिप्रकाशकत्वाद् वृधन्वतीत्युच्यते। युगलद्वयमधिकृत्याम्नायते—'वार्त्रघ्नी पौर्णमास्यामनूच्येते' 'वृधन्वती अमावास्यायाम्' इति। वार्त्रघ्नी वृधन्वतीशब्दौ द्विवचनान्तौ—वार्त्रघ्न्यौ वृधन्वत्यौ इति। इदमेवास्याधिकरणस्य विषयवाक्यम्। अत्र सन्देहः—

किमाज्यभागक्रमप्राप्तान् मन्त्रान् क्रमादाच्छिद्य दर्शपूर्णमासाङ्गतया वाक्यमिदं विधत्ते ? उताज्यभागयोरेवाव्यवस्थया प्राप्तानां मन्त्राणां व्यवस्थापकमिति । तत्र वाक्यगतपौर्णमास्यमावास्याशब्दौ कर्मवचनौ । सप्तमीबलेन कालवाचकत्वे स्वीकृते 'काले यावाज्यभागौ' इति लक्षणा स्यात् । सप्तमीविभक्तेः क्वचित्प्राधान्येऽपि प्रयोग उपलभ्यते । तस्मात्क्रमं बाधित्वा वाक्येन दर्शपूर्णमासोद्देशेन मन्त्रा विधीयन्त इति पक्षे प्राप्ते,

सिद्धान्तः—चतस्रोऽपीमा ऋचः पुरोऽनुवाक्या भवन्ति । यागात् पूर्वम् 'अनुब्रूहि' इति प्रैषसमनन्तरं होत्रा पठितव्याः । एकैकस्य यागस्य एकैव पुरोऽनुवाक्या एकैव च याज्याभवति । अत्र च चतस्र ऋचो वर्तन्ते । दर्शे पूर्णिमायाश्च क्रियमाणाग्नेयद्वये आग्नेय्योः ऋचोः समावेशे सत्यपि सोमदेवताकर्ग्द्वयस्य समावेशो न भवति । अग्नीषोमीययागे चाग्नि-सहितस्य सोमस्य देवतात्वम्, न केवलसोमस्य देवतात्वम् । अस्यां स्थितौ सोमदेवताकमन्त्रयोः दर्शे वा पूर्णिमायां वा निवेशो न सम्भवति । किञ्च सप्तम्यन्तम् अमावास्यायां पौर्णमास्यामिति पदद्वयं कालवाचकमेव प्रयुज्यते । तृतीयान्तं पदञ्च 'अमावस्यया' 'पौर्णमास्या' इति कर्मवाचक-त्वेन दृश्यते । तथासति प्रकृतवाक्ये सप्तम्यन्ततया प्रयुक्तत्वात् तत्काल-कर्तव्यौ यावाज्यभागौ तत्रामावास्यायां वार्त्रघ्नीमन्त्रौ पौर्णमास्याञ्च-वृधन्वत्यौ इति व्यवस्थायामाश्रितायां चतुर्णामपि मन्त्राणां समावेशो यथायथं भवति । तस्माद् वाक्यमिदं कालभेदेन मन्त्रव्यवस्थापकमिति ॥

## १४. हस्तावनेजनाधिकरणम्

दर्शपूर्णमासयोः हस्तयोरवनेजनम् उलपराजिस्तरणञ्च—'कर्मणे वां देवेभ्यश्शकेयमिति हस्ताववनेनिक्ते' 'सन्ततमुलपराजिं स्तृणाति' इति वाक्याभ्यां विहिते । तथा ज्योतिष्टोमे मुष्टीकरणं वाग्यमनं दीक्षिता-वेदनञ्च 'मुष्टी करोति' 'वाचं यच्छति' 'अदीक्षिष्टायं ब्राह्मण इति दीक्षितमावेदयति' इति वाक्यैर्विहितानि । हस्तावनेजनं नाम हस्तयोः प्रक्षालनम् । उलपराजिस्तरणं नाम तृणैः वेद्यास्तरणमाच्छादनम् । यजमानं दीक्षितत्वेन देवेभ्यो बोधनम् । वाग्यमनं मुष्टीकरणञ्च मनः

प्रणिधानार्थं क्रियमाणो व्यापारः मुष्टीकरणं वाग्यमश्च यजमानकर्तृकौ अन्यानि चाध्वर्युकर्तृकाणि । अत्र सन्देहः—किं हस्तावनेजनं उलपराजिस्तरणाङ्गम्, मुष्टीकरणं वाग्यमनञ्च दीक्षितावेदनाङ्गम् ? उत हस्तावनेजनमध्वर्युकर्तृकसकलकर्माङ्गम्, तथा वाग्यमनं मुष्टीकरणञ्च अध्वर्युकर्तृकदीक्षितावेदनकाले याजमानसर्वकर्माङ्गमिति । तत्र हस्तावनेजनानन्तरं स्तरणस्याम्नानात् आनन्तर्यादिकवाक्यतां विधायावनेजनमुलपराजिस्तरणाङ्म, एवं मुष्टीकरणस्य वाग्यमनस्य च याजमानत्वेऽपि अध्वर्योः प्रयोजककर्तृत्वात् मनःप्रणिधानमध्वर्योरप्यावश्यकमेवेत्येकवाक्यतामङ्गीकृत्य दीक्षितावेदनाङ्गत्वं मुष्टीकरणवाग्यमनयोः । किञ्च सर्वत्राख्यातवाच्यभावनायाः किम्भावाकाङ्क्षायाम् अनन्तरपठितस्तरणादिकमेवोपतिष्ठत इति तत्तदङ्गत्वं हस्तावनेजनादीनामिति पक्षे प्राप्ते;

सिद्धान्तः—आनन्तर्यापरपर्यायस्सन्निधिर्नात्राङ्गताग्राहिका भवितुमर्हति, तस्या अवर्जनीयत्वात् । तस्या लिङ्गेन प्रकरणेन च प्रबलेन बाधात् आध्वर्यवसकलकर्माङ्गत्वमवनेजनस्य, मुष्टीकरणवाग्यमनयोस्तु याजमानवेदनकालिकसर्वकर्मार्थत्वम्, हस्तावनेजनादिवाक्यानां स्वस्वार्थबोधने परिपूर्णत्वेनैकवाक्यत्वमनुपपन्नम् । तस्मात्सर्वकर्मार्थमवनेजनमिति ॥

## १५. चतुर्धाकरणाधिकरणम्

दर्शपूर्णमासयोः 'आग्नेयं चतुर्धा करोति' इति श्रूयते । अग्निर्देवता अस्येत्याग्नेयः पुरोडाशः । तं चतुर्धा विभजेदित्यर्थः । दर्शे ऐन्द्राग्नः पुरोडाशः पौर्णमास्यां आग्नेयाग्नीषोमीयपुरोडाशौ द्वाविति दर्शपूर्णमासयोः त्रयः पुरोडाशास्सन्ति । तत्र ऐद्राग्ने अग्नीषोमीये चाग्नेस्सम्बन्धस्य सत्त्वात् चतुर्धाकरणमिदं तत्रापि किं कर्तव्यम् ? उताग्नेयपुरोडाशस्यैव चतुर्धाकरणमिति सन्देहः । तत्र त्रिष्वपि पुरोडाशेषु चतुर्धाकरणं प्राप्नोति अग्नीषोमीये ऐन्द्राग्ने चाग्निसम्बन्धस्य सत्त्वात् । चतुर्धाकरणवाक्येऽग्नेरुपलक्षणमात्रम् । उपलक्षितस्याग्नेरग्नीषोमीये ऐन्द्राग्ने च विद्यमानत्वात्तत्रापि चतुर्धाकरणं प्राप्नोत्येव । तत्तदुत्पत्ति-

वाक्येषु अग्नेः अग्नीषोमयोः इन्द्राग्न्योश्च देवतात्वमस्तु। प्रकृतवाक्येऽग्ने-रुपलक्षमात्रत्वमेवेति त्रिष्वपि चतुर्धाकरणं कर्तव्यमेवेति पक्षे प्राप्ते,

सिद्धान्तः——यथोत्पत्तिवाक्यगताग्नेयशब्दो देवतातद्धितान्तस्तथैव चतुर्धाकरणवाक्यगताग्नेयशब्दोऽपि। चतुर्धाकरणवाक्ये यद्यग्नेरुपलक्षण-मात्रं तदा तदुपलक्षणं देवतात्वेनैव भवितुमर्हति। उत्पत्तिवाक्येऽग्नेर्देव-तात्वेन सम्बन्धः श्रुतः तस्यात्र बाधः, अश्रुतलक्षणाप्रसङ्गश्च स्यात्। ननु यथाऽऽग्नेय इत्यत्राग्नेर्देवतात्वं तथा ऐन्द्राग्ने अग्नीषोमीये इत्यत्रापि देवतात्वमस्तु इति चेन्न, इन्द्रसापेक्षस्याग्नेः सोमसापेक्षस्याग्नेर्देवतात्वे व्यपेक्षालक्षणसामर्थ्याभावेन तद्धितानुपपत्तेर्देवतात्वाभावात्। आग्नेय-शब्दः केवलाग्निदैवत्यं पुरोडाशं वदति, ऐन्द्राग्न इति तु इन्द्रसहित-दैवत्यं पुरोडाशं वदति। ननु देवदत्तयज्ञदत्तयोर्माता देवदत्तमातेति व्यवहारदर्शनात् ऐन्द्राग्नपुरोडाश आग्नेयपुरोडाशो भवतु इति चेन्न; वैषम्यात्। देवदत्तयज्ञदत्तयोर्मातेति न तद्धितान्तम्, तत्र निरपेक्षमेव मातृत्वम्। अत्र तु तद्धितान्तं पदम्। तस्य सापेक्षत्वे तद्धितप्रत्ययो न स्यात्। तस्माद् आग्नेयस्यैव चतुर्धाकरणं भवेदिति॥

इति तृतीयाध्याये प्रथमः पादः



## अथ द्वितीयः पादः

### १. लिङ्गाधिकरणम्

प्रथमपादे श्रुत्या विनियोगो विचारितः। अस्मिन् पादे लिङ्गा-द्विनियोगः प्रदर्श्यते। लिङ्गं नाम सामर्थ्यम्। तच्च द्विविधम्—शब्द-गतमर्थगतश्चेति। शब्दगतं सामर्थ्यं मन्त्राधिकरणे निरूपितम्। अर्थ-गतश्च सामर्थ्यं प्रथमचतुर्थान्ते सामर्थ्याधिकरणे प्रदर्शितम्। इदानीं लिङ्गस्य विनियोगो विचार्यते। मन्त्राणां 'बर्हिर्देवसदनं दामि' इत्या-दीनां सामर्थ्यरूपलिङ्गात् मुख्यार्थे विनियोगः? उत गौणार्थेऽपि इति विचार्यते। बर्हिश्शब्दस्य मुख्योऽर्थः कुशो यथा, तथा गौणोऽर्थोऽप्यु-पस्थितो भवति उलपराजादिः। मन्त्रगतशब्दानामर्थोपस्थापकत्वसाम-

र्थ्यमादाय लिङ्गस्य विनियोजकत्वं स्वीकर्तव्यम् । गौणमुख्योभयविधार्थोपस्थापकत्वसामर्थ्ये विद्यमाने लिङ्गाद्यथा मुख्यार्थस्य विनियोगस्तथा गौणार्थेऽप्यस्तु विनियोग इति पक्षे प्राप्ते,

सिद्धान्तः—'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति सूत्रे यश्शब्दार्थयोर्नित्यसम्बन्धः स्थापितः स मुख्यार्थे एव । अग्निशब्दस्य ज्वलन एव मुख्योऽर्थः । यदा तस्य शब्दस्य माणवकशब्देन सह प्रयोगः तदा माणवकं गौणमर्थं ब्रूते मुख्यमर्थमभिदधदेव ब्रूते सादृश्यसम्बन्धमादाय । गौणार्थाभिधानावसरे मुख्यार्थपरित्यागो न भवति । 'पौण्डरीकाणि बर्हींषि भवन्ति' इत्यत्र बर्हिश्शब्दः स्वशक्यार्थं परित्यज्य पुण्डरीकमर्थं न वदति । एवञ्च प्रथमप्रतीतो मुख्योऽर्थः, तत्र मन्त्राणां विनियोगे परिसमाप्ते विलम्बेनोपस्थिते गौणेऽर्थे विनियोगो न कल्प्यते, आकाङ्क्षायाश्शान्तत्वात् । न च पुण्डरीकपदसन्निधानेनाकाङ्क्षोत्थापनद्वारा गौणेऽप्यर्थे भवतु विनियोग इति शङ्कितुं शक्यम्, गौणार्थविषयकाकाङ्क्षाया ध्यानादिनापि शान्तिसम्भवात् मन्त्रलिङ्गस्यावश्यकत्वाभावात् । न चैवमूहलोप प्रसङ्ग इति वाच्यम्, ऊहो नाम समवेतार्थप्रकाशनात्मकपदप्रक्षेपः 'सौर्यम्' इति तद्धितान्तपदश्रवणात् विकृतौ तादृशपदप्रक्षेपमन्तरा ध्यानादिना निर्वाहानुपपत्तेः । तस्मान्मन्त्राणां सति सम्भवे मुख्य एवार्थे मन्त्रालिङ्गं विनियोजकमिति ॥

## २. ऐन्द्र्यधिकरणम्

'निवेशनस्सङ्गमनो वसूनां विश्वारूपाभिचष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥'

इति मन्त्र इन्द्रदेवताप्रकाशकः । अस्य प्रतीकग्रहणपुरस्सरं विनियोजकं ब्राह्मणवाक्यम् 'निवेशनस्सङ्गामन इत्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति । अस्याधिकरणस्येदमेव विषयवाक्यम् । उपस्थानं नाम मन्त्राभिधानपूर्वकं समीपगमनम् उत्थानं वा । गार्हपत्यशब्दोऽग्नेर्वाचकः । इन्द्रशब्दश्च देवराजाभिधायकः । अयं मन्त्रगतः । गार्हपत्यशब्दश्च विधिगतः । अत्रैवं सन्देहो भवति किं मन्त्रगतेन्द्रशब्दो मुख्यया वृत्त्या स्वार्थप्रतिपादकस्सन् विधिगतगार्हपत्यशब्दस्य गौण्या वृत्त्या मन्त्रानुसारेणार्थं परिकल्प्य तत्र

विनियुज्यते ? उत विधिगतगार्हपत्यानुसारेण मन्त्रगतेन्द्रशब्दस्य गौणार्थं कत्वमङ्गीकृत्य तत्र विनियुज्यत इति । तत्रेन्द्रप्रकाशको मन्त्रः गार्हपत्यमग्निं प्रकाशयितुं न समर्थः । सामर्थ्यानुसारेणैव विनियोगो भवति । 'ऐन्द्र्या गार्हपत्यम्' इत्यत्रैन्द्रीपदं प्रथमपतितम् असञ्जातविरोधि भवति। तस्मात्तस्य प्राबल्यम्; सञ्जातविरोधित्वाद् गार्हपत्यपदं दुर्बलम् । दुर्बलस्यैवान्यथानयनमुचितम् । अतो मन्त्रानुसारेणैव विधिर्नेय इति गार्हपत्यशब्दस्येद्रार्थकत्वमङ्गीकृत्य मन्त्रस्येन्द्रोपस्थानाङ्गत्वमुचितम् । कुत इति चेत्—उपस्थानं नामोपेत्य स्थितिः । तस्यां स्थितौ मन्त्रस्य करणत्वं साक्षान्न सम्भवतीत्यभिधानद्वारा निर्वोढव्यम् । एवञ्चोपेत्यस्थित्वाऽभिदधातीत्युपतिष्ठतेरर्थः पर्यवस्यति । किमभिदधातीति प्रश्ने मन्त्रगतसामर्थ्यादिन्द्रमभिदधातीति पर्यवस्यति । तथा च गार्हपत्यसमीपं गत्वा स्थित्वा मन्त्रेणेन्द्रमभिदध्यादिति मन्त्रो मुख्यया वृत्या इन्द्रस्यैव शेषः न तु गार्हपत्यस्येति पक्षे प्राप्ते,

सिद्धान्तः——गार्हपत्योपस्थान एव मन्त्रस्य विनियोगः वचनादङ्गीकर्तव्यः; न त्विन्द्रोपस्थाने । 'ऐन्द्र्या' इत्युपक्रमगतत्वमात्रेणेन्द्र एव विनियोग इति न युक्तम्; विधिर्हि अत्यन्ताप्राप्तमर्थं प्रापयन् प्रथमप्रवृत्तिकः; विधिविहितार्थप्रकाशकतया मन्त्रोऽनन्तरप्रवृत्तिकः । तस्माद्विध्यविरोधेन मुख्यार्थमतिक्रम्य गौणार्थत्वमाश्रयितुं न युक्तम् । यदुक्तम्-अभिधान क्रियायामिन्द्रस्य कर्मता न गार्हपत्यस्येति, तत्रोच्यते—उपतिष्ठतेः उपसर्गवशात्समीपं गत्वा स्थित्वा बोधनमर्थः—ऐन्द्र्या उपेत्य गार्हपत्यसमीपे स्थित्वा बोधयतीति । अतो वचनाद् गार्हपत्ये विनियुक्तो मन्त्रः तस्यैव शेषीभवन्निन्द्रशब्दविषये गौणीवृत्तिमाश्रयते; न गार्हपत्यविषये । मन्त्राणां विनियोजकं वाक्यं यत्र नास्ति तत्र केवललिङ्गात्-मन्त्रगतसामर्थ्याद्विनियोगः श्रुतिकल्पनाद्वारा । यत्र च विधिवाक्यद्वारा विनियोगो भवति तत्र मन्त्रगतसामर्थ्यं नालोच्यते, विधिर्यत्र विनियुङ्क्ते तत्रैव तस्य शेषत्वम् । अत्र च गार्हपत्योपस्थाने मन्त्रं विधिर्विनियुङ्क्ते । अतो विध्यनुसारेणैव मन्त्रगतेन्द्रशब्दस्य गौणार्थकत्वमाश्रयणीयम् इति ॥

## ३. हविष्कृदाह्वानाधिकरणम्

दर्शपूर्णमासयोः 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इति श्रूयते। हविष्कृच्छब्दःकर्तरि क्विबन्तो हविष्कर्त्रीमाचष्टे। 'हविष्कृदेहि' इति मन्त्रः, तस्य विनियोगो विधिना क्रियते। किमयं विधिरवहननाङ्गत्वेन मन्त्रं विनियुङ्क्ते? उताह्वानाङ्गत्वेन? 'अवघ्नन्' इत्यनेन मन्त्रस्यान्वयेऽवहननानाङ्गत्वं सिध्यति, यदि चाह्वयतिना सम्बन्धः तदाऽऽह्वानाङ्गत्वं सिध्यति। तत्रावहननमाचरन् अध्वर्युर्मन्त्रमिमुच्चारयेत् इत्यर्थं उचितः। आह्वानाङ्गत्वे 'अवघ्नन्' इत्यस्यावहननकाले इति लक्षणा स्यात्। तथा सति विधौ लक्षणाऽङ्गीकर्तव्या भवेत्। मन्त्र ब्राह्मणयोर्यत्र विरोधस्तत्रान्यतरस्य गौणत्वे आश्रयणीये न्यायः प्रदर्शितः पूर्वाधिकरणे विधौ लक्षणाश्रयणं न युक्तमिति। तन्न्यायेन गौण्या वृत्त्या हविष्कृदेहीति मन्त्रोऽवघातशेषः। अर्थात् मन्त्रमिममुच्चारयन्नवघातं कुर्यादिति। मन्त्रे एहीति प्रयुक्तत्वात्तस्यानुवाद आह्वयतिशब्दः, नाह्वानविधायकः। न चैवं विधिवाक्ये लक्षणादोषस्तुल्य इति वाच्यम्, आह्वयतेरर्थप्राप्तोच्चारणमात्रार्थकस्य विधेयसमर्पकत्वाभावात् न तत्र दोषावहा। यदि मन्त्रस्याह्वानसम्बन्धः क्रियते तर्हि अवघातकालस्यापि विधेयत्वात् 'अवघ्नन्' इति पदे लक्षणा दोषावहैव। 'अवघ्नन्' इत्यवघातं निर्वर्तयिष्यन् 'हविष्कृदेहि' इति मन्त्रमुच्चर्यावहन्तीत्यर्थः पर्यवस्यतीति पक्षे प्राप्ते,

सिद्धान्तः—'व्रीहीनवहन्ति' 'अवरक्षो दिवस्सपत्नं वध्यासमित्यवहन्ति' इति विधिभ्यामवहननतत्साधनीभूतमन्त्रयोश्च प्राप्तत्वेन 'हविष्कृदेही'ति वाक्येनावघातोद्देशेन मन्त्रविधानं न सङ्गतम्। यद्यनेन मन्त्रो विधीयेत तर्हि मन्त्रयोर्विकल्पोऽङ्गीकर्तव्यः। स चाष्टदोषदुष्टो भवेत्। हविष्कृद्वाक्येन 'त्रिरवघ्नन्' इति त्रित्वमपि विधेयम् अवधाते मन्त्रोऽपि विधेयः। तथासति वाक्यभेदस्स्यात् हविष्कृदेहीत्यस्याह्वयतिनाऽन्वयेऽप्याह्वानमनूद्य त्रित्वमवघातकालश्च विधातव्याविति वाक्यभेद इति न वक्तुं शक्यम्, नात्राऽवधातकालो विधातव्यः, अवहनन काल एव सहायाह्वानस्यापेक्षितस्य प्राप्तत्वेनार्थतस्सिद्धत्वात्। अतोऽत्रा

वघ्नन्नित्यनुवादमात्रम् । 'अवघ्नन्' इति पदं कर्तरि शत्रन्तम् । तेना वघातकालोपलक्षित आह्वाता अवघ्नन्निति पदेनोच्यत इत्यायाति । ततश्चावहननकालोपलक्षितोऽध्वर्युः त्रिरुच्चारितेन हविष्कृन्मन्त्रेणाह्वयतीत्यर्थः पर्यवस्यति । अत्राह्वानमवश्यं विधेयम् । तथा च त्रिरभ्यासकमन्त्रकरणकावघातविशिष्टाह्वानं विधीयत इत्युक्ते प्राप्ताप्राप्तविवेकेन त्रित्वे विधिः पर्यवस्यति । एवञ्च मुख्याह्वानाङ्गमेव मन्त्रो न गौणावघाताङ्गम् । तस्मान्मन्त्रस्याह्वानेन सम्बन्धे नाष्टदोषदुष्टो विकल्पः; न चापि वाक्यभेद इति नावघाताङ्गतेति ॥

## ४. उत्थानविसर्जनाधिकरणम्

ज्योतिष्टोमे 'उत्तिष्ठन्नाहाग्नीदग्नीन् विहर' इति, एवं 'व्रतं कृणुतेति वाचं विसृजति' इति च श्रूयते । 'अग्नीदग्नीन् विहर' 'व्रतं कृणुत' इति द्वौ मन्त्रौ । अनयोर्विनियोजकं वाक्यद्वयमिदमस्याधिकरणस्य विषयः । किमनयोर्मन्त्रयोरुत्थाने वाग्विसर्गे चैन्द्रीन्यायेन गौण्या वृत्या विनियोगः उत पूर्वाधिकरणन्यायेन मुख्य एवार्थे अग्निविहरणे सम्प्रैषे च विनियोग इति संशयः । पूर्वपक्षिण ऐन्द्रीन्यायोऽवलम्बः, सिद्धान्तिनश्च पूर्वाधिकरणन्यायोऽवलम्बः । तत्रैन्द्यधिकरणे मन्त्रस्य वचनाद्यथा गौणेऽर्थे विनियोगः प्रदर्शितः तथा गौणेऽर्थे विनियोगः । ऐन्द्रीमन्त्रस्य गार्हपत्यार्थप्रकाशनसामर्थ्याभावेऽपि वचनाद्यथा गार्हपत्योपस्थानाङ्गत्वं व्यवस्थापितं तथा 'अग्नीदग्नीन् विहर' इति मन्त्रस्योत्थानार्थप्रकाशनसामर्थ्याभावेऽपि वचनादुत्थाने विनियोगः । अग्निविहरणमुत्थानं विना न सम्भवतीत्युत्थानं निर्वर्तयिष्यन् अग्नीदग्नीन्विहर इत्याहेति वाक्यार्थः । एवं व्रतशब्दो भक्षे वर्तते । हिंसार्थककृविधातोः 'कृणुत' शब्दं निष्पाद्य भक्षणस्य हिंसात्वमाश्रित्य वाग्विसर्गावसरे 'व्रतं कृणुत; इति मन्त्रो विधीयत इति पक्षे प्राप्ते,

सिद्धान्तः—'हविष्कृदेहि' इति मन्त्रस्य मुख्ये आह्वानार्थे यथा विनियोगस्तथा मन्त्रगतसामर्थ्यानुरोधेन मुख्येऽग्निविहरणसम्प्रैषे व्रतकरणसम्प्रैषे च विनियोगः । उत्थानवाग्विसर्जनसमभिव्याहारमात्रेण मन्त्रगतलिङ्गस्य बाधो न युक्तः; वाक्याल्लिङ्गस्य बलीयस्त्वात् ।

ऐन्द्रीन्याये तु लिङ्गाच्छ्रुतिर्बलीयसीति श्रुत्या लिङ्गं बाध्यते। उत्थान-वाग्विसर्जनसमभिव्याहारस्तु कालद्वारकः। ततश्च उत्थानकालोपलक्षितोऽध्वर्युरग्नीदग्नीन् विहरेत्याह, व्रतं कृणुतेति सम्प्रैषकाले वाचं विसृजेत् इति वाक्यार्थस्सम्पद्यते। तस्मात्पूर्ववन्मुख्य एवार्थे मन्त्रयोर्विनियोगो न गौणेऽर्थे इति सिध्यति॥

## ५. सूक्तवाकाधिकरणम्

निगदशब्देन 'इदं द्यावापृथिवी भद्रमभूत्' इत्यारभ्य 'नमो देवेभ्यः' इत्यन्तो मन्त्रभागोऽभिधीयते। दर्शपूर्णमासयोरस्य मन्त्रभागस्य विनियोजकं वाक्यम्—'सूक्तवाकेन प्रस्तरं प्रहरति' इति। प्रथमो लूनो दर्भमुष्टिः प्रस्तरपदवाच्यः। वेद्यामास्तीर्णानां दर्भाणामुपरि पृथक्परिज्ञानाय विधृतिसंज्ञकौ द्वौ दर्भौ तिर्यङ्निक्षिप्य तदुपरि प्रस्तरमास्तीर्य 'प्रस्तरे हवींष्यासादयति' इति विध्यनुसारेण हविषां पुरोडाशादीनामासादनं क्रियते। एवं विनियुक्तस्य प्रस्तरस्य सूक्तवाकमन्त्रमुच्चार्याग्नौ प्रहरणं प्रक्षेपः कर्तव्य इति विषयवाक्यस्यार्थः। अत्र सन्देहः—सूक्तवाकशब्दः काललक्षणार्थः, अर्थात् सूक्तवाकपठनकाले प्रस्तरप्रहरणं कर्तव्यमिति ? उत प्रस्तरप्रहरणेऽङ्गतया सूक्तवाको विनियुज्यते, अर्थात् सूक्तवाकमन्त्रमुच्चार्य प्रस्तरं प्रहरेदिति। तत्र पूर्वाधिकरणे यथोत्थान वाग्विसर्जनकाले मन्त्रयोर्विनियोगस्साधितस्तथैव काललक्षणार्थोऽयं सूक्तवाकः सूक्तवाके इष्टानामग्न्यादिदेवतानां 'अग्निरिदं हविरजुषत' 'अग्नीषोमाविदं हविरजुषेताम्' इति कृताकृतप्रत्यवेक्षणाय सङ्कीर्तन फलकतया नामानि निर्दिष्टानि। तेन मन्त्रोऽयमङ्गतया सम्बद्ध इति मन्त्रगतसामर्थ्येनावगम्यते। वाक्यशेषादप्ययमर्थो द्रढीकृतः—'अग्निरिदं हविरजुषतेत्याह—या अयाक्ष्म देवतास्ता अरीरधामेति वा वैतदाह' इति। या देवता इष्टास्ताः पुनः कीर्तनेन संसाधिता इति वाक्यशेषार्थः। न च 'सूक्तवाकेन' इति तृतीयया तस्य प्रस्तरप्रहरणाङ्गत्वे गम्यमाने कथं काललक्षणार्थत्वमिति वाच्यम्, 'इत्थम्भूतलक्षणे' इति तृतीयाविधानेन प्रक्रियमाणावस्थाज्ञापकस्सूक्तवाक इति तृतीयाया उपपत्तेः। ननु प्रहरणमिदं होमरूपमवगम्यते प्रस्तरद्रव्यस्याग्न्यादिदेवतासम्बन्धस्य

सत्वात् होमरूपत्वे तदङ्गत्व सूक्तवाकस्येति चेन्न; 'अजुषत' इति भूतकालनिर्देशेन 'इदं हविः' इति पुरोडाशादिद्रव्यमेवाभिधत्ते। तेनैव-देवतासम्बन्धो न प्रस्तरेणेति प्रस्तरप्रहरणस्य होमत्वासम्भवात्। अतः कालार्थ एव सूक्तवाकसम्बन्ध इति पक्षे प्राप्ते;

सिद्धान्तः—'सूक्तवाकेन' इति करणत्ववाचिन्या तृतीयया सूक्तवाकस्याङ्गतैवोच्यते। नेयमित्थम्भूतलक्षणे तृतीया, कारकविभक्तित्वात्। तेन प्रहरणाङ्गत्वमेव सूक्तवाकस्येति सिध्यति। यदुक्तमिष्टानां देवतानां कृताकृतप्रत्यवेक्षणाय सूक्तवाकस्य सङ्कीर्तनमिति तत्रोच्यते—तादृशसङ्कीर्तनेन सह सूक्तवाकः प्रहरणाङ्गत्वमपि भजते, तृतीयाश्रुतिसंयोगात्। तृतीयाश्रुत्याऽवगतस्य प्रहरणाङ्गत्वस्येष्टदेवतासङ्कीर्तनं न बाधकम्। प्रत्युत तादृशदेवतासङ्कीर्तनेन प्रहरणस्य यागरूपत्वं सिध्यति, प्रस्तरो द्रव्यम्, अग्न्यादयो देवताः; 'आयुराशास्ते' इत्यायुरादिफलञ्चेति तेषां सम्बन्धो यागमन्तरेण नोपपद्यते। किञ्च 'यदनेन हविषाशास्ते' इत्यत्र हविषापदेन प्रस्तर एव निर्दिश्यते। एवञ्च प्रस्तरद्रव्यकोऽग्न्यादिदेवताक आयुरादिफलको यागोऽनुमीयते प्रहरतिपदेन। अत्र प्रहरतेः केवलप्रक्षेपात्मकत्वे देवतासम्बन्धोऽदृष्टार्थस्स्यात्। यदुक्तम् 'अजुषत' इति भूतकालेन पुरोडाशादिद्रव्यमेवाभिधीयते, न प्रस्तरद्रव्यमिति, तन्न, प्रस्तरेण सह तदंशस्यापि प्रहाणार्थत्वस्वीकारे बाधकाभावात्। ननु यथा स्विष्टकृद्यागस्याकीर्णकरतानिवर्तकत्वेन प्रतिपत्तिकर्मत्वमाश्रीयते तथा प्रस्तरप्रहरणस्यापि प्रतिपत्तित्वमाश्रीयतामिति चेदुच्यते—स्विष्टकृद्धोम उभयार्थस्स्वीकृतः-यागांशेऽदृष्टार्थः प्रक्षेपांशे च दृष्टार्थ इति, तद्वदेव प्रस्तरप्रहरणमप्युभयार्थम्, न केवलप्रतिपत्त्यर्थम्। तस्मात् पूर्वकृतयागसम्बन्धित्वोपलक्षिताग्न्यादितदितरदेवताकप्रस्तरद्रव्यकप्रहरणात्मक होमाङ्गत्वं सकलस्य सूक्तवाकनिगदस्येति सिद्धम्॥

## ६. सूक्तवाकस्य विभज्य विनियोगाधिकरणम्

पूर्वं सूक्तवाकस्य प्रहरणाङ्गत्वं साधितम्। तत्र दर्शपूर्णमाससम्बन्धिन्योऽङ्गप्रधानदेवतास्सङ्कीर्णा निर्दिष्टा वर्तन्ते। किं कृत्स्नस्सूक्तवाकः पर्वद्वये प्रयोक्तव्यः? उत तत्तत्पर्वणि इष्टदेवतानुसारेण

विभज्य प्रयोक्तव्य इति संशये, सूक्तवाकशब्दस्याध्येतॄणां कृत्स्नेऽनुवाके प्रसिद्धत्वात्, विभागे च सूक्तवाकशब्दस्य लक्षणा स्यात्। अतस्समग्रस्सूक्तवाक एकैकस्मिन् पर्वणि प्रयोक्तव्यः। न च प्रहरणस्य स्वाङ्गमन्त्रद्वारा इष्टदेवतास्मरणरूपप्रयोजनवत्वात् दर्शदेवतानां पौर्णमास्यां पौर्णमासीदेवतानां दर्शे चोपयोगाभावात् न समग्रस्य प्रयोग इति वाच्यम्, मन्त्रगतलिङ्गमनादृत्य वचनबलाद्दृष्टार्थालाभेऽप्यदृष्टार्थतया प्रयोगसम्भवादिति पक्षे प्राप्ते,

सिद्धान्तः—इष्टदेवतानुसारेण विभज्यैव प्रयोगो न कृत्स्नस्य। प्रस्तरप्रहरणेन देवतास्मरणं दृष्टं प्रयोजनं लभ्यते। दृष्टे लभ्यमानेऽदृष्टार्थत्वस्वीकारो न युक्तः। यदुक्तं लिङ्गमनादृत्य वचनबलाददृष्टार्थतया कृत्स्नप्रयोग इति, नैतद्युक्तम्; सूक्तवाकशब्दस्य सुष्ठूक्तं वक्तीति व्युत्पत्या इष्टदेवताप्रकाशकत्वमर्थः। यत्र यावत्यो देवताः इष्टास्तावतीनां सङ्कीर्तनेन सूक्तवाकत्वं तस्य प्रसिध्यति, अनिष्टदेवतानामपि कीर्तने दुरुक्तवाकत्वं स्यात्। कृत्स्नेऽनुवाकेऽध्येतॄणां प्रसिद्धिरध्ययनकाले सङ्गच्छते, कर्मकाले तु सा नादर्तव्या। तस्माद्यथादेवतं पर्वद्वये विभज्यैव सूक्तवाकः प्रयोक्तव्य इति ॥

## ७. लिङ्गक्रमसमाख्याधिकरणम्

ब्राह्मणभागे क्रमेण 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' इत्यैन्द्राग्नवैश्वानरादय इष्टयो विहिताः। संहितायां काम्येष्टियाज्यापुरोनुवाक्याकाण्डे अनेनैव क्रमेण 'उभावामिन्द्राग्नी' इत्येवं याज्यापुरोवाक्यामन्त्रा आम्नाताः। किमेते मन्त्राः स्वस्वसामर्थ्यानुसारेण क्रमसमाख्येऽनादृत्य सर्वत्र विनियोक्तव्याः? उत क्रमसमाख्यानुसारेण लिङ्गेन काम्येष्टिष्वेव मन्त्रा विनियोक्तव्याः? इति संशये, अनुष्ठेयार्थप्रकाशने मन्त्राणां सामर्थ्यम्। सामर्थ्यञ्च तत्तदनुष्ठेयार्थं प्रकाशयत् अनुष्ठेये कर्मणि मन्त्रं विनियुङ्क्ते। नात्र परापेक्षा वर्तते। तत्र काम्येष्टिष्वेवैषां विनियोगो नान्यत्रेति नियमने कृते नियामकेनैव विनियोगो भवतु किं समार्थ्येन? तदा सामर्थ्यमप्रयोजकं स्यात्। काम्येष्टिषु समवेताया एव देवतायाः प्रकाशने उभावामिन्द्राग्नी इति मन्त्रस्य सामर्थ्यम् नान्यकर्मसमवेतेन्द्रा-

ग्न्योः प्रकाशने इत्यत्र क्रमसमाख्ययोर्नियामकत्वं वक्तव्यम् । क्रमसमाख्ये च लिङ्गापेक्षया दुर्बले । दुर्बलाभ्यां प्रबलगतसामर्थ्यस्य सङ्कोचः कर्तुं न शक्यते । तस्मात्क्रमसमाख्ये उपेक्ष्य सर्वत्र लिङ्गान्मन्त्राणां विनियोग इति पक्षे प्राप्ते,

सिद्धान्तः--मन्त्रगतार्थावबोधनमात्रेण लिङ्गं कृतार्थं भवति । तस्येदं कर्तव्यमिति बोधने सामार्थ्यं नास्ति । श्रुतिकल्पनाद्वारैव लिङ्गस्य विनियोजकत्वम्, लिङ्गात् कल्प्यमानायाः श्रुतेराकारः–'अनेन मन्त्रेणेन्द्राग्न्यादिप्रकाशनं कुर्यात्' इत्येवं स्यात् । तावन्मात्रेण मन्त्रस्य विनियोगो न सिध्यति । किन्त्वनेन मन्त्रेण क्रत्वपूर्वसाधनेन्द्राग्न्यादिप्रकाशनं कुर्यादिति कल्पनीयम् । अत्रापूर्वांशस्याश्रुतत्वेन लिङ्गं प्रकरणं क्रमं समाख्यां वा अपेक्षते । अतएव लिङ्गं सामान्यसम्बन्धबोधकप्रमाणान्तरसापेक्षं भवति । तत्र प्रकरणं क्रमं समाख्यां वोपजीव्य लिङ्गम् ऐन्द्राग्न्यादियागजन्यापूर्वसाधनीभूतेन्द्राग्न्यादिप्रकाशनद्वारा श्रुतिं परिकल्प्य तत्तद्यागीययाज्यात्वेन मन्त्रं विनियोक्तुं समर्थं भवतीति प्रथमपठितस्य मन्त्रस्य प्रथमपठितयागाङ्गत्वमिति रीत्या मन्त्राणां सङ्गतिस्सिध्यति । तस्माद्दुर्बलयोरपि क्रमसमाख्ययोरुपजीव्यत्वेन ताभ्यां मन्त्रगतसामर्थ्यसङ्कोचः क्रियत एवेति क्रमसमाख्यानुसारेण लिङ्गं विनियोजकं भवतीति ॥

## ८. आग्नेय्यधिकरणम्

सामान्यसम्बन्धबोधकप्रमाणान्तरसापेक्षं लिङ्गं निरूप्य प्रसङ्गात् श्रुतेरपि तदपेक्षा भवति न वेत्यस्मिन्नधिकरणे विचार्यते । ज्योतिष्टोमे 'आग्नेय्याऽऽग्नीध्रमुपतिष्ठते' इति श्रूयते । अग्निर्देवताऽस्या ऋच इत्याग्नेयी । तया ऋचा आग्नीध्रम् आग्नीध्रमण्डपम् उपतिष्ठते मन्त्राभिधानपूर्वकं समीपं गच्छेदिति वाक्यस्यार्थः । तत्र संशयः–किं यया कयाचन प्रकृतयाऽप्रकृतया वाऽऽग्नेय्या ऋचाऽऽग्नीध्रोपस्थानं कर्तव्यम् ? उत प्रकृतयैवेति । तत्र 'आग्नेय्या' इति पदं सामान्येनाग्निदेवताप्रकाशिकामृचमभिधत्ते । प्रकृता वा भवत्वप्रकृता वा, सा आग्नेय्येव । आग्नेयीं ऋचम् आग्नीध्रोपस्थानाङ्गतया विनियुङ्क्ते विधिः । तत्राविशेषेणैव विधिः ऋचं विनियुङ्क्ते । उपकारकमङ्गं भवति । उपकारश्च देवताप्र-

काशनरूपः। स च प्रकृतयापि भवति अप्रकृतयापि। तत्र प्रकरणस्य सन्निधेर्वा नापेक्षा। ततश्च मन्त्रमात्रस्याङ्गत्वान्न प्रकृतनियमः। यद्यपि सन्निधेर्नियामकत्वं भवितुमर्हति, तथापि उपस्थानविधौ न कस्याश्चिदाग्नेय्यास्सन्निधिरस्ति। तस्मात्प्रकृतयाऽप्रकृतयावोपस्थानमिति पक्षे प्राप्ते,

सिद्धान्तः—'आग्नेय्याऽऽग्नीध्रमुपतिष्ठते' इति ज्योतिष्टोमाधिकारे समाम्नातम्। तत्र 'आग्नेय्या' इति तृतीयाश्रुतिराग्नेयीमन्त्रस्याङ्गत्वमवगमयति। तच्चाङ्गत्वमाग्नीध्रोपस्थाननिरूपितम्। आग्नेयीमन्त्रश्च द्रव्यम्। द्रव्यञ्च विना व्यापारसम्बन्धेनोपकारकं न भवति। कोऽसौ व्यापारः यमाश्रित्य मन्त्रोऽङ्गं भवेत्। मन्त्रस्योच्चारणव्यापारादृते नान्यः कश्चन व्यापार आश्रयो भवितुमर्हति। उपस्थानञ्चाभिधानरूपम्। यदीदमाग्नीध्रोपस्थानं ज्योतिष्टोमव्यापाररूपं स्यात् तदा तत्साधनीभूतस्य मन्त्रस्याश्रयलाभेनोपकारकत्वं सिध्येत्। ज्योतिष्टोमव्यापारात्मकत्वमुपस्थानस्य शास्त्रगम्यम्। ज्योतिष्टोमप्रकरणपाठादनेनैव वाक्येन ज्योतिष्टोमव्यापारात्मकता उपस्थानस्य गम्यते। एवञ्च 'योऽयमाग्नेयीमन्त्रस्य क्रतुव्यापारः स आग्नीध्रोपस्थानात्मकः' इति सिध्यति। तत्र प्रकृताग्नेय्या ग्रहणे लाघवं भवति, अप्रकृताया ग्रहणे तस्या ज्योतिष्टोमव्यापारत्वं न लभ्यते, अश्रुतत्वात् क्रतुव्यापारत्वस्यापि विधाने गौरवं वाक्यभेदश्च। अतः प्रकृताया एव ग्रहणम्।

किञ्च 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायेनाप्रकृताया आग्नेय्याः फलवता सम्बन्धाभावादङ्गत्वं न स्यात् प्रकृताया ग्रहणे आग्नीध्रोपस्थानस्य फलवता ज्योतिष्टोमेन सम्बन्धस्य सत्वात् तदङ्गत्वेनाग्नेय्या अपि फलवत्वात् सम्बन्धसिद्धिरित्याग्नेय्या अङ्गत्वं पर्यवस्यति। तस्मात् क्लृप्तक्रतुसम्बन्धायाः प्रकृताया एवाग्नेय्या ग्रहणमिति॥

( भक्षपेटिका )

## ९. भक्षाधिकरणम्

ज्योतिष्टोमे सोमरसहोमानन्तरं सोमरसभक्षणं विहितम्—'सदसि सोमं भक्षयन्ति' इति। तत्रायं भक्षमन्त्रः—भक्षेहि मा विश दीर्घायुत्वाय

शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय एहि वसो पुरो वसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सध्यासम्; नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम्; हिन्व मे गात्रा हरिवो गणान्मे मा वितीतृषः शिवो मे सप्तर्षीनुपतिष्ठस्व मा मेऽवाङ्नाभिमतिगाः; मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु वसुमद्गणस्य सोमदेवते मतिविदः प्रातस्सवनस्य गायत्रच्छन्दसोऽग्निहुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इति। समग्रोऽयं भागो भक्षानुवाकशब्देनोच्यते। अत्र सोमरसग्रहणतदवेक्षणसम्यग्जरणतृप्त्यादयः पदार्था अपि तत्तन्मन्त्रभागेन प्रकाश्यन्ते। 'भक्षेहि' इत्यारभ्य 'भक्षयामि' इत्यन्त एको मन्त्रोऽवगम्यते उपक्रमोपसंहाराभ्याम्। तत्र सन्देहः—किं सर्वोऽयं भक्षानुवाकमन्त्रो भक्षणे विनियोक्तव्यः? उत यथासामार्थ्यं विभज्य सूक्तवाकमन्त्रवत् तत्तत्कार्ये विनियोक्तव्य इति। समग्रस्यानुवाकस्य भक्षमन्त्र इति समाख्ययोपक्रमोपसंहाराभ्यामेकवाक्यत्वावगमेन वाक्यभेदमाश्रित्य विनियोगो न न्याय्यः। ग्रहणावेक्षणादिकञ्च भक्षावसरेऽर्थतः प्राप्तं प्रकाश्यते न विहितम्। अविहितत्वाद् ग्रहणावेक्षणादिस्वरूप एव मन्त्राणां शेषता स्यात् नापूर्वसाधनतापन्ने। अतस्समग्रस्य भक्षमन्त्रस्य भक्षे विनियोग इति प्राप्ते,

सिद्धान्तः—'सदसि सोमं भक्षयन्ति' इति विधिर्भक्षं विदधानः ग्रहणावेक्षणादिकमपि विदधात्येव। विना ग्रहणावेक्षणादिना भक्षस्यासम्भवात्। एवं ग्रहणावेक्षणादीनां विधिविषयत्वे सिद्धेऽपूर्वसाधने विनियोगसम्भवेन विभज्य विनियोगः कर्तव्यो भवति। जरणपर्यन्तं भक्षणमिति लोकप्रसिद्धत्वेन जरणपर्यन्तस्यैवात्र भक्षयतिना विहितत्वात् जरणप्रकाशनमन्त्रस्य तत्र विनियोगः। तदेवं मुख्यलिङ्गानुसारेण विभज्य विनियोगे सम्भवति वाक्यसमाख्याभ्यां भक्षार्थता कृत्स्नस्य मन्त्रस्येति न युक्तम्। वस्तुतस्समाख्याया न विरोधः—ग्रहणादिद्वारेण समाख्याया उपपत्तेः। तस्माद्विभज्य विनियोग इति॥

## १०. गुणाभिधानाधिकरणम्

अस्मिन्नेव भक्षमन्त्रे 'मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु' इत्यन्तः किं तृप्तौ विनियोक्तव्यः? उत 'भक्षयामि' इत्येकवाक्य-

तया भक्षणे ? इति संशये यथा ग्रहणेऽवेक्षणे च लिङ्गाद्विनियोगः तथाऽत्रापि तृप्तिलिङ्गात्तृप्तौ विनियोग इति पक्षे प्राप्ते,

सिद्धान्तः—तृप्तिर्भक्षणात् न पृथग्यत्नसाध्या, भक्षणे कृते स्वयमेव तृप्तिरुत्पद्यते। ननु 'तृप्यतु' इत्यस्य 'भक्षयामि' इत्यनेन कथमेकवाक्यता भिन्नार्थप्रतिपादकत्वादिति चेदित्थम्—'वाक्तृप्यतु इत्येवमर्थं भक्षयामि' इतीतिकरणाध्याहारेणैकवाक्यत्वोपपत्तेः। तस्मात् तृप्तौ न विनियोग इति॥

## ११. इन्द्रपीताधिकरणम्

ज्योतिष्टोमे सोमरसस्य प्रदानानि—होमरूपाणि कानि चनैन्द्राणि भवन्ति; अपराण्यनैन्द्राणि भवन्ति। शुक्रग्रह-मन्थिग्रह-सवनमुखीयचमसादीन्यैन्द्राणि-इन्द्रसम्बन्धीनि, मैत्रावरुणाश्विनादित्यग्रहोक्थ्यादीन्यनैन्द्राणि-इन्द्रसम्बन्धरहितानि। होमानन्तरं शेषभक्षणावसरे मन्त्रः पठनीयः। तस्मिन् भक्षणमन्त्रे 'इन्द्रपीतस्य' इति पठितम्। तत्र सन्देहः—किम् ऐन्द्रेष्वेवायं मन्त्रः, अनैन्द्रेष्वमन्त्रकं भक्षणम्? उतानैन्द्रेषूहेन मन्त्रः पठनीयः? अथ वा यथाम्नानमेव सर्वत्र मन्त्रः पठनीयः? इति। तत्र 'इन्द्रपीतस्य' इत्यस्येन्द्रेण पीतस्सोम इति समासे स्वीकृतेऽनैन्द्रेष्विन्द्रपीतत्वाभावान्न मन्त्रः प्रयोक्तव्य इत्यायाति। इन्द्रेण पीतस्सोमो यस्मिन् सवने इति समासे स्वीकृतेऽनैन्द्रविषयत्वमपि भक्षणस्यायाति, किन्तु बहुव्रीह्याश्रयणे बहुव्रीहेरन्यपदार्थपरत्वेन गौरवाल्लाघवात्तृतीयासमास एवोचितः। अतोऽनैन्द्रप्रदानेष्वमन्त्रकं भक्षणमिति प्रथमः पक्षः। नन्वनैन्द्रप्रदानेषु मित्रावरुणादीनां देवतात्वादमन्त्रकभक्षणापेक्षया 'मित्रावरुणपीतस्य' इत्यूह्यतामिति द्वितीयः पक्षः। एवं प्राप्ते,

सिद्धान्तः—प्रकृतौ ज्योतिष्टोमे ऐन्द्रानैन्द्रप्रदानानां मिथः प्रकृतिविकृतित्वासम्भवात् प्रकृतिविकृतिभावापन्नेष्वेवोहप्रसङ्गान्नात्रोहशशास्त्रसम्मत इत्यधिकरणेऽपर्यवसिते[1] कृत्वा चिन्तयोहविचारः प्रसङ्गात् चिन्त्यते।

---

१. जैमिनेरियं शैली—यत् पूर्वपक्ष्यभिमतस्यौचित्यानौचित्यविचारणमिति। पूर्वपक्षिणा कथितमिति नात्र सिद्धान्तिना हेयदृष्टिः कर्तव्या, किन्तु तत्रौचित्यानौचित्यविचारः कर्तव्यः। एवं कृते सिद्धान्तिनः पक्षस्सुदृढो भवेत्। तदर्थं कृत्वाचिन्तया विचारः क्रियते। कृत्वाचिन्तैव 'अन्तरागर्भिणी' न्यायः कथ्यते। अन्तरागर्भिणीन्यायेन ये विचाराः क्रियन्ते तेषामप्यधिकरणरूपत्वेन व्यवहारः।

( अन्तरार्गभिणीन्यायाः )

## १२. अभ्युन्नीताधिकरणम्

इन्द्रपीताधिकरणद्वितीयपक्षस्यैव प्रयोजनरूपेण विचारान्तरं प्रस्तूयते। अत्रायं विषयसन्दर्भः—ज्योतिष्टोमे सन्ति दश चमसाः। होतृ ब्रह्मोद्गातृयजमानानां चत्वारश्चमसाः। इमे मध्यतः कारिणां चमसा इति संज्ञया व्यवह्रियन्ते। मैत्रावरुण-ब्राह्मणाच्छंसि-पोतृ-नेष्टृ-च्छावाकाग्नीध्राणां चमसाः षट्। इमे होत्रकाणां चमसा इत्याख्यायन्ते। एतेषां सवनभेदेन प्रचारः—होमभक्षणादिर्भवति। तत्र प्रातस्सवने अच्छावाकचमसं विहाय नव चमसाः प्रथममिन्द्राय हूयन्ते, माध्यन्दिने तृतीयसवने च दश दश हूयन्ते। अर्थात् चमसस्थसोमस्य होमः; न चमसानां होमः। तत्र होत्रकाणां चमसस्थसोमरसः सशेषः सकृत्सकृदिन्द्राय हूयते, होमानन्तरं भक्षणमकृत्वा द्रोणकलशस्थस्सोमरसः किञ्चिद् गृह्यते। इदमभ्युन्नयनं कथ्यते। एवमभ्युन्नीय मित्रावरुणादिदेवताभ्यो हुत्वाऽहुतशेषस्सोमो भक्ष्यते। भक्षणावसरे भक्षानुवाके निर्दिष्टस्य 'इन्द्रपीतस्य' इति पदस्य स्थाने 'मित्रावरुणपीतस्य' इत्येवं मित्रावरुणादयः शब्दाः प्रक्षेप्तव्याः? उत 'इन्द्रमित्रावरुणपीतस्य' इति इन्द्रशब्दोऽपि प्रक्षेप्तव्यः? इति संशयः। संशयस्येदं बीजम्—प्रथमं चमसस्थस्सोमरसः किञ्चिदवशेष्येन्द्राय हुतः, तत्रैव चमसे सशेषे द्रोणकलशस्थसोमरसेऽभ्युन्नीते उभयो रसयोस्संसृष्टत्वादिन्द्रसम्बन्धोऽपनीतः। सर्वोऽपि रसो मित्रावरुणसम्बन्धी जात इति एका कोटिः, रसस्य संसृष्टत्वेऽपि इन्द्राय दत्तस्य रसस्याभ्युन्नीतेन रसेन संसृष्टद्रव्ये इन्द्रसम्बन्धस्य विद्यमानत्वादिति द्वितीया कोटिः। तत्र द्रोणकलशाद् गृहीतो रसो मित्रावरुणार्थः। यद्यपि मित्रावरुणार्थत्वेन ग्रहणावसरे सङ्कल्पो नास्ति तथापि याज्यापठनावसरे मित्रावरुणार्थत्वं प्रक्षिप्यमाणस्य द्रव्यस्य प्रतीयत इतीन्द्रदेवतापनयः। अतो भक्षणावसरे 'इन्द्रपीतस्य' स्थाने 'मित्रावरुणपीतस्य' इत्येव पदप्रक्षेप इति पक्षे प्राप्ते,

सिद्धान्तः—द्रोणकलशादभ्युन्नीतस्य रसस्य करिष्यमाणयागार्थत्वं तावदसन्दिग्धम्। सशेषेषु द्रोणकलशादुन्नयनं वचनात् क्रियते। उन्नयना-

वसरे चमसस्थे शेषे इन्द्रसम्बन्धोऽस्त्येव । स च देवतान्तरार्थं इत्यभ्युन्नयनकाले न निश्चितम् । वचनबलादभ्युन्नयनं कृतम् । यथागृहीतस्यैव होमःकृतः । होमावसरेऽपीन्द्रसम्बन्धो नापगतः । सोमरसयोस्संसृष्टत्वात्पूर्वशेषस्याभ्युन्नीतस्य च भेदपरिज्ञानं नास्माकमुदेति, किन्तु नीरक्षीरविवेकन्यायेन मित्रावरुणादिदेवतानां तादृशसामर्थ्यसम्भवान्न दोषः । तस्मात्पूर्वशेषे पूर्वदेवतापनायकहेतोरभावात् भक्षावसरे इन्द्रमित्रावरुणपीतस्येत्यूह इति ॥

## १३. पात्नीवताधिकरणम्

ज्योतिष्टोमे 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इति द्विदैवत्यान् ग्रहान् प्रातस्सवने गृहीत्वा क्रमेण तेषु हुतेषु तत्तच्छेषाः आदित्यस्थाल्यामवनीयन्ते । तृतीयसवने आदित्यग्रहग्रहणं सशेषं तद्धोमश्च भवतः । शेषश्चाग्रयणस्थालीमागच्छति । तस्मादाग्रयणात्पात्नीवतग्रहो गृह्यते 'आग्रयणात्पात्नीवतं गृह्णाति' इति । तद्धोमानन्तरं तच्छेषो भक्ष्यते । भक्षणावसरे 'वाय्विन्द्रवायुमित्रावरुणाश्व्यादित्यपत्नीवत्पीतस्य' इत्यूहः किं कर्तव्यः ? उत पत्नीवत्पीतस्येत्येवोहः ? इति सन्देहे, पुनरभ्युन्नीतस्थले पूर्वदेवतापनयाभावो यथा तथा प्रकृते पूर्वदेवतापनयाभावे वाय्विन्द्रवाय्वादीनामुपलक्षणम् । ततश्च 'वाय्विन्द्रवायुमित्रावरुणाश्व्यादित्यपत्नीवत्पीतस्य' इति भक्षावसरे मन्त्र इति प्राप्ते,

सिद्धान्तः---पुनरभ्युन्नीतस्थले पूर्वदेवतापनयाभावेऽपि प्रकृते द्विदेवत्यादिसंसृष्टादाग्रयणात् 'पात्नीवतं गृह्णाति' इति गृह्यमाणस्य संसृष्टत्वरूपेणैव ग्रहणम् । तच्च पत्नीवद्देवतान्तरार्थम् । तेन पूर्वदेवतापनयः । पुनरभ्युन्नीतस्थले मित्रावरुणार्थत्वेन ग्रहणं नास्तीति पूर्वदेवतासम्बन्धानपायः । तस्मात्संसृष्टस्य पत्नीवत्सम्बन्धात् पूर्वदेवतापनये सति पत्नीवत्पीतस्येत्येवोह इति ॥

## १४. त्वष्ट्रधिकरणम्

पात्नीवतहोममन्त्रे 'अग्ना ३ इ पत्नी वा ३ सजूर्देवेन त्वष्ट्रा सोमं पिब' इति त्वष्टुः पत्नीवता सहभावः श्रुतः । हे अग्ने पत्नीवन् त्वष्ट्रा

देवेन सजूः सह सोमं पिबेति मन्त्रार्थः। पात्नीवतग्रहहोमानन्तरं भक्षणावसरे त्वष्टाप्युपलक्षणीयो न वेति सन्देहे, मन्त्रेण त्वष्ट्रा सहपानं पत्नीवतोऽवगम्यते, पानञ्च देवतात्वमन्तरेण न सम्भवति। तस्मात् त्वष्टृपत्नीवत्पीतस्येत्यूह इति पक्षे प्राप्ते;

सिद्धान्तः—सहभावमात्रं त्वष्टुः, न पानकर्तृत्वम्। मन्त्रः पत्नीवतस्त्वष्ट्रा सहभावमेवावगमयति। यथा गर्दभ्या भारवहनावसरे सहभावमात्रं पुत्राणाम् तथेत्यर्थः। 'पात्नीवतं गृह्णाति' इति 'पात्नीवतम्' इति तद्धितान्तस्य पदस्य बाधस्स्यात्पत्नीवतः त्वष्टृसापेक्षत्वे। मन्त्रे त्वष्टुर्निदेशः प्रशंसायै नेतुं शक्यः। यजमानस्सेवकैस्सेव्यमानो भोजनाय गच्छतीत्यत्र सेवकानां भोजने नान्वयो यथा। अतः 'पत्नवत्पीतस्य' इत्येव मन्त्रपठनमिति॥

## १५. त्रिंशदधिकरणम्

पात्नीवतयागे 'एभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः। पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व' इति याज्यामन्त्रः। हे अग्ने त्रयस्त्रिशद्देवैरेभिःसरथमायाहि, तवाश्वा विविधरूपाः। अतः नानारथं वाऽऽयाहि, त्रयस्त्रिशद्देवान् अन्नमभिलक्ष्य प्रापय, तांश्च मादयस्व-तर्पयेति मन्त्रार्थः। अत्र पत्नीवतां त्रयस्त्रिशद्देवानां तृप्तिरवगतेति तेषां देवतात्वं प्रतीयते। अग्नेरपि देवतात्वमस्त्येव। तेन पत्नीवान् पत्नीवन्तश्च देवता अस्येति पात्नीवतशब्दस्य विग्रहे उभयेषामपि देवतात्वं निश्चितं भवति। ततश्च होमानन्तरं भक्षणावसरे 'पत्नीवत्पीतस्य' इति गन्त्रे पठ्यमानेऽग्निः त्रयस्त्रिशद्देवताश्च पत्नीवन्त इति ज्ञातव्या इति पक्षे प्राप्ते;

सिद्धान्तः—याज्यामन्त्रे त्रयस्त्रिंशद्देवानां कीर्तनं प्रशंसार्थम्। महानुभावोऽयमग्निः प्रशस्तः, येन यजमानद्वारा स्वस्मै त्यक्तेन हविषा त्रयस्त्रिंशद्देवानपि तर्पयति इति प्रशंसार्थं कीर्तनमुन्नेयम्। तद्धितान्तेन पात्नीवतशब्देन या देवता प्रतिपाद्यते तस्या एव देवतात्वम्, मन्त्रवर्णापेक्षया तद्धितस्य प्राबल्यात्। यजमानोऽग्निमेव सङ्कल्प्य सोमरसं गृहीत्वा तस्मै त्यक्तवान्। अतोऽग्नेरेव देवतात्वम् अग्निस्तु स्वीयेन द्रव्येण

त्रयस्त्रिंशद्देवान् तर्पयति । त्रयस्त्रिंशद्देवानां तृप्तिः न यजमानसङ्कल्प विषया; अग्निसम्बद्धद्रव्यविषया सेति न तेषां देवतात्वम् । अतः पत्नीवान् देवता अस्येत्येकवचनेनैव विग्रहः । तस्मात् 'पत्नीवत्पीतस्य' इति मन्त्रे न त्रयस्त्रिंशद्देवानां ग्रहणं किन्त्वग्नेरेव ग्रहणमिति ॥

## १६. अनुवषट्काराधिकरणम्

प्रधानवषट्कारहोमानन्तरं सर्वत्रानुवषट्कारहोमः क्रियते सोमयागाभ्यासे । तत्र 'सोमस्याग्ने वीहीत्यनुयजति' इति विधिना मन्त्रो विनियुक्तः । मन्त्रे चाग्निर्देवता । शेषभक्षणावसरेऽनुवषट्कारदेवतायाः कीर्तनं कर्तव्यं न वेति सन्देहे 'अग्निपीतस्य' इत्यूहः कर्तव्य इति पक्षे प्राप्ते,

सिद्धान्तः—अनुवषट्कारः सोमयागाभ्यासरूपेण न क्रियते । 'सोमस्याग्ने वीहीत्यनुयजति' इति विधिः सोमाङ्गतयाऽनुयजनं विधत्ते । 'सोमेन यजेत, इति विहिते यागे ग्रहणावसरे प्राप्तानामिन्द्रवाय्वादीनां देवतात्वं निश्चितम् । 'सोमस्याग्ने वीहीत्यनुयजति' इति विहितमनुयजनं सोमयागस्य विकृतिभूतं यदि स्यात् तर्हि ऊहस्य प्रसक्तिस्स्यात् । प्रकृतौ चोहस्य प्रसक्त्यभावेन भक्षणावसरे 'अग्निपीतस्य' इति नोहः ॥

## १७. अनैन्द्राणाममन्त्रकभक्षाधिकरणम्

तदेवं कृत्वाचिन्तया पञ्चस्वधिकरणेषु द्वितीय ऊहसम्बन्धी पक्षश्चिन्तितः । तमिमं प्रथमपक्षी अमन्त्रकभक्षणवादी खण्डयन् प्रत्यवतिष्ठते। ऐन्द्राणामनैन्द्राणाञ्च प्रदानानां ज्यौतिष्टोमिकानां परस्परं प्रकृतिविकृतिभावासम्भवात् कथं यथादेवतमूहस्स्यात् ? तस्मादनैन्द्रप्रदानेषूहाभावात् 'इन्द्रपीतस्य' इत्यस्यासमवेतार्थप्रकाशकत्वेनामन्त्रकमेव भक्षणमिति प्रथम पक्षे स्थिते तत्रापि कृत्वाचिन्तया त्रिष्वधिकरणेषु विचारः क्रियते ॥

## १८. ऐन्द्राग्नभक्षे मन्त्राभावाधिकरणम्

ज्योतिष्टोम एव 'ऐन्द्राग्नं गृह्णाति' इत्यैन्द्राग्नग्रहो विहितः । तत्र भक्षावसरे 'इन्द्रपीतस्य' इति मन्त्रो भवति न वेति सन्देहे इन्द्राग्निभ्यां पीते सोमे इन्द्रपीतत्वस्यापि सत्वात् 'इन्द्रपीतस्य' इति मन्त्रः प्रवर्तते । इन्द्राग्न्युद्देशेन गृहीतस्सोम इन्द्राग्निभ्यां प्रदीयते । प्रदत्तं सोमं तावुभौ

स्वीकुरुतः। स्वीकृत्य पिबतः। पानञ्च प्रत्येकं परिसमाप्तम्। तस्मादैन्द्राग्नभक्षणे 'इन्द्रपीतस्य' इति मन्त्रः प्रयोक्तव्य इति पक्षे प्रप्ते;

सिद्धान्तः—यदा चानैन्द्रप्रदानेभ्यः 'इन्द्रपीतस्य' इत्यस्य निवृत्तिः तदा ऐन्द्राग्ने भक्षणममन्त्रकम्। इन्द्रं केवलमुद्दिश्य द्रव्ये प्रदीयमाने इन्द्रो देवता भवति। अत्र चेन्द्राग्निभ्यां प्रदीयते हविः। अग्निसापेक्षस्यैवेन्द्रस्यात्र देवतात्वम्। इन्द्रोऽन्यः अग्निसापेक्ष इन्द्रोऽपरः। 'इन्द्रपीतस्य' इत्यत्रेन्द्रेण पीतस्सोम इति समासमङ्गीकृत्य इन्द्रपीतशब्दः सोमविशेषणमिति स्वीकर्तव्यम्। तत्र प्रदत्तो यस्सोमः स इन्द्रपीतशब्देनोच्यत इति स्वीकारेऽनुपपत्तिः। प्रदत्तस्य स्वीकार एवोचितः न पानम्। अतः पीतशव्दस्य स्वीकारे लक्षणा। इन्द्राग्निभ्यां स्वीकृतस्सोम इन्द्रेणापि स्वीकृतो भवतु। किन्तु तद्धितानुसारेण दानं मिश्रयोरेवेन्द्राग्न्योरिति न तत्र 'इन्द्रपीतस्य' इति मन्त्रस्यावसरः। अपि च यो हुतस्सोमः स द्वाभ्यां स्वीकृतः, यश्च हुतशेषो भक्षणावसरे वर्तते स कथं इन्द्रपीतस्स्यात्। अत ऐन्द्राग्नभक्षणममन्त्रकमेवेति ॥

## १९. गायत्रीच्छन्दस्केऽपि भक्षमन्त्रविनियोगाधिकरणम्

तस्मिन्नेव भक्षमन्त्रे 'गायत्रच्छन्दस इन्द्रपीतस्य' इति सोमविशेषणं 'गायत्रच्छन्दस' इति श्रुतम्। गायत्रं छन्दो यस्येति बहुव्रीहिः। किमयं भक्षमन्त्रः केवलगायत्रीच्छन्दस्के प्रदाने भवति? उत छन्दोन्तरसहित गायत्रीच्छन्दस्केऽपि प्रदाने? इति संशये, 'इन्द्रपीतस्य' इति पूर्वं केवलेन्द्रपीतस्थल एव प्रवर्तते नाग्न्यादिसहितस्थल इति प्रतिपादितम् तन्न्यायेनात्रापि समासवशात् गायत्रछन्दोऽपि केवलमेव गृह्यते नान्यच्छन्दस्सहितमिति पक्षे प्राप्ते, सिद्धान्तः—

ज्योतिष्टोमे प्रदानेषु सर्वेषु छन्दोऽन्तराणां सत्त्वात् केवलगायत्रीच्छन्दस्कप्रदानाभावात् छन्दोन्तरसहितस्यैवान्यपदार्थत्वात् नित्यसापेक्षस्थलेऽसामर्थ्यानङ्गीकारात् छन्दोऽन्तरसत्त्वेऽपि गायत्रच्छन्दस इति मन्त्रो भवत्येवेति।

## २०. इन्द्रपीताधिकरणसिद्धान्तः

एवं कृत्वाचिन्तया प्रथमपक्षे स्थिते सिद्धान्त उच्यते—ऐन्द्रानैन्द्र

प्रदानानां भक्षणे ऐकमन्त्र्यमेव स्यात् । अविकृत एकरूप एव 'इन्द्रपीतस्य, इति अनैन्द्रेष्वपि प्रदानेषु प्रयोक्तव्यः । इन्द्रपीतशब्दस्सवनविशेषणम् न सोमविशेषणम्-इन्द्रेण पीतस्सोमो यस्मिन्निति विगृह्य प्रातस्सवन-विशेषणमङ्गीकर्तव्यम् । इन्द्रेण पीतस्सोम इति सोमविशेषणत्वे लक्षणा-बाहुल्यमापतेत् । प्रथमं पिबतिना स्वीकारो लक्षणीयः; देवतानां पाना भावात् । हुतशिष्टं यद्द्रव्यं तस्येन्द्राय दानाभावात् हुताहुतसमुदाये लक्षणा स्वीकार्या, अहुतस्य द्रव्यस्य भक्षाभावात्तेनाहुतश्शेषोऽवयवो भूतपूर्वगत्याऽऽक्षेप्तव्य इति लक्षणा, भक्षयतिस्सकर्मकः, 'इन्द्रपीतस्य' इति षष्ठ्या इन्द्रपीतं भक्षयामि इति कर्मत्वलक्षणा इत्येवं लक्षणाबाहुल्यम् । तस्मात् बहुव्रीहिणा सवनवाचित्वं स्वीकृत्य तत्सम्बन्धित्वस्यैन्द्रानैन्द्र-योस्समत्वाद्यथाम्नात एव मन्त्रस्सर्वत्र प्रयोक्तव्य इति ॥

इति भक्षपेटिका

तृतीयाध्यायस्य द्वितीयः पादस्समाप्तः

---

## तृतीयाध्यायस्य तृतीयः पादः

### १. उपक्रमाधिकरणम्

पादद्वयेन श्रुतिलिङ्गयोर्विचारः कृतः । तृतीयपादे वाक्य-प्रकरण-स्थान-समाख्यानां स्वरूपोदाहरणानि निरूपयिष्यन्ते । तत्राप्यधिकरण-त्रयेण वाक्यविचारः प्रकरण-स्थान-समाख्यानामेकैकेनाधिकरणेन विचार इति विवेकः । तत्र यथाश्रुतार्थस्य पदस्याकाङ्क्षायोग्यतासन्निधिवशेन संसर्गविधया लक्षणया वाऽर्थान्तरकल्पनानुकूलः पदान्तरसमभिव्याहारो वाक्यम् । वाक्यं योग्यतारूपं लिङ्गं श्रुतिश्च कल्पयित्वा विनियोजकं भवति ।

ज्योतिष्टोमे 'प्रजापतिरकामयत प्रजास्सृजेयेति; स तपोऽतप्यत, तस्मात्तेपानात् त्रयो देवा असृज्यन्ताग्निर्वायुरादित्यः ते तपोऽतप्यन्त; तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्नेर्ऋग्वेदः वायोर्यजुर्वेदः आदित्या-

त्सामवेदः, इत्यारभ्य 'उच्चैः ऋचा क्रियते उपांशु यजुषा उच्चैः साम्ना' इति। इदमेवास्याधिकरणस्य विषयवाक्यम्। किं ऋगादिशब्दा मन्त्रपराः ? उत वेदपरा इति सन्देहः। तत्र 'उच्चैः' 'उपांशु' इति शब्दौ जाति प्रवृत्तिनिमित्तकौ उच्चैस्त्वं उपांशुत्वञ्च प्रतिपादयतः। उच्चैस्त्वमुपांशुत्वञ्च विधीयते। तदाश्रयत्वेन ऋगादिपदं श्रूयते। वेदपदञ्च न श्रूयते। ततश्चोच्चैस्त्वमुपांशुत्वञ्च व्यक्तिमाक्षिपतः। व्यक्तिश्च मन्त्ररूपा न वेदरूपा। वेदपरत्वे लक्षणा स्यात्। उच्चैः ऋङ्मन्त्रेण क्रियते उपांशु यजुर्मन्त्रेण क्रियत इति फलति। ननूपक्रमे वेदशब्दः स च मुख्यः, उपसंहारे ऋगादिशब्दः स च जघन्यः। मुख्यानुसारिणा जघन्येन भवितव्यम्, उपक्रमानुसारेण चोपसंहारः कर्तव्य इति ऋगादिशब्दानां वेदपरत्वमेव युक्तमिति चेन्नैतद्युक्तम्; वेदशब्दस्य वेद्यतेऽनुष्ठेयमर्थमिति व्युत्पत्त्या मन्त्रपरत्वमेवेति न मुख्यातिक्रमः नाप्युपक्रमातिक्रमः। किञ्च विधिरप्राप्तार्थप्रापकत्वेन मुख्यः, अर्थवादस्तु प्राप्तर्थबोधकत्वेन जघन्यः, विध्येकवाक्यतया चार्थवादानां स्वरूपलाभः। ततश्च विधेरेव मुख्यत्वम्, तदनुसारेणैवार्थवादगतो वेदशब्द ऋगादिमन्त्रपरत्वेन नेय इति पक्षे प्राप्ते,

सिद्धान्तः—विधिवाक्यश्रवणात्पूर्वमर्थवाद उपक्रमे श्रुतोऽसञ्जातविरोधीति निर्णीतः। तद्दशायामर्थवादगतवेदशब्दार्थो निश्चितः। उपसंहारस्थो विधिस्तु सञ्जातविरोधी। विधेरर्थवादापेक्षया यद्यपि प्राधान्यम्, तथापि सञ्जातविरोधीति विधिरमुख्यः। अर्थवादस्तु विध्यपेक्षया गुणभूतोऽपि असञ्जातविरोधित्वेन मुख्यः। मुख्यापेक्षया प्रधानं बलीयस्तदा भवति यदा प्रधानं लब्धात्मकं स्यात्। विधेरर्थवादाननुगुणार्थकत्वे एकवाक्यतानिर्वाहो न भवेत्। अतो विधिर्न लब्धात्मकः। अर्थवादस्तु न तथा, असञ्जातविरोधित्वेन स्वार्थबोधनद्वारा लब्धात्मकः। अप्राप्तार्थावबोधकत्वाभावेऽप्यर्थवादस्य तद्गतस्य वेदशब्दस्यार्थोऽसन्दिग्धो निर्णीतश्च। अप्राप्तार्थबोधकत्वेऽपि विधेस्तद्गत ऋगादिशब्दार्थो न निर्णीतस्सन्दिग्धश्च। अर्थवादेनैकवाक्यतां प्राप्यैव ऋगादिशब्दानामर्थो निर्णेतव्यः। एकवाक्यतायास्तदा सम्भवो यदाऽर्थवादाननुगुणमर्थं न प्रतिपादयेत्। अतो ऋगादिशब्दानां वेदपरत्वं लक्षणया स्वीकृत्यार्थं-

वादैकवाक्यतां प्राप्तुं शक्नुयाद्विधिरित्यसञ्जातविरोधिनोऽर्थवादस्य प्राबल्यमिति ॥

## २. गुणमुख्यव्यतिक्रमाधिकरणम्

यजुर्वेदे विहितस्याधानस्य सामवेदे 'वारवन्तीयं गायति' इति सामगानमङ्गं विहितम्। आधानस्य प्रधानवेदो यजुर्वेदः। अङ्गस्य वारवन्तीयगानस्य वेदस्सामवेदः। यजुर्वेदस्य स्वर उपांशुः, सामवेदस्य चोच्चैस्स्वरः। आधानेऽनुष्ठीयमानस्य सामगानस्य किं सामवैदिकमुच्चैस्त्वं स्वरः? उत याजुर्वैदिकस्वर उपांशुत्वमिति सन्देहे, आधानस्य प्रधानस्य विधिर्यजुर्वेदे, अत उपांशुत्वस्वरः प्रधाने। तदङ्गञ्च सामगानं सामवेदे विहितम् तच्चोच्चैस्त्वस्वरयुक्तम्। अङ्गं यावत्प्रधानेनैकवाक्यतां प्राप्य तदीयस्वरेण युक्तं भवति, ततः पूर्वमेव सामवेदीयोच्चैः स्वरयुक्तं भवतीति सामवेदीयस्वर एव वारवन्तीय इति पक्षे प्राप्ते,

सिद्धान्तः--प्रधानविधिस्साङ्गं प्रधानं विधत्ते—पूर्वापरसकलाङ्गोपकृतेनाधानेनाग्नीनुत्पादयेदिति। अयं प्रयोगविधिः प्रधानविधिरेव, अङ्गवाक्यैकवाक्यतामापन्नस्य प्रधानविधेरेव प्रयोगविधित्वात्। स च सन्निकृष्टविप्रकृष्टत्वमनादृत्य वेदान्तरीयाणामप्यङ्गानां परिग्रहेण प्रधानं विधत्ते। तत्र प्रधानविधिनिबन्धन एव स्वरः प्राप्नोति। अङ्गानि स्वातन्त्र्येण धर्मग्राहकाणि न भवन्ति, प्रधानशेषत्वेनैव तेषां धर्मग्राहकत्वम्। ततश्च प्रधानवेदस्वरस्योपांशुत्वस्य प्रधानधर्मत्वात्तद्बाधे वैगुण्यमापद्येत। अङ्गवेदस्वरस्योच्चैस्त्वस्य बाधे त्वङ्गवैगुण्यमिति वारवन्तीयस्य प्रधानवेदनिबन्धनमुपांशुत्वमेवेति ॥

## ३. भूयस्त्वाधिकरणम्

ज्योतिष्टोमस्त्रिष्वपि वेदेषु समाम्नातः। तत्र कस्स्वरोऽवलम्बनीय इति संशये—अनियम इति पक्षे प्राप्ते,

सिद्धान्तः--यागस्य रूपं द्रव्यं देवता च। वेदान्तरे सोमद्रव्ययुक्तयजिमात्रं श्रूयते। तेन विशेषावगतिर्न जायते। यजुर्वेदे च सोमक्रयणमानाभिषवाद्यनेके धर्माः, इन्द्रवाय्वादिदेवताः समाम्नाताः। अङ्गबाहुल्यं यजुर्वेद एवोपलभ्यते। स्तोत्राणि सामवेदे ऋग्वेदे शस्त्राणि च विहि-

तानि। तदपेक्षयाङ्गभूयस्त्वस्य यजुर्वेदे सत्वात् ज्योतिष्टोमाङ्गमन्त्रेषु याजुर्वेदिकमुपांशुत्वं स्वर इति ॥

### ४. प्रकरणाधिकरणम्

श्रुतिलिङ्गवाक्यैर्विनियोगः प्रदर्शितः। सम्प्रति प्रकरणेन विनियोगः प्रदर्श्यते। दर्शपूर्णमासयोस्सन्निधौ 'समिधो यजति' 'तनूनपातं यजति' 'इडो यजति' 'बर्हिर्यजति' 'स्वाहाकारं यजति' इति प्रयाजपदवाच्या यागा आम्नाताः। त इमे दर्शपूर्णमासाङ्गं न वेति संशयः। श्रुतिलिङ्गवाक्यानामत्राभावात् प्रयाजादिकं नाङ्गम्। प्रकरणादङ्गत्वमुच्यतामिति चेत्, प्रकरणं नाम किं सन्निधिः? उत साकाङ्क्षत्वम्? अथवा प्रकाराकाङ्क्षत्वे सति सन्निहितत्वम्? 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति विधाय तत्सन्निधौ प्रयाजा विहिताः। अतस्सन्निधिना प्रयाजानामङ्गत्वमस्तु इति प्रथमः पक्षो नोचितः। दर्शपूर्णमाससन्निधौ श्रुतगोदोहनादिगुणकामानां दर्शपूर्णमासाङ्गत्वापत्तेः। दर्शपूर्णमासवाक्यस्य प्रयाजादिवाक्यानाञ्च परिपूर्णार्थप्रकाशकत्वेनाकाङ्क्षाविरहात् न द्वितीयः पक्षः। न तृतीयः पक्षः, अनुष्ठानमेव हि यागस्य प्रकारः। अनुष्ठानमात्रेणाकाङ्क्षायाश्शान्तेः। अनुष्ठानञ्च लोकतो विज्ञातुं शक्यते। ननु समिदादिवाक्यानां फलाकाङ्क्षायास्सत्त्वात् दर्शपूर्णमासयोश्च फलश्रवणात् तत्र प्रकारतयाऽन्वयं प्राप्य समिदादीनामङ्गत्वमुच्यतामिति चेन्न; प्रयाजादीनां विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा फलकल्पनेन स्वतन्त्रफलार्थत्वोपपत्तेः। अतो नास्ति प्रकरणं प्रमाणान्तरमिति न दर्शपूर्णमासाङ्गं प्रयाजा इति प्राप्ते,

सिद्धान्तः—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्राख्याते नाभिहिता भावना किं केन कथमित्याकाङ्क्षति। तत्र स्वर्गः साध्यत्वेन, धात्वर्थो यागः साधनत्वेनान्वेति। इतिकर्तव्यताकाङ्क्षा च तिष्ठति। करणगतशक्त्याधायको व्यापार इतिकर्तव्यता। एवं 'समिधो यजति' इत्यत्राप्याख्यातवाच्यभावनाया आकाङ्क्षात्रये जायमाने धात्वर्थस्य करणत्वेनाभिक्रमणादीनाञ्चेतिकर्तव्यतात्वेनान्वये जाते फलाकाङ्क्षा साध्याकाङ्क्षा तिष्ठति। एवं द्वयोराकाङ्क्षायां सत्यां यागनिष्ठशक्त्याधायक सामग्रीसमर्पणेन प्रयाजादीनामितिकर्तव्यतया, एवं प्रयाजभावनायास्सा-

ध्याकाङ्क्षायां यागानुग्रहस्य साध्यतयाऽन्वये जाते दर्शपूर्णमासवाक्यस्य प्रयाजवाक्यानाञ्च परस्पराभिसम्बन्धस्सिध्यति । तथा च नष्टाश्वदग्धरथन्यायेनैकवाक्यतायां सम्पद्यमानायां स्वतन्त्रफलार्थत्वं प्रयाजानामाश्रयणं नोचितम्, अन्यतराकाङ्क्षात उभयाकाङ्क्षाया बलीयस्त्वात् । तस्मादुभयाकाङ्क्षैव प्रकरणम् तच्च प्रयाजानां ग्राहकमिति ॥

## ५. क्रमाधिकरणम्

सर्वत्र यजमानोऽग्नौ द्रव्यप्रक्षेपानन्तरं तां तां देवतां चतुर्थ्यन्तेन निर्दिश्य 'अग्नय इदं न मम' 'अग्नीषोमाभ्यामिदं न मम' इति पठति । अयं यागः कथ्यते । इमं यागमनु यजमानद्वारा उच्चार्यमाणो मन्त्रः 'अनुमन्त्रणमन्त्रः' इति कथ्यते । इमेऽनुमन्त्रणमन्त्राः क्रमेणाम्नाताः मन्त्रभागे । तत्र दर्शपूर्णमासयोः प्रकरणे उपांशुयाजक्रमे 'दब्धिरस्यदब्धो भूयासम्' इत्यनुमन्त्रणमन्त्र आम्नातः । तत्र चिन्त्यते-किमयं मन्त्रः-प्रकरणाद्दर्शपूर्णमासाङ्गम् ? उतोपांशुयाजाङ्गमिति । अस्मिन् मन्त्रे विशेषकयोः श्रुतिलिङ्गयोरभावात्, विनियोजकवाक्यस्याप्यसत्त्वात् प्रकरणस्याविशेषात् क्रमस्य च नियामकत्वाभावात् 'अग्नेरहं देवयज्यया' इत्यादिमन्त्राणां दब्धिमन्त्रस्य च विकल्पेन ग्रहणमिति पक्षे प्राप्ते,

सिद्धान्तः—स्थानं क्रमश्चेत्यनर्थान्तरम् । उपांशुयाजविधेर्दब्धिमन्त्रस्य च स्थानसाम्यं वर्तते । स्थानस्यापि विनियोजकत्वं वर्तते । येन क्रमेण यागा आम्नाताः; येन च क्रमेण मन्त्राः पठिता इति मन्त्रसमाम्नायं ब्राह्मणसमाम्नायञ्च पर्यालोच्य पुरुषो निश्चिनोति–प्रथमस्य प्रथमः, द्वितीयस्य द्वितीय इति । प्रथममतिक्रम्य द्वितीयं मन्त्रं प्रथमस्य प्रथमञ्च मन्त्रं द्वितीयस्येति निर्णयो निर्हेतुकः । मन्त्रः शेषः; तस्य शेषिणा सम्बन्धः कर्तव्यः । प्रथमेन शेषिणा प्रथमस्य शेषस्य सम्बन्धस्सहेतुकः । उपांशुयाजक्रमे समाम्नातो दब्धिमन्त्रः क्रमात्तस्यैव शेषः । आग्नेययागस्य मन्त्राकाङ्क्षायां अग्नेरहं देवयज्यया' इत्यादिमन्त्रेण शान्तायां दब्धिमन्त्रस्य तत्र प्रसक्तिः कथम्, येन विकल्पस्स्यात् । विकल्पेऽङ्गीक्रियमाणेऽष्टदोषदुष्टता स्यात् । तस्मात् स्थानप्रमाणेन दब्धिमन्त्रस्योपांशुयाजाङ्गत्वम् ॥

## ६. समाख्याधिकरणम्

शाखाच्छेदनादयः याज्यापुरोनुवाक्यापठनम् स्तोत्रपठनमित्यादयः पदार्थाः कर्तव्यत्वेन दर्शपूर्णमासज्योतिष्टोमादिषु विहिताः। कर्तारश्च-तत्तत्क्रतुभेदेन चत्वारः पञ्च षट् इत्येवं सन्ति। पदार्थानुष्ठातारः कर्तारः के? किं अनियमः? उत व्यवस्थापकं किमपि प्रमाणमस्ति? इति सन्देहः। नियामकश्रुत्याद्यभावेन येन केनचित् ये केचन पदार्था अनुष्ठातुं शक्यन्ते। आध्वर्यवं हौत्रमिति समाख्या अध्वर्योः होतुश्च सम्बन्धमात्रा वगमकाः, अध्वर्युणा होत्रा वा इमे कर्तव्या इति न बुद्धिं जनयन्ति। अमी पदार्था अनेन कर्तव्या इति विध्यभावेन कर्तृनियमासिद्धेः। किञ्च सम्बन्धं विदित्वा पश्चात् समाख्यां विदधाति, समाख्यया च पदार्थ-स्सम्बन्धो बोध्यत इत्यन्योन्याश्रयात् समाख्या न विनियोजिकेति पक्षे प्राप्ते,

सिद्धान्तः—यथा क्रमो विनियोजकः पदार्थानां तथा समाख्यापि विनियोजिका, कर्तृविशेषसमर्पणार्थत्वात्। आध्वर्यवम् इति समाख्याते काण्डे ये पदार्थाः पठिताः तेषां कर्ता अध्वर्युः हौत्रमिति समाख्याते काण्डे ये पदार्थाः पठिताः तेषां होता कर्तेति समाख्याऽवबोधयति। समाख्या सम्बन्धमात्रं नावबोधयति, सम्बन्धिना विना सम्बन्धमात्रस्य बोधनमप्रयोजकम्। सम्बन्धश्च सम्बन्धिनोर्द्वयोर्भवति। एकस्सम्बन्धी शाखाच्छेदनादिः, अपरश्चाध्वर्युः होता वा। अतस्सम्बन्धमात्रं न समाख्या बोधयति। यदुक्तमन्योन्याश्रय इति तन्न; एवमादयस्समाख्या वैदिका अनादयः, सम्बन्धकर्तुरस्मरणात्। तस्मात्समाख्यापि विनियो-जिका इति॥

## बलाबलाधिकरणम्

श्रुत्यादीनि प्रमाणानि निरूपितानि। सम्प्रति तेषां बलाबलं चिन्त्यते। पूर्वं पूर्वं प्रमाणं प्रबलम् उत्तरमुत्तरञ्च दुर्बलम्। उत्तरोत्तरस्य प्रमाणस्य पूर्वपूर्वप्रमाणकल्पनाद्वारैव विनियोजकत्वम्। एतेषु द्वयो-स्त्रयाणां वा सन्निपाते विरोधः प्रसरति। तत्र पूर्वस्य प्राबल्यमुत्तरस्य दौर्बल्यं सिद्धं भवति। लिङ्गं वाक्यस्य बाधकमिति स्थिते श्रुतेः लिङ्ग

बाधकत्वात् वाक्यादिबाधकत्वमप्यनुक्तसिद्धम् बाधितबाध्यस्य वाक्यस्य बाधकबाधकेन श्रुतिप्रमाणेन सुतरां बाध्यत्वात् ॥

## ७. श्रुतिप्राबल्याधिकरणम्

'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यत्रैन्द्रीमन्त्रेण गार्हपत्योपस्थानं विधीयते । 'ऐन्द्या' इति तृतीयया मन्त्रस्य करणत्वं प्रतीयते । 'गार्हपत्यम्' इति द्वितीयया कर्मत्वं साध्यत्वमवगम्यते । ऐन्द्रीमन्त्रस्य सामर्थ्यमिन्द्रप्रकाशने विद्यते । सामर्थ्यञ्च श्रुतिं कल्पयित्वा विनियोजकं भवति । तेनैन्द्रीमन्त्रेणेन्द्रमुपतिष्ठत इति सिध्यति । 'गार्हपत्य' शब्दोऽग्निवाची । द्वितीया च तन्निष्ठं कर्मत्वमवगमयति । तेनैन्द्रीमन्त्रेण गार्हपत्यस्याग्नेरुपस्थानं कर्तव्यमिति सिध्यति । एवं विरोधे जाते किं लिङ्गं श्रुतिश्चोभयं तुल्यबलम् ? उत लिङ्गं बलीयः ? अथवा श्रुतिरेव बलीयसीति सन्देहः । तत्र मन्त्रगतसामर्थ्यानुसारेणेन्द्रस्योपस्थानं क्रियताम् द्वितीयया गार्हपत्योपस्थानं वा क्रियताम्, उभयोस्तुल्यबलत्वात् । मन्त्रगतेन्द्रपदस्याग्निरिति, गार्हपत्यपदस्येन्द्र इत्युभयत्र कल्पकत्वव्यापारस्तुल्यः । अथवा मन्त्रस्यावृत्तिद्वारा समुच्चय एव भवतु । अथवा लिङ्गमेव प्रबलं भवतु । 'आख्यातानामर्थं ब्रुवतां शक्तिस्सहकारिणी' इति न्यायेन सर्वत्र शक्तेरावश्यकत्वाच्छक्तिमुपजीव्यैव श्रुतिवाक्यं प्रवर्तत इति लिङ्गस्यैव प्राबल्यमिति पक्षे प्राप्ते,

सिद्धान्तः—श्रुत्या विनियोगावसरे यदि श्रुतिर्विनियोगकार्येऽसामर्थ्यमनुभवेत् तदा सामर्थ्यापेक्षा तस्याः स्यात् । सा हि मन्त्रगतेन्द्रशब्दस्येशितृत्वादिगुणयोगेन गार्हपत्याभिधायकत्वमवलम्ब्य विनियोगनिर्वाहाय समर्था । अतो न लिङ्गस्य श्रुत्यपेक्षया बलवत्वम् नापि तुल्यबलत्वम् मन्त्रार्थज्ञानमात्रेण इदमेतेन कर्तव्यमिति ज्ञानानुदयात्, यतोऽयं मन्त्र इन्द्रं प्रकाशयति अतोऽनेनेन्द्रोपस्थानं कर्तव्यमिति यावच्छ्रुतिं कल्पयितुमारभते तावत्ततः पूर्वमेव श्रुतिः मन्त्रं गार्हपत्यशेषत्वमापाद्य गार्हपत्योपस्थानं कर्तव्यमिति विनियोगकार्यं निर्वहति । अतो लिङ्गविनियोगस्य श्रुतिकल्पनाद्वारा विप्रकर्षात् श्रुतिलिङ्गयोर्न समबलत्वम् । यदुक्तं समुच्चय इति तन्न; मन्त्रः प्रथमं मम किं कार्यमित्याकाङ्क्षति,

तत्र विनियोजकसामग्र्यभावात् ताञ्चाकाङ्क्षां विनियोजकसामग्रीसत्त्वेन प्रत्यक्षा श्रुतिश्शमयति । एवञ्च मन्त्रगताकाङ्क्षाविच्छेदकत्वेन लिङ्ग श्रुत्योर्विरोधसत्त्वेन समुच्चयस्य नावकाशः । नन्वैन्द्र्या इति तृतीयया शेषत्वम्, गार्हपत्यम् इति द्वितीयया शेषित्वमित्यवगम्यते । किन्तु किन्निरूपिते शेषशेषित्वे इति नावगतम् । तदर्थं पदान्तरसमभिव्यवहार आश्रयणीयः । समभिव्याहारश्च वाक्यम् । वाक्यञ्च गार्हपत्यनिरूपित-मन्त्रनिष्ठशेषत्वं प्रतिपादयति, लिङ्गञ्चैन्द्र्याः शेषत्वस्येन्द्रनिरुपितत्वं प्रतिपादयतीति लिङ्गवाक्ययोरेवायं विरोधः न तु श्रुतिलिङ्गयोरिति चेन्न, वाक्यस्य लिङ्गेन विरोधाभावात् श्रुतिलिङ्गविरोध एवोदाहरणम् । 'गार्हपत्यम्' इति द्वितीया श्रुत्युक्तशेषित्वसामान्यमाग्नेयीविषयं न भवितुमर्हति, नापि 'ऐन्द्र्या' इति तृतीयाश्रुत्युक्तशेषत्वमिन्द्रविषयं भवितुमर्हति, किन्तु तद्व्यतिरिक्तान्यविषयमेवेति तावत्स्पष्टम् । अन्यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति वचनानर्थक्यं प्रसज्येत, लिङ्गादेव-शेषित्वस्य शेषत्वस्य च प्राप्तत्वात् । किञ्च विरोधस्थले प्रबलेन दुर्बलस्य बाधो निश्चितः । प्रबलदुर्बलयोश्च बाध्यबाधकभावो भवति, तयोरेव च विरोधः प्रकृते वाक्यापेक्षया लिङ्गं प्रबलमपि न वाक्यं बाधितुं शक्नोति । यदि बाधेत तर्हि श्रुतिवाक्ययोरुभयोरपि बाधे वेदाप्रामाण्यापत्तिः अतः श्रुतिलिङ्गयोरेवेदं विरोधोदाहरणम् ॥

## ८. लिङ्गप्राबल्याधिकरणम्

दर्शपूर्णमासयोः 'स्योनन्ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इत्यस्ति मन्त्रः । हे पुरोडाश तव घृतधारया समीचीनं स्थानं करोमि, तस्मिंस्त्वं शोभनमनस्कस्सन् उपविश प्रतिष्ठाञ्च प्राप्नुहि इति मन्त्रार्थः। अत्र किं वाक्यं लिङ्गात् प्रबलम् ? उतोभयोरपि तुल्यबलत्वम् ? अथवा लिङ्गं प्रबलं वाक्यञ्च दुर्बलमिति संशयः । तत्र मन्त्रगतात् 'तस्मिन्' इति पदात् एकवाक्यत्वं प्रतीयते । वाक्यञ्च पदसमभिव्याहारः । सम-भिव्यारमात्रेणास्यार्थप्रत्याकत्वं सिद्धम् । प्रतीयमानश्चार्थः—घृतधारया-सदनकरणपूर्वकः पुरोडाशप्रतिष्ठापनरूपः । अत्र लिङ्गसापेक्षता वाक्यस्य

नास्ति। एतादृशार्थप्रतिपादकमन्त्रस्य विनियोजकसामग्री नास्ति वाक्ये। विनियोगायानेन मन्त्रेण सदनकरणपूर्वकपुरोडाशसादनं कर्तव्यमिति श्रुतिं कल्पयित्वा समर्थ्योपजीनमन्तरा वाक्यं विनियोजकं भवतु, मन्त्रं विभज्य विनियोगस्य काऽऽवश्यकता ? इदं कार्यं सामर्थ्यमपि कर्तुं शक्नोतीति चेत् लिङ्गवाक्ययोस्तुल्यबलत्वमस्तु इति पक्षे प्राप्ते,

सिद्धान्तः—यद्यपि श्रुतिकल्पनापेक्षा लिङ्गवाक्ययोस्तुल्या, तथापि लिङ्गस्य तव सन्निकर्षः, वाक्यस्य तु विप्रकर्षः। सर्वोऽपि विनियोगो विनियोज्यसामर्थ्यप्रयुक्तः। विनियोज्यसामर्थ्ये पर्यालोच्यमाने पूर्वार्धस्य सदनकरणे, ऊत्तरार्धस्य सादनकरणे सामर्थ्यमवगम्यते। वाक्येन विनियोगे क्रियमाणे समग्रस्य मन्त्रस्य सदने सादने वा सामर्थ्यं निश्चित्य तेन श्रुतिः कल्पनीया भवति। यावद्वाक्यं सामर्थ्यनिश्चये प्रवर्तते तावदेव लिङ्गं क्लृप्तसामर्थ्यबलेन श्रुतिं कल्पयित्वा पूर्वार्धं सदनकरणे उत्तरार्धञ्च सादनकरणे मन्त्रं विनियुङ्क्त इति न लिङ्गवाक्ययोस्तुल्यबलत्वं नापि वाक्यस्य बलीयस्त्वम्। तस्माद्वाक्याल्लिङ्गं बलीयः॥

## ९. वाक्यप्राबल्याधिकरणम्

दर्शपूर्णमासयोस्सूक्तवाकनिगदस्य विभज्य विनियोगः द्वितीयपादे षष्ठाधिकरणे प्रतिपादितः। तत्र 'अग्नीषोमाविदं हविरजुषेताम् अवीवृधेतां महो ज्यायोऽक्राताम्' इति पौर्णमास्याम्, 'इन्द्राग्नी इदं हविरजुषेताम्' इत्यमावास्यायां यथालिङ्गं मन्त्रः पठ्यते। पौर्णमास्यां विनियुक्तस्य 'अग्नीषोमौ' इत्यस्य शेषः 'अवीवृधेताम्' इत्यादिः अग्नीषोम पदेनैकवाक्यतां प्राप्तो वाक्यप्रमाणेन पौर्णमास्यङ्गम् उत दर्शपूर्णमासप्रकरणेनोभयार्थस्सन् दर्शाङ्गमपि इति संशये, प्रधानस्याङ्गानाञ्चाकाङ्क्षालक्षणं प्रकरणं प्रमाणं प्रधानसंस्पर्शि भवति। ऐन्द्राग्नयागोऽपि अग्नीषोमीययाग इव प्रधानम्। यथा 'अग्नीषोमौ' 'इदं हविरजुषेताम्' इत्यादिशेषेण प्रकाश्येते तथा 'इन्द्राग्नी' अपि प्रकाशयितव्यौ। अतः प्रकरणात् मन्त्रशेषस्य दर्शाङ्गत्वमपीति पक्षे प्राप्ते,

सिद्धान्तः—'इन्द्राग्नी' इत्यनेन मन्त्रशेषस्यैकवाक्यता नास्ति। 'अग्नीषोमौ' इत्यनेन तु प्रत्यक्षेणैकवाक्यता दृश्यते। तत आकृष्य इन्द्रा-

ग्नीति पदेनैकवाक्यतां कृत्वा लिङ्गश्रुती कल्पनीये यदि प्रकरणा-दृर्शाङ्गत्वमुच्येत। ततः पूर्वं वाक्यं लिङ्गश्रुती कल्पयित्वा विनियोजकं भवति। अत्र सन्निकर्षः, तत्र विप्रकर्ष इति। सन्निकर्षेण विनियोगे जाते उभयाकाङ्क्षा न जायते, आकाङ्क्षायाश्शान्तत्वात्। एवञ्च प्रकरणस्य प्रधानसंस्पर्शित्वस्य सत्त्वेऽपि श्रुतिकल्पनाधीनमेव विनियोज-कत्वम्। श्रुतिकल्पनायाश्च विप्रकर्षः, वाक्यस्य सन्निकर्ष इति वाक्या-त्प्रकरणं दुर्बलम्। तस्मात् 'इदं हविः' इत्यादिर्मन्त्रशेषः पौर्णमास्यङ्ग-मेवेति ॥

## १०. प्रकरणप्राबल्याधिकरणम्

राजसूये अनेके इष्टिपशुसोमयागाः फलवन्तस्समप्रधाना विहिताः। इमे दर्शपूर्णमासाग्नीषोमीयपशु-ज्यौतिष्टोमविकृतयः। एतेषां 'राजसूय' इति आख्यातपरतन्त्रं नामधेयम्। इमे इष्टिपशुसोमाः तत्तत्प्रकृति-तश्शान्ताकाङ्क्षा अपि राजसूयत्वेनास्ति प्रकरणम् इति स्थितिः। तत्राभिषेचनीयाख्यः कश्चन सोमयागः। तत्सन्निधौ विदेवनादीन्यङ्गा न्याम्नातानि—'अक्षैर्दीव्यति' 'राजन्यं जिनाति' 'शौनश्शेपमाख्यापयति' इत्यादीनि। तदिमान्यङ्गानि सन्निधि (स्थान) प्रमाणेनाभिषेचनीय-सोमसम्बन्धीनि उत राजसूयसम्बन्धीनि ? इति सन्देहः। अर्थात् अभिषेचनीयसोमयागाङ्गत्वं विदेवनादीनाम् ? उत राजसूयाङ्गत्व-मिति। इष्टिपशुसोमानां प्रकरणं साधारणम्, स्थानन्तु अभिषेचनीय-स्यासाधारणम्। साधारणं सामान्यम्, असाधारणञ्च विशेषः। सामान्याच्च विशेषः प्रबलः। बलवत्वात् तद्वशेनाभिषेचनीयाङ्गत्वमेव विदेवनादीनामिति पक्षे प्राप्ते,

सिद्धान्तः—सन्निधिस्त्वसाधारण इति सत्यम्; किन्तु आकाङ्क्षा-कल्पनपूर्वकमेव तस्य विनियोजकत्वं वक्तव्यम्। यावदभिषेचनीय-सोमयागस्येतिकर्तव्यताकाङ्क्षा, एवं विदेवनादीनामङ्गानामुपकाया-काङ्क्षा नोदेति तावत् स्थानं विदेवनादीनां विनियोजकं कथं स्यात् ? प्राकृतज्यौतिष्टोमिकैरङ्गैरभिषेचनीयसोमयागस्येतिकर्तव्यताकाङ्क्षाया-श्शान्तत्वेन स्थानेन तत्र विदेवनादिविषयकाकाङ्क्षोत्थापनीया भवति।

तादेव प्रकरणं सन्दंशपतितान् विदेवनादीन् विनियुङ्क्त इति प्रकरणात्स्थानं बाध्यते । अतः प्रकरणात् स्थानं दुर्बलमिति ॥

## ११. स्थानप्राबल्याधिकरणम्

व्यवहाराय वेदभागानामध्ययनाय पदार्थानामनुष्ठानाय च क्लृप्ताः कल्पिताश्च समाख्या वैदिक्यो लौकिक्यश्च सन्ति । तासु 'पौरोडाशिकम्' इति काचन समाख्या पुरोडाशसम्बन्धिपदार्थबोधिका । 'पौरोडाशिकम्' इति ष्ठन् प्रत्ययान्तः शब्दः । एवंसमाख्यया समाख्याते काण्डे दर्शपूर्णमाससम्बन्धिनि, 'शुन्धध्वं दैव्याय' इत्यादिर्मन्त्रः सान्नाय्यपात्रशोधनक्रमे पठितः । किमयं मन्त्रः समाख्यया पुरोडाशसम्बन्धिपात्राङ्गम् ? उत स्थानात् सान्नाय्यपात्रशोधनाङ्गमिति संशये पुरोडाशसम्बन्धवाचिन्यास्समाख्यायाः, विनियोगे प्रमाणान्तरनिरपेक्षायाः पुरोडाशपात्राङ्गत्व बोधकत्वमेवेति पक्षे प्राप्ते,

सिद्धान्तः—पौरोडाशिकमिति समाख्या मन्त्रस्य पुरोडाशसम्बन्धि पात्रसम्बन्धबोधने न समर्था, किन्तु प्रकृत्या पुरोडाशः प्रत्ययेन काण्डमिति पुरोडाशसम्बन्धिकाण्डस्यैव बोधने समर्था । सम्बन्धस्तु समभिव्याहारलभ्यः । अनन्यलभ्यश्शब्दार्थ इति न्यायेन समाख्यायाः काण्डवाचित्वमेव । तेन मन्त्रस्य काण्डपठितस्य पुरोडाशस्य च कश्चन सम्बन्धोऽस्तीति कल्पनीयम् । ततः समाख्याकल्पितमन्त्रसम्बन्धेन पुरोडाशपात्रशोधनस्य स्मारकतन्मन्त्रापेक्षा कल्पनीया ततो वाक्यलिङ्ग श्रुतयः कल्पनीयाः । तदनन्तरं विनियोगः । मन्त्रस्य समानदेशत्वलक्षणस्थानस्य च सम्बन्धः प्रत्यक्षः । तत अकाङ्क्षा-वाक्य-लिङ्गश्रुति कल्पने स्थानं सन्निकृष्टम्, समाख्या तु विप्रकृष्टेति स्थानात्समाख्याया दौर्बल्यमिति ॥

## १२. बाधयोग्यताधिकरणम्

विचारितस्य प्राबल्यदौर्बल्यस्य फलविचारोऽस्मिन्नधिकरणे क्रियते । उत्तरोत्तरं प्रमाणं लिङ्गादिकं किं लब्धप्रमाणभावं सत् पूर्वेण बाध्यते ? उतालब्धप्रमाणभावमेव बाध्यते ? अर्थात् उत्तरं प्रमाणं प्राप्तं

सद्बाध्यते उताप्राप्तं सत् इति सन्देहः। तत्र लब्धप्रमाणभावस्य प्राप्त-स्यैवोत्तरस्य बाधः शरकुशन्यायेनेति पक्षे प्राप्ते,

सिद्धान्तः—यद्धि प्रमाणं सत्प्राप्तं तदन्येन प्रमाणेन कथं बधितं भवेत्। ननु अलब्धप्रमाणभावमकिञ्चित्करम्, तेन पदार्थविनियोगोऽप्रसक्त एव, कथं तद् बाध्येत पूर्वेणेति चेन्नैष दोषः। पूर्वं पूर्वं प्रमाणं प्रथमं प्रवृत्तं सत् उत्तरोत्तरप्रमाणस्य या कल्पकत्वशक्तिः सा प्रतिबध्यते। प्रवृत्तिप्रतिबन्ध एवात्र बाधो विवक्षितः। शरकुशन्याये तु प्राकृतं कुश-मयत्वमतिदेशेन विकृतौ प्राप्तं सत् वैकृतेन शरमयेन बाध्यते, उपदेशा-पेक्षयाऽतिदेशस्य दुर्बलत्वात्। प्रकृते च लिङ्गादीनि पूर्वप्रमाणकल्पना-द्वारैव विनियोजकानि। पूर्वेण श्रुतिप्रमाणेन पदार्थस्य विनियोगे कृते उत्तरस्य लिङ्गस्य श्रुतिकल्पकत्वशक्तिः क्षीणेति प्रवृत्तिरेव नास्तीति अलब्धप्रमाणभावन्तद्भवति अर्थादप्राप्तमेव तद्बाधितं भवति। एवञ्च तार्तीयो बाधोऽप्राप्तबाध इति फलति॥

## १३. अहीनाधिकरणम्

श्रुत्यादीनां बलाबलं चिन्तितम्। अधुना विरोधः क्वास्ति क्व च नास्तीति परीक्ष्यते। प्रथमं श्रुत्या प्रकरणस्य विरोधसदसद्भावो विचा-र्यते। ज्योतिष्टोमे श्रूयते—'तिस्रः सान्हस्योपसदो द्वादशाहीनस्य' इति। यस्य क्रतोः सुत्या-सोमाभिषवादिकं समानेनान्हा समाप्यते स क्रतुः सान्हः कथ्यते। स च ज्योतिष्टोमः। एकदिनसाध्यसुत्याकः क्रतुरित्यर्थः। सान्हस्य ज्योतिष्टोमस्य तिस्र उपसदिष्टयोऽङ्गम् इति नियतम्। 'द्वाद-शाहीनस्य' इति विधीयमानं द्वादशोपसत्कत्वमपि प्रकरणात्तस्यैवा-ङ्गम्? उताहीनानाम् इति संशयः। द्विरात्रं त्रिरात्रं चतूरात्रमित्येव-महर्गणसाध्यास्सोमयागाः द्वादरात्रपर्यन्तं साध्यतया विहिताः। अत्र प्रतिदिनं सुत्याकर्म भवति, अतएवाहीनशब्देनैतेषां व्यवहारः। ज्योति-ष्टोमः केनापि सोमयागेन न हीयते न त्यज्यत इति व्युत्पत्त्या अहीन-शब्देनाभिधातुं शक्यते सर्वेषामपि सोमयागानां प्रकृतिः ज्योतिष्टोमः। इमं कोऽपि सोमयागो न त्यजति, प्रकृतित्वेनापेक्ष्यमाणत्वात्। अतो

नाहीनश्रुत्या प्रकरणस्य विरोध इति द्वादशोपसत्कत्वं त्र्युपसत्कत्वं वा ज्योतिष्टोमाङ्गमिति पक्षे प्राप्ते,

सिद्धान्तः--उपसद्द्वादशत्वं प्रकरणान्न ज्योतिष्टोमाङ्गम्, सान्हशब्देनोपात्तस्य ज्योतिष्टोमस्याहीनशब्देनोपादानायोगाद् अहीनशब्दवाच्यद्विरात्रादीनामेवाङ्गम् । अहीनशब्दः सान्हशब्दवाच्यज्योतिष्टोमान्यस्यैव वाचकः । अहीनशब्दोऽहन् शब्दात् 'अन्हः खः क्रतौ' इति सूत्रेण खप्रत्यये कृते 'आयनेयीन् इत्यादिना इनादेशे कृतेऽहीनशब्दो निष्पन्नः । खप्रत्ययश्च 'तस्य समूहः' इत्यधिकारे विहितः । तेन अहर्गणसाध्यसुत्यासमूहेऽहीनशब्दो वर्तत इति सिध्यति । अतो न हीयते न त्यज्यते इति नञ् समासो न कर्तुं शक्यते, तथासति सत्रेष्वप्यहीनशब्दप्रयोगापत्तिरित्यहीनशब्दो द्विरात्रादिष्वेव वर्तत इत्यङ्गीकर्तव्यम् । अहीनशब्दो मध्योदात्तः 'अहीनः' पठ्यते । नञ् समासे स्वीकृते पूर्वपदप्रकृतिस्वकरः 'अहीनः' स्यात् । स्वरभेदेनार्थभेदः स्फुटः । एवं श्रुत्या प्रकरणस्य विरोधे जाते प्रकरणाच्छ्रुतेः प्राबल्यमिति द्वादशोपसत्त्वं द्विरात्राद्यहीनाङ्गमिति । द्विरात्रादयस्सोमयागा ज्योतिष्टोममनुष्ठायानुष्ठीयन्त इति तदङ्गमेव द्वादशोपसत्त्वमिति ॥

## १४. प्रतिपदधिकरणम्

ज्योतिष्टोमे बहिष्पवमानस्तोत्रे 'उपास्मै गायता नरः' इति नित्यां प्रतिपदं विधाय 'युवं हि स्थः स्वर्पती इति द्वियजमानयोः प्रतिपदं कुर्यात्' 'एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः' इति श्रूयते । बहिष्पवमानस्तोत्रे या आद्या स्तोत्रीया ऋग्भवति सा प्रतिपदित्युच्यते । एकैकस्मिन् स्तोत्रे तिस्र ऋचो भवन्ति । तास्वाद्या प्रतिपच्छब्देन व्यवह्रियते । प्रतिपद्विधिद्वयमिदं किं ज्योतिष्टम एव निवेशं लभते ? अथवा ये द्विबहुयजमानकाः क्रतवस्तेषु विधिद्वयमुत्कृष्यत इति संशयः । ज्योतिष्टोमप्रकरणे पठितमिदं विधिद्वयम् । प्रकरणाद्विच्छिद्यान्यत्र नयनं न समुचितम् । ज्योतिष्टोमस्य प्रयोगद्वयं वर्तते—नित्यः काम्यश्च । तत्र नित्यप्रयोगे यथाशक्त्यनुष्ठानम्, काम्यप्रयोगे च सर्वाङ्गोपसंहार इति यावज्जीवाधिकरणे स्थितम् । षष्ठतृतीयाद्याधिकरणेऽशक्यकतिपयाङ्गानां

त्यागेऽपि नित्यप्रयोगोऽनुमन्यत इति न्यायः प्रदर्शितः। ज्योतिष्टोमस्य क्लेशबहुद्रव्यव्ययसाध्यत्वादेको यजमानः यदि क्लेशं द्रव्यव्ययञ्च सोढुमशक्तो भवेत् तर्हि द्वाभ्यां बहुभिर्वा मिलित्वा कर्तुं शक्नुयादिति द्वित्वबहुत्वविधिः प्रकरण एव निवेष्टुं प्रभवति। काम्यप्रयोग एव सर्वाङ्गोपसंहार आवश्यकः। अतः प्रकरणाद्वित्वबहुत्वविधेर्नोत्कर्ष इति प्राप्ते,

सिद्धान्तः—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र कर्तृगामिनी एकत्वसङ्ख्या कर्तृपरिच्छेदेन भावनाङ्गम्। भावना च विधीयते। विधेयगता च सङ्ख्या विवक्षिता भवतीति पश्वेकत्वन्यायेन सिद्धम्। पुरुषप्रयत्नसाध्यं यच्चोद्यते तद्विषय एव यथाशक्त्युपबन्धः। सङ्ख्या तु न पुरुषप्रयत्नसाध्या। अतश्चैकमेव यजमानमधिकृत्य यथाशक्त्युपबन्धः प्रवर्तते, एको यथाशक्ति कुर्यादिति। तस्माद् ज्योतिष्टोमे यजमानद्विबहुत्वासम्भवात् द्विबहुत्वसंयुक्ते क्रतौ कुलायादौ द्विबहुप्रतिपद्विधानमुत्कृष्यते॥

## १५. जाघन्यधिकरणम्

दर्शपूर्णमासयोः 'जाघन्या पत्नीस्संयाजयन्ति' इति श्रुतम्। जाघनी पशोःपुच्छं कथ्यते। पत्नीसंयाजे सोमः त्वष्टा देवानां पत्नी अग्निर्गृहपतिरिति देवताः पत्नीशब्देन सृष्टिन्यायेन विवक्षिताः। पत्नीरिति द्वितीया सम्प्रदानार्थे। अत्र सन्देहः—किं जाघनीमुद्दिश्य संस्करतया पत्नीसंयाजा विधीयन्ते? अथवा पत्नीसंयाजोद्देशेन जाघनी विधीयत इति। प्रथमकोटौ संस्कार्यतया जघनी यत्र वर्तते तत्र पत्नीसंयाजानामुत्कर्षः; द्वितीयकोटौ च दर्शपूर्णमासयोरेवापणस्थां जाधनीं सम्पाद्य तया पत्नीसंयाजाः कर्तव्याः; पत्नीसंयाजानां नोत्कर्ष इति फलफलिभावः। तत्र जाधनीसंस्कारविधिरयं संस्कार्यानुसारेणाग्नीषोमीयपशावुत्कृष्यते। यद्यपि 'जाघन्या' इति तृतीयया जाघन्या गुणत्वं प्रतीयते न प्राधान्यम् तथापि जाघन्या एकदेशावयववाचित्वेन 'उत्तरार्धात्स्विष्टकृते समवद्यति' इतिवत् द्रव्यान्तराप्रयोजकतया यत्रायमेकदेशः तत्र तत्संस्कारतया निवेशोपपत्तेः। तृतीया तु व्यत्ययेन नेतुं शक्यते। तस्मात्पत्नीसंयाजानाम् अग्नीषोमीयपशोर्निष्पन्नजाघनीप्रतिपत्तिरूपेण प्रकरणं बाधित्वोत्कर्ष इति पक्षे प्राप्ते,

सिद्धान्तः——'पत्नीस्संयाजयन्ति' इत्युत्पत्तिवाक्यविहितपत्नीसंयाजानां द्रव्यापेक्षायां जाघनीवाक्येनापेक्षितद्रव्यविधानमुचितम् 'उत्तरार्धात्स्विष्टकृते समवद्यति' इत्यत्रोत्तरार्धशब्दोऽवयववचनो भवितुमर्हति, तत्रावयविनः पुरोडाशस्य सत्त्वात्, तद्वत्प्रकृतदर्शपूर्णमासयोरवयवी पशुर्नास्ति येनायमवयववाची स्यात्। प्रत्युत जाघनीशब्दो जातिवचनः, नावयववचनः। ततश्चाग्नीषोमीयपशुज्ञानाभावेऽपि जाघनी ज्ञातुं शक्यत इति जाघनीशब्दस्य निरपेक्षवृत्तित्वम्। तथा च कस्यचित्प्राणिनो जाघनीमापणादितस्सम्पाद्य पत्नीसंयाजाः कर्तव्याः, न जाघन्या उत्कर्ष इति॥

## १६. सन्तर्दनाधिकरणम्

श्रुतिप्रकरणयोर्विरोधाविरोधचिन्तां परिसमाप्याधुना वाक्यप्रकरणयोर्विरोधाविरोधविचारः क्रियते। 'हनू वा एते यज्ञस्य यदधिषवणे न सन्तृणत्ति' इत्यसन्तर्दनं विधाय 'अथो खलु दीर्घसोमे सन्तृद्येत् धृत्यै' इति ज्योतिष्टोमे श्रूयते। सोमलतातो रसनिष्पीडनार्थमधिषवणनाम्ना द्वे फलके यज्ञस्य हनुस्थाने भवतः। अतोऽनयोस्सन्तर्दनं-कीलेन द्रढीकरणं न कुर्यात्। दीर्घसोमे परं सन्तृद्येत्-अभिषवयोग्यदाढर्याय द्वयोर्विश्लेषणं यथा न स्यात्तथा कुर्यादित्यर्थः। तदिदमसन्तर्दनं सन्तर्दनञ्च किं प्रकृतिभूते ज्योतिष्टोम एव विकल्पेन निविशतः? उत सन्तर्दनस्यान्यत्रोत्कर्षः? इति संशयः। तदर्थं 'दीर्घसोम' शब्दार्थो निर्णेतव्यः—किं दीर्घस्य सोम इति षष्ठीसमासो वा उत दीर्घश्चासाविति कर्मधारयो वेति। तत्र यजमानगत दैर्घ्यम् यजमानकर्तृककर्मगतदैर्घ्यं वाऽऽश्रित्य प्रकृतावेव दीर्घसोमत्वोपपत्तेः न प्रकरणात्सन्तर्दनस्योत्कर्षः। अतस्सन्तर्दनासन्तर्दनयोर्ज्योतिष्टोमे विकल्प इति पक्षे प्राप्ते,

सिद्धान्तः——षष्ठीसमासाङ्गीकारे दीर्घशब्दस्य यजमानगतदैर्घ्ये यजमानकर्तृककर्मगतदैर्घ्ये वा लक्षणापत्तिः, तदपेक्षया कर्मधारयो बलीयान्। इष्ट्याद्यपेक्षया सोमे विद्यमानस्य दैर्घ्यस्य बोधने व्यर्थविशेषणत्वम्। द्विरात्रादौ उक्थ्यादिसंस्थासु वा प्रदानविवृध्या सोमवृद्धेस्सत्वात् दीर्घशब्दोपपत्तिः, 'धृत्या' इत्यर्थवादसङ्गतिश्च भवेताम्।

अतः प्रकरणं बाधित्वा वाक्येन द्विरात्रादौ उक्थ्यादिसंस्थासु च सन्तर्दनस्योत्कर्ष इति ॥

## १७. प्रवर्ग्याधिकरणम्

ज्योतिष्टोमे श्रूयते–'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति प्रवर्ग्यनिषेधः। निषेधोऽयं किं ज्योतिष्टोमाङ्गम् उत ज्योतिष्टोमीयप्रथमप्रयोगाङ्गम् ? इति सन्देहः। तत्र प्रथमयज्ञ इत्यत्र प्रथमशब्दो यज्ञपदसमानाधिकरणस्सन् ज्योतिष्टोमप्रथमप्रयोयवाचकः कथं स्यात् ? लक्षणया यज्ञशब्दस्य प्रयोगबोधकत्वं वक्तव्यम्। तदपेक्षया प्रथमयज्ञशब्दः 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टिमो य एतेनानिष्ट्वाथान्येन यजेत गर्तपत्यमेव तत्' इति वाक्यान्तरबलेन ज्योतिष्टोमावगमक इत्यङ्गीकारे लक्षाया अप्रसक्तेः। तस्माद् वाक्यानुगृहीतात्प्रकरणात् ज्योतिष्टोमाङ्गं प्रतिषेध इति प्राप्ते,

सिद्धान्तः––प्रथमशब्दः पूर्वमप्रवृत्तस्य कर्तुः आद्यप्रवृत्तौ मुख्यः। तादृशप्रवृत्तिविषयतया ज्योतिष्टोमे लाक्षणिकः। आद्यप्रवृत्तिर्नामाद्यानुष्ठानात्मकः प्रयोगः। कस्य प्रयोग इति जिज्ञासायां प्रकरणाज्ज्योतिष्टोमस्येति ज्ञातुं शक्यते। अतो ज्योतिष्टोमप्रथमप्रयोगाङ्गं प्रतियेधः। प्रकरणात् क्रत्वङ्गं प्रतिषेधो भवत्विति विसंवादे वाक्यात्प्रकरणस्य बाधितत्वात् प्रथमप्रयोगाङ्गमेव प्रतिषेध इति निश्चेतुं शक्यते। यदुक्तं 'एष वाव प्रथमो यज्ञो यज्ञानाम्' इति वाक्यान्तरेण प्रथमयज्ञशब्दो ज्योतिष्टोमनामधेयमिति, एवं प्रथमयज्ञशब्दस्य नामधेयत्वे द्वितीयादिवारं ज्योतिष्टोमेऽनुष्ठीयमाने प्रथमयज्ञ इति प्रयोगापत्तेः। तस्मात्प्रतिषेधोऽयं ज्योतिष्टोमप्रथमप्रयोगाङ्गम् ॥

## १८. पौष्णपेषणाधिकरणम्

दर्शपूर्णमासयोः प्राशित्रं[1] प्रकृत्य श्रूयते–'पूषा प्रपिष्टभागः' इति। तनिदं पूषभागस्य पेषणं किं प्रकृतौ दर्शपूर्णमासयोर्निविशते ? उत विकृतौ ? इति सन्देहे दर्शपूर्णमासयोराम्नातत्वेन प्रकृतावेव निविशते।

---

१. प्राशित्रं ब्रह्मणो भागो भक्षणार्थं 'पुरोडाशस्य मस्तकाद्यवमात्रं पिप्पलमात्रं वाऽवद्यति' इत्यवदाय 'ब्रह्मणे प्रहरति' इति विध्यनुसारेण दीयते।

ननु दर्शपूर्णमासयोः पूष्णो देवतात्वाभावात् कथं निवेश इति चेत्, पोषयतीति व्युत्पत्त्या पूषन्शब्दस्याग्न्यादिदेवतापरत्वमङ्गीकृत्य निवेशे विरोधाभावादिति पक्षे प्राप्ते,

सिद्धान्तः--प्रकृतौ पूषदेवताककर्मणोऽविधानात् दन्तरहितदेवताविशेषे पूषन् शब्दस्य रूढत्वाद्यौगिकव्युत्पत्त्याऽग्न्याद्यभिधायित्वानुपपत्तेः मुख्यार्थालाभे एव गौणार्थस्य परिग्रहात् यत्र विकृतौ पूष्णो देवतात्वं तत्रास्योत्कर्षो न्याय्यः। अस्ति च 'पौष्णं चरुं निर्वपति' इति विहितं पूषदेवताकं कर्म। पौष्णम् इति पूषशब्दात् 'तस्येदम्' इत्यनुशासनेनाण् प्रत्ययान्तं पदम्। पेषणञ्च पौष्णद्रव्यसम्बन्धि भवति। अतस्तत्रैवास्य पेषणस्योत्कर्षः प्रकरणञ्च वाक्याद्दुर्बलम् इति वाक्यात्प्रकरणबाधो युक्तः। तस्माद्विकृतौ पेषणस्योत्कर्षः॥

## १९. चरावेव पेषणस्य निवेशाधिकरणम्

पूषदेवताकपशुद्रव्यकयागोऽपि 'पौष्णं श्याममालभेतान्नाद्यकामः' इति विहितः पौष्णः कथ्यते। एवं 'यद्दैवत्यः पशुः तद्दैवत्यः पुरोडाशः' इति विहितः पशुपुरोडाशयागोऽपि पौष्णो भवति। चरुद्रव्यकयागोऽपि 'पौष्णं चरुं श्यामो दक्षिणा' इति विहितः पौष्णो भवति। किमेतेषु सर्वेषु विकृतियागेषु पेषणस्य निवेशः? उत चरावेव इति संशये सर्वेषु पशुपुरोडाशचरुषु पौष्णत्वस्य सत्त्वात् 'अदन्तको हि' इति हेतुवादस्य समन्वयात् अविशेषेण सर्वार्थं पेषणम् इति पक्षे प्राप्ते,

सिद्धान्तः--पौष्णपेषणं चरावेव, न पुरोडाशे नापि पशौ। पुरोडाशे पेषणमर्थादेव प्राप्तं न तत्र विधेरावश्यकता। विना पेषणेन पुरोडाशनिर्माणासम्भवात्। पशौ पेषणं विप्रतिषिद्धम्। पशुस्तु हृदयादीनामवदानसंस्कृतद्रव्याणां साकाराणां प्रकृतिद्रव्यम्। अतः पशौ पेषणं न भवितुमर्हति। तदीयहृदयादीनां पेषणे हृदयाद्याकारस्य विप्रतिषेधस्स्यात्। ननु हृदयादीनि पिष्ट्वाऽनन्तरं तत्तदाकारं सम्पाद्य देवतायै दीयतामिति चेन्नैवम्, प्रत्येकं हृदयादीनां पशौ देशः क्लप्तः, तस्मात्तस्माद्देशादवदाय देवतायै हृदयादिकं देयम्। पेषणे क्रियमाण अस्माद्देशादिदं उत्कृत्तमिति परिज्ञानं न स्यात्। तस्माद्पौष्णचरावेवाप्राप्तं पेषणं विधीयते॥

## २०. पेषणस्यैकदेवत्ये निवेशाधिकरणम्

राजसूये केवलपूषदेवताकचरुद्रव्यकयागः देवतान्तरसहितपूषदेवताकचरुद्रव्यकयागोऽपि विहितः। तत्र 'पूषा प्रपिष्टभागः' इति देवतान्तरसहितपूषदेवताकयागेऽपि प्रवर्तते ? उत केवलपूषदेवताकयाग एवेति संशये सद्वितीयेऽपि पूषणि पेषणं भवेत् पेषणस्य स्वरूपेण पूषप्रयुक्तत्वात्। पेषणे निमित्तं पूषा, न देवतात्वेन; 'पूषा प्रपिष्टभाग इत्येतवन्मात्रं निमित्तम् नात्र तद्धितान्तत्वमस्ति। तथा च सोमापौष्णे चरौ पूष्णस्तद्धितवशेन व्यासज्य देवतात्वे सत्यपि स्वरूपेण सद्भावात् पेषणं स्यादेव। किञ्च पूष्णः प्रपिष्टभागत्वे हेतुः दन्तराहित्यम्। स च हेतुः देवतान्तरसहितस्य पूष्णो नास्ति इति वक्तुं न शक्यते। देवतान्तरसाहित्यमात्रेण पूष्णो दन्ता जायन्ते इति कथनं साहसमात्रम्। प्राशित्रभक्षणेन पूष्णो दन्ताः पतिता इति यादृशो वाक्यशेषो वर्तते न तादृशः सद्वितीयस्य पूष्णो दन्ता जाता इति वाक्यशेषो दृश्यते। तस्मात् सद्वितीयपूषदेवताकचरावपि पेषणं स्यादेवेति पक्षे प्राप्ते,

सिद्धान्तः—'पूषा प्रपिष्टभागः' इत्यत्र केवलस्य पूष्ण एव निर्देशेन पेषणं श्रूयते। तच्च यदि सद्वितीयपूषदेवताकस्थले 'सोमापौष्णं चरुं निर्वपेत्' इत्यत्र पेषणं क्रियेत तदा सर्वस्य द्रव्यस्य पेषणं न कर्तुं शक्यते, सोमस्य देवताया चरुशब्दवाच्यौदनस्य लोपस्स्यात्। द्रव्यार्धांशस्य पेषणमर्धान्तरस्यौदनसम्पादनमित्येवं स्वीक्रियेत, तदा एकस्यां स्थाल्यां पाकेकर्तव्ये पिष्टतण्डुलयोः पाकेन पार्थक्यं विलीनं स्यात्। पात्रभेदेन पाकः कर्तुं न शक्यते, चरोर्यागं प्रत्युपादेयत्वेन 'चरुम्' इत्यत्रैकत्वसङ्ख्याया-विवक्षितत्वात्। पात्रभेदे सति तद्विरुद्धं स्यात्, चरोरेकत्वे पात्रैकत्वस्य नियामकत्वात्। यदुक्तमदन्तकत्वं हेतुरिति तत्रोच्यते—पेषणेऽदन्तकत्वं न हेतुः, हेत्वधिकरणे प्रशंसापरत्वेन हेतुवादो नीतः, केवलपूषदेवताकयागस्य प्रशंसापरकतया हेतुर्नेतव्यः। तस्मात् केवलपौष्णयाग एव पेषणमिति ॥

इति तृतीयाध्यायस्य तृतीयः पादः



## तृतीयाध्यायस्य चतुर्थः पादः

### १. निवीताधिकरणम्

अस्मिन्नपि पादे विनियोजकप्रमाणानां श्रुतिलिङ्गादीनां विरोधाविरोधविचारः क्रियते। पूर्वस्मिन् पादे श्रुतिप्रकरणयोर्विरोधाविरोधश्चिन्तितः। अस्मिश्च पादे प्रमाणान्तरैः श्रुतेः विरोधाविरोधविचार इति पादान्तरत्वम्। तत्र दर्शपूर्णमासयोः 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते' इति श्रुतम्। तत्र निवीतं मनुष्याणाम्' इत्यत्र विधिर्वा अर्थवादो वेति विचारः। विधिपक्षेऽपि किं शुद्धमनुष्यधर्मः? उत कर्मधर्मः? अथवा कर्मयुक्तमनुष्यधर्मः? आहोस्वित् दर्शपूर्णमासयोः प्रकरणे यन्मानुष्यप्रधानकर्मान्वाहार्यपचनादिकं कर्म तस्य धर्मः? यद्वाऽप्रकरणे यन्मानुष्यप्रधानकर्मातिथ्यादिकर्म तद्धर्म इति संशयः।

तत्र 'निवीतं मनुष्याणाम्' इति षष्ठयन्तशब्दस्य मनुष्यप्रधानत्वावगमात् निव्यानेन मनुष्यान् संस्कुर्यादिति वचनव्यक्तिर्भवति। निवीतं नाम गलावलम्बि कर्णावसक्तं वा सूत्रम् अजिनं वासो वा कथ्यते। इदं प्रमाणान्तरेण न प्राप्तम्। कदाचित्प्राप्तत्वेऽपि पुरुषार्थतया नियमो भवितुमर्हति। अथवा दर्शपूर्णमासप्रकराणाम्नातत्वेन कर्मधर्मो भवतु। भावनाया इतिकर्तव्यताकाङ्क्षायां यथा प्रयाजादीनामन्वयस्तथा निवीतस्यान्वयात्कर्मधर्मः। ततश्च कर्मानुष्ठानावसरे यजमानो ऋत्विजश्च निवीतिनो भवेयुः। अथवा क्रतुयुक्ताध्वर्युधर्मः। यजुर्वेदसमाम्नातत्वेन तत्राध्वर्योः प्रधानत्वात्तद्धर्मः। अथवा दर्शपूर्णमासयोः मनुष्यप्रधानकमन्वाहार्यपचनं कर्म विहितम्। ऋत्विग्भ्यो दक्षिणात्वेन देयं यदोदनं तस्य दक्षिणाग्नौ पाको भवति। सोऽन्वाहार्यपचनः कथ्यते। तद्धर्मो निवीतम्। अथवा प्रकरणाद्बहिः यद् गुर्वतिथीनां पूजनं भवति तद्धर्मः। एवं पक्षेषु प्राप्तेषु,

सिद्धान्तः—'निवीतं मनुष्याणाम्' इत्यस्य विधित्वमङ्गीकृत्येमे पक्षाः, वस्तुतस्तु नायं विधिः किन्त्वर्थवादः। विधित्वञ्चेत्तत्कीदृशमिति

कृत्वाचिन्तारूपेणेमे पक्षाः प्रवृत्ताः। 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इत्युपवीतं विधीयते। तस्य स्तुत्यर्थं 'देवलक्ष्ममेव तत्कुरुते' इति प्रवृत्तम्। दैविकेषु कर्मसूपवीतं चिह्नम्। एवमुपवीतं स्तोतुं निवीतादि-वाक्यमपि प्रवृत्तम्। 'यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा' 'विपरीतं प्राचीनावीतम्' 'संवीतं मानुषम्' इत्यादिवचनं तैत्तिरीयादिशाखासु प्रत्यक्षम्। एवं प्राप्तान्युपवीतप्राचोनावीतसंवीतान्यनूद्यन्ते 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानाम्' इति। अनुवादत्वात्स्तु-तिपरोऽर्थवाद इति॥

## २. उपवीताधिकरणम्

दशपूर्णमासयोः श्रुतमुपवीतं किं सर्वकर्माङ्गम्? उत दर्शपूर्णमा-साङ्गमिति संशये, सर्वकर्माङ्गम्। तत्र हेतुः—मृताग्निहोत्रे 'प्राचीना-वीती दोहयेत् यज्ञोपवीती हि देवेभ्यो दोहयति' इति श्रुतं वाक्यम्। जीवदवस्थायामाहिताग्निना यजमानेनाग्निहोत्रमारब्धम्। सायं प्रात-रग्निहोत्रमनुतिष्ठन् स यजमानो दिष्टङ्गतः। दिष्टङ्गतस्य तस्याहिते-नाग्निना संस्कारः कर्तव्यः पुत्रादिना। संस्कारात्पूर्वमग्निहोत्रार्थं दोह-नमग्निहोत्र्याः कर्तव्यम्। तत्रायं विधिः—'प्राचीनावीती दोहयेत् यज्ञोप-वीती हि देवेभ्यो दोहयति' इति। दोहने प्राचीनावीतविधानाद् ज्ञायते यदिदं दोहनं पैतृकमिति। यदीदमुपवीतं सर्वकर्माङ्गम् तदाऽस्यानुवादः 'यज्ञोपवीती हि देवेभ्यो दोहयति' इत्यनेन कर्तुं शक्यते यतो हि जीवद-ग्निहोत्रस्याग्निसूर्यादिदेवताकत्वात्। यदि चोपवीतं दर्शपूर्णमासाङ्गं तर्हि अग्निहोत्रे उपवीतस्य प्राप्त्यभावादनुवादो नावकल्पेत, अग्निहोत्रस्य दर्श-पूर्णमासविकृतित्वाभावात्। उपवीतस्य सर्वकर्माङ्गत्वे जीवाग्निहोत्रेऽपि तस्य प्राप्तिरिति 'यज्ञोपवीती हि' इत्यस्य सिद्धवदनुवादो घटते। अतो दर्शपूर्णमासप्रकरणं बाधित्वोपवीतस्य सर्वकर्माङ्गत्वमिति पक्षे प्राप्ते,

सिद्धान्तः—प्रकरणादुपवीतं दर्शपूर्णमासाङ्गमेव न सर्वकर्माङ्गम्। 'यज्ञोपवीती हि देवभ्यो दोहयति' इति दार्शपूर्णमासिकदोहनमेवानुवदति, अनुवादः प्राप्तिसापेक्षः, प्राप्तिश्च सन्निकृष्टाभावे विप्रकृष्टविषयोऽपि भवितुमर्हति। नन्वग्निहोत्रे देवताबहुत्वाभावात् कथं 'देवेभ्यः' इति

बहुवचनमिति चेन्मैवम्, प्रजापतिदेवतामादाय बहुत्वोपपत्तेः । तस्माद्दर्शपूर्णमासाङ्गतयैवोपवीतविधिरिति ॥

## ३. उपवीतविध्यधिकरणम्

'उपव्ययते' इत्यनुवादो वा विधिर्वेति संशयः । 'नित्योदकी नित्ययज्ञोपवीती' इति स्मृतिमूलश्रुत्या पुरुषार्थतया यज्ञोपवीतं विहितम् । एवं 'यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा' इति श्रुत्या क्रत्वर्थतया विहितमुपवीतमपरम् । उभयविधस्य यज्ञोपवीतस्य 'उपव्ययते' इत्येतदुभय विधस्यानुवादकमिति पक्षे प्राप्ते;

सिद्धान्तः—'उपव्ययते' इत्येषो विधिरेव, नानुवादः । अनुवादस्य किं प्रयोजनं स्यात् ? नानुवादेन कश्चन गुणस्समर्प्यते, नापि स्तुतिः क्रियते तादृशगुणस्यानुपलम्भात् स्तोतव्यस्य च कस्यचनाभावात् । यदुक्तमन्यतः प्राप्तस्यानुवाद इति तन्मन्दम्, स्मृतिमूलश्रुत्या प्राप्तमनुवदति 'उपव्ययते' इति श्रुतिरिति कीर्तनं न युक्तियुक्तम् । यच्च 'यज्ञोपवीत्येवाधीयीत' इत्युपवीतं प्राप्तं तद् मनुष्यप्रधानान्वाहार्यपचने प्रोक्षणीशेषनिनयने पित्र्ये कर्मणि प्राप्ताभ्यां निवीतप्राचीनावीताभ्यां बाधितमिति तत्प्रतिप्रसवार्थं 'उपव्ययते' इति विधिर्वक्तुं शक्यते । अस्यैवोपवीतस्य विधितः प्राप्तस्य 'यज्ञोपवीती हि देवेभ्यो दोहयति' इत्यनुवाद इति ॥

## ४. उदक्त्वाधिकरणम्

मृताग्निहोत्रे श्रूयते—'ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान् करोति' इति । पुरा-जीवदग्निहोत्रे ये दर्भा उदञ्चः—उदगग्रा आसन् तान् मृताग्निहोत्रे दक्षिणाग्रान् कुर्यादित्यर्थः । अत्र 'ये पुरोदञ्चः' इति किं विधिः ? उतानुवादः ? इति संशये-मृताग्निहोत्रे 'तान् दर्भान्' इत्यादिना दक्षिणाग्रत्वं यथा विधीयते तथा 'ये पुरोदञ्चः' इति जीवदग्निहोत्रे उदगग्रत्वं विधीयते । ननु 'प्रागग्राण्युदगग्राणि वा' इति स्मृत्योदगग्रत्वस्य प्राप्तौ सत्यां विधेः किं प्रयोजनमिति चेन्मैवम्; श्रुतेः स्मृतिप्राप्तानुवादत्वासम्भवात् । स्मृत्या मूलभूतश्रुतिकल्पनेन स्मृतेः प्रामाण्यं वक्तव्यम् । तत्रेयमेव श्रुतिर्मूलं भवतु । ततश्च 'ये पुरोदञ्चः' इति

विधिरेव भवति, नानुवादः। अस्मिन् वाक्ये विधिप्रतिबन्धकयच्छब्दो पबन्धे सत्यपि वाक्यभेदेन विधिद्वयमास्थेयम्। जीवदवस्थायां प्रक्रान्तेऽग्निहोत्रे ये दर्भास्ते उदगग्राः कर्तव्या इत्येको विधिः। अपरश्च ये पुरोदञ्चो दर्भाः परिस्तीर्णाः तान् दक्षिणाग्रान् कुर्यादिति। ततश्चायं विधिरेव नानुवाद इति पक्षे प्राप्ते,

सिद्धान्तः—'ये पुरोदञ्चो दर्भांस्तान्' इति वाक्यस्य यत्तच्छब्द घटितत्वेन प्राप्तस्योदग्रत्वस्यानुवादोऽयं न विधिः 'प्रागग्राण्युदगग्राणि वे' ति स्मृत्योदगग्रत्वस्य प्राप्तत्वात्। 'ये पुरोदञ्चः' इति श्रुतिः जीवदग्निहोत्रमात्रविषया सर्वसाधारणविषयायाः स्मृतेर्मूलं न भवितुमर्हतीति स्मृतेर्मूलं कल्पनीयमेव। तस्मिन् कल्पिते तादृशमूलेनोदगग्रत्वस्य प्राप्तत्वात् विधिप्रतिबन्धकयत्तच्छब्दघटितस्यानुवादत्वं सुतरां सिध्यति, स्वरसतः प्रतीयमानमेकवाक्यत्वञ्च सिद्धं भवति। तस्माद् 'ये पुरोदञ्चः' इत्यनुवाद एव न विधिरिति ॥

## ५. उपरिधारणाधिकरणम्

मृताग्निहोत्रे श्रूयते—'अधस्तात्समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति' इति। 'गार्हपत्ये हवींषि श्रपयति' इति विधिना सर्वेषां हविषां श्रपणं गार्हपत्याग्नौ भवति। अग्निहोत्रहविषः पयसोऽपि श्रपणं गार्हपत्ये। गार्हपत्यप्रदेशात्तद्धविराहवनीयसमीपमानेतव्यं होमार्थम्। अर्थात् गार्हपत्यदेशे स्थितं हविर्जुह्वामुन्नीयाहवनीयं प्रत्यानयति होमकर्ता। तत्र मृताग्निहोत्रे जुहूबिलस्याधस्तात् काञ्चन समिधं धारयन् आहवनीयसमीपं नयेत् इति 'अधस्तात्समिधं धारयन्ननुद्रवेत्' इत्यस्यार्थः। अत्र हेतुः प्रतिपाद्यते—'उपरि हि देवेभ्यो धारयति' इति। हि यस्मात्कारणात् देवेभ्यस्तादृशीं समिधमुपरि धारयतीति। उपरिधारणमिदमाचारतस्सिद्धम् पयोदध्यादिकेऽन्यत्र नीयमाने केनचनाच्छादकेनाच्छाद्यैव नीयत इत्याचारः। अत एव समिध उपरि धारणमाच्छादनकार्यकारि जीवदग्निहोत्रे 'उपरि हि देवेभ्य' इति वाक्य मनुवदति। मृताग्निहोत्रे विहितमधस्ताद्धारणं स्तोतुमिति पक्षे प्राप्ते,

सिद्धान्तः—जीवदग्निहोत्रे 'उपरि हि देवेभ्यो धारयति' इति

विधिरुपरिधारणं विधत्ते। आचारात्प्राप्तं धारणमिदं वाक्यमनुवदतीति कथनापेक्षया आचारात्प्राप्तस्य धारणस्येदं मूलमिति कथनं न्याय्यम्। एतद्विध्यभावे 'स्रुग्दण्डे समिधमुपसङ्गृह्य जुहोति' समिधः कृत्स्नाया स्रुग्दण्ड एव धारणं भवेत्, न तु हविरुपरि। ततश्च समिधाऽऽच्छादनमत्यन्ताप्राप्तमिति तद्विधिरयम्। 'धारयति' इति लेट्कल्पनेन विधायकत्वं सिध्यति। हिशब्दश्च प्रसिद्धिद्योतकः, न हेतुसमर्पकः। एवञ्चोपरिधारणविधौ स्वीकृते समिधो मुलांशस्य बिलसमीपप्रदेशे मध्यांशस्य बिलप्रदेशे च धारणमिति सिध्यति। अतएवाच्छादनरूपत्वमपि साधितं भवतीत्युपरिधारणविधिरेवायमिति॥

## ६. दिग्विभागाधिकरणम्

ज्योतिष्टोमे 'प्राचीनवंशं करोति' इत्याम्नाय 'देवमनुष्या दिशो व्यभजन्त प्राचीं देवाः दक्षिणां पितरः, प्रतीचीं मनुष्याः, उदीचीं रुद्राः यत्प्राचीनवंशं करोति देवलोकमेव तद्यजमान उपावर्तत' इति श्रुतम्। तत्र 'प्राचीनवंशं करोति' इत्यस्य विधित्वं सिद्धम्। यस्य मण्डपस्योपरि वंशाः प्रागग्रा भवन्ति स मण्डपः प्राग्वंशः प्राचीनवंश इति कथ्यते। दिग्विभागवाक्ये 'प्रतीचीं मनुष्याः' इत्यत्र सन्देहः—किमिदं वाक्यं विधायकम्? उत स्तावकमिति। विधायकत्वे मनुष्याः प्रतीचीं विभजेयुरिति विधेराकारस्स्यात्। देवादीनां कर्मस्वनधिकाराद्विभागप्रसक्तिर्नास्ति। मनुष्याणामधिकारसत्वाद्विधिकोटेरुत्थितिः। किञ्च पुराकल्परूपेण प्रवृत्तस्यास्य वाक्यस्यार्थवादत्वात् अर्थवादस्य विना विधिना स्वरूपलाभाभावाद्विधित्वमस्य स्वीकर्तव्यमिति पक्षे प्राप्ते,

सिद्धान्तः——प्राचीनवंशविधायकवाक्येनास्यैकवाक्यतायां सत्यां पृथग्विधित्वस्वीकारे प्रयोजनाभावात् निवीताधिकरणन्यायेन स्तावकत्वमेवास्योचितमिति तदधिकरणन्यायातिदेश एवात्र कृतः॥

## ७. परुषिदिनाधिकरणम्

महापितृयज्ञे 'यत्परुषि दितं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत्समूलं तत्पितृणाम् समूलं वर्हिर्भवति व्यावृत्त्यै' इति श्रुतम्। 'परुषि' पर्वणीत्यर्थः। 'दितं' दोऽवखण्डने खण्डितं लूनमित्यर्थः। 'अन्तरा' मूल-

पर्वणोर्मध्य इत्यर्थः । तत्रैव श्रुतम्—'यत्पूर्णं तन्मनुष्याणाम्, उपर्यर्धो वा देवानाम्, अर्धः पितृणाम्' इति । 'यत्पूर्णं' धान्यं तन्मनुष्यणामित्यर्थः । एवं ज्योतिष्टोमे श्रुतम्—'घृतं देवानाम्, मस्तु पितृणाम्, निष्पक्वं मनुष्याणाम्, तद्वा एतत्सर्वदेवत्यं यन्नवनीतं नवतीतेनाभ्यङ्क्ते' इति । अग्नौ विलीनमाज्यं घृतमित्युच्यते । स्वयं विलीनं मस्तु कथ्यते । 'निष्पक्वं' सुरभिवस्तुप्रक्षिप्य यत्पक्वं तन्निष्पक्वमुच्यते । तथा दर्शपूर्णमासयोः 'यो विदग्धः स नैर्ऋतः, योऽश्रृतः स रौद्रः, यः श्रृतः स सदेवः तस्मादविदहता श्रपयितव्यम्' इति । एतेषु वाक्येषु मनूष्यपदघटितस्थले सर्वत्र निवीताधिकरणवद्विधिरिति पूर्वपक्षः, स्तुतिरिति च सिद्धान्तः ।

### ८. कर्त्रधिकरणम्

दर्शपूर्णमासप्रकरणे 'नानृतं वदेत्' इति श्रूयते । निषेधोऽयं मनुष्यधर्मतया ( पुरुषार्थतया ) विधीयते ? उत क्रतुसम्बन्धिमनुष्यधर्मतयाऽनूद्यते ? अथवा केवलक्रत्वर्थतयाऽनूद्यते ? आहोस्वित् केवलक्रत्वर्थतया विधीयते ? इति चतुर्धा संशयः । तत्र मुनुष्यधर्मतया विधीयत इति प्रथमः पक्षः । 'नानृतं वदेत्' इत्यत्र धात्वर्थो वदनम् । आख्यातार्थश्च कर्ता 'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यनुशासनात् । वदेत् इति प्रथमपुरुषबलेन कर्तृविशेषसमर्पकप्रथमान्तपदसामानाधिकरण्यलाभाच्च-कर्तृवाचकत्वमाख्यातस्य निश्चीयते । तेन प्रत्ययार्थत्वेन कर्तुः प्राधान्यं गम्यते । तं प्रति धात्वर्थो वदनं गुणभूतं पुरुषार्थं पर्यवस्यति । अनृतवदनमिष्टसाधनतया परिगृह्य प्रवृत्तं पुरुषं ततो निवर्तयितुं तत्रानिष्टसाधनतां बोधयन् प्रवृत्तः प्रतिषेधः पुरुषस्यानिष्टमेव साधयति तदनृतवदनं पुरुषार्थतया प्रसक्तम्, तन्न तथा किन्तु तत्पुरुषस्यानिष्टसाधनमेवेति । यदर्थं प्रतिषेध्यं तदर्थ एव प्रतिषेधोऽङ्गीकर्तव्यः । प्रतिषेध्यः पुरुषार्थः, प्रतिषेधश्च क्रत्वर्थ इति वैरूप्यं न समञ्जसम् । ततश्च प्रतिषेध्यस्यानृतवदनस्य पुरुषार्थत्वमवगमयन्ती 'वदेत्' इत्येकपदश्रुतिः प्रतिषेधस्यापि पुरुषार्थत्वं बोधयन्ती प्रकरणबाधपुरस्सरमनृतवर्जनस्य पुरुषार्थत्वमेव साधयति । तस्मादनृतबदनप्रतिषेधः केवलमनुष्यधर्मः । क्रतुप्रकरणाद्बहिः यः प्रतिषेधः 'नानृतं वदेत्' इति स्मृतिसिद्धः तस्यायं प्रकरणान्तर्गतः प्रतिषेधो मूलम् । अतः केवलमनुष्यधर्मोऽयं प्रतिषेध इति प्रथमः पक्षः ।

क्रतुयुक्तमनुष्यधर्मो वाऽयं प्रतिषेधः । प्रकरणात्क्रतुसम्बन्धः प्रतिषेधस्य प्रतीयते, उक्तरीत्या पुरुषसम्बन्धोऽपि । श्रुतिप्रकरणयोरविरोधाय क्रतुयुक्तपुरुषधर्म इति स्वीकारे दर्शपूर्णमासावनुतिष्ठन् यजमानोऽनृतवदनं वर्जयेत् इत्यर्थः पर्यवस्यति । अस्मिन् पक्षेऽनृतवर्जनं (अनृतवदन प्रतिषेधो) न विधीयते, 'नानृतं वदेत्' इति नित्यसिद्धो यः प्रतिषेधस्सोऽनूद्यते, यतश्चोपनयनप्रभृति यावज्जीवं विहितमनृतवदनवर्जनं दर्शपूर्णमासयोरपि प्राप्तम् । क्रतुयुक्तपुरुषसंस्कारकत्वमस्य प्रतिषेधस्येति नेयं श्रुतिः स्मृतेर्मूलम्, अनुमितश्रुतिमूलकत्वमेव स्मृतेरिति वैषम्यम् ।

केवलक्रत्वर्थतयाऽनुवाद इति तृतीयपक्षोऽप्येवमुपपादनीयः--आख्यातवाच्यः कर्ता क्रियां प्रति गुणभूतः, कर्तुः कारकत्वेन क्रियागुणत्वस्यावश्यकत्वात् 'भावप्रधानमाख्यातम्' इति स्मरणाच्च तस्य गुणत्वम् । ततश्चैकपदश्रुत्या धात्वर्थस्य वदनस्याख्यातार्थेऽन्वयो न भवति तस्य प्रधानत्वात् आख्यातार्थस्य च गुणत्वात् । प्रधानस्य गुणेऽन्वयो न युज्यते । तथा च प्रकरणं साक्षादेव प्रतिषेधं क्रत्वर्थतया विनियुङ्क्ते, न पुरुषद्वारेति सिध्यति । स चायं प्रतिषेधः स्मृतिप्राप्तमनुवदति न विधीयते । पुरुषः पुरुषार्थतयाऽनृतवर्जनं कुर्वन् क्रतोरपि पुरुषार्थत्वात् तदानीं तद्वर्जनं क्रत्वर्थं सम्पद्यते । क्रतौ तद्बहिश्च स्मृतितः प्राप्तस्यानृतवर्जनस्य क्रत्वर्थतया प्रतिषेधश्रुतिरनुवाद इति पक्षेषु प्राप्तेषु,

सिद्धान्तः---केवलक्रत्वर्थतया प्रतिषेधोऽयं प्रवृत्तः प्राकरणिकः । प्रतिषेधोऽयं यथा प्रकरणात्क्रत्वर्थः, तथा प्रतिषेध्यस्यानृतवदनस्य क्रतुमध्ये द्रव्यार्जनं निमित्तीकृत्य प्राप्तिस्सम्भवति, प्राप्तस्य तस्यानृतवदनस्य क्रत्वर्थतया प्रतिषेध आवश्यकः । एतादृशनिषेधातिक्रमणे क्रतोर्वैगुण्यम्, पुरुषार्थतया प्राप्तानृतवदननिषेधस्यातिक्रमणे पुरुषः प्रत्यवायभाग्भवति क्रतोर्न वैगुण्यम् । अतः क्रत्वर्थतया निषेधः । प्रकरणगतानृतवदनवर्जन श्रुतिः अनृतवदनेन प्रत्यवायं तद्वर्जनेन च तत्परिहारं बोधयन्ती अप्राप्तक्रतुसंयोगार्थत्वान्न तस्या अनुवादता । अतः प्रतिषेधोऽयं क्रत्वर्थः ।

अत्रायं विषयविवेकः--अप्राकरणिकं प्राकरणिकञ्च द्विविधं 'नानृतं वदेत्' इति वाक्यमुपलभ्यते । तत्राप्राकरणिकस्य पुरुषार्थतया प्रवृत्तिः-

पुरुषोऽनृतवदनवर्जनं कुर्यादिति । प्रतिषेधातिक्रमणे पुरुषो नरकभाग्भवेत् अतस्तद्वर्जनं कुर्यादिति जानन् कश्चन पुरुषार्थतयाऽनृतवदनमाचरन् तेन यः प्रत्यवायस्तं प्रायश्चित्ताचरणेन परिहरिष्यामीति निश्चित्यानृत-वदनपूर्वकं द्रव्यमर्जयित्वा क्रतुमनुतिष्ठति, तदा क्रतोर्वैगुण्यं न प्रसज्यते । पुरुषः परं प्रायश्चित्तमाचरन् अनृतवदनजन्यं पापं परिहरति । यश्च क्रतुमध्ये क्रत्वर्थंद्रव्यार्जनविषयेऽनृतवदनमाचरन् द्रव्यमर्जयित्वा क्रतुमनु-तिष्ठेत् तदा क्रतोर्वैगुण्यं प्रसज्यते । न तु पुरुषार्थतयाऽनृतवदने । तत्र क्रत्वर्थतया प्रतिषेधस्यावश्यकता । सोऽयं प्राकरणिकः प्रतिषेधः क्रत्वर्थं इति ।

## ९. जञ्जभ्यमानाधिकरणम्

'जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति' इति दर्शपूर्णमासयोः श्रूयते । जभजृम्भणे यङन्तात्कर्तरि लटः शानच् प्रत्ययान्तो जञ्जभ्य-मानशब्दः । जृम्भणं कुर्वन् पुरुषो जञ्जभ्यमानः 'मयि दक्षक्रतू' इति मन्त्रं ब्रूयात् इत्यर्थः । अत्र त्रेधा संशयः । मन्त्रवचनमिदं किं केवलक्रतु-धर्मः ? उत केवलपुरुषधर्मः ? अथवा क्रतुयुक्तपुरुषधर्मः ? इति । तत्र पूर्वाधिकरणन्यायेन 'ब्रूयात्' इत्यत्र कर्तुरश्रवणात् प्रकरणप्रमाणेन केवलक्रतुधर्मः । 'ब्रूयात्' इत्यत्राख्यातस्य कर्तृवाचकत्वाभावेऽपि कर्त्राक्षेप-कत्वस्य सत्वात् 'जञ्जभ्यमानः' इत्यस्य कर्तृसमर्पकत्वात् केवलक्रतुधर्मत्वं न युक्तियुक्तम्, किन्तु पुरुषधर्म एवायम्; 'जञ्जभ्यमानः' इति शानचा कर्तुरभिधानात् । एवञ्च जञ्जभ्यमानशब्दस्य जृम्भणकर्तृवाचितया-मन्त्राभिधानमिदं वाक्योपात्तेन पुरुषेण संयुक्तं सत् प्रकरणं बाधित्वा प्रबलाद्वाक्यात्पुरुषधर्मत्वमेव प्रतिपद्यतेऽहीनाधिकरणन्यायेन । ज्योति-ष्टोमप्रकरणमुल्लङ्घ्य द्वादशोपसत्कत्वं वाक्यात् द्विरात्राद्यहीनेषु यथा निविशते तद्वत् । तस्मात्केवलपुरुषधर्म इति पक्षे प्राप्ते,

सिद्धान्तः—जञ्जभ्यमानस्य पुरुषस्य क्रतुयुक्तस्यैव मन्त्राभिधानं धर्मः । प्रकरणमितिकर्तव्यताकाङ्क्षालक्षणम् क्रतुयुक्तस्यैव पुरुषस्य जञ्जभ्यमानस्य वाक्योपकल्पितमन्त्रोच्चारणव्यापारयुक्तस्याकाङ्क्षापूर्व-कत्वेन गृह्णाति । यथा दर्शपूर्णमासौ तत्साध्यापूर्वसाधनतापन्नमेव

व्रीह्यादिद्रव्यं प्रोक्षणादिव्यापारमुखेन गृह्णीतः तद्वत्। प्रबलमित्येव वाक्यं न प्रकरणं बाधते, किन्तु सति विरोध एव। जञ्जभ्यमानवाक्यस्य प्राकरणिकपुरुषविषयत्वेनोपपत्तौ न वाक्यप्रकरणयोर्विरोधः। न च क्रतुयुक्तपुरुषधर्मत्वे फलकल्पनं स्यादिति वाच्यम्, पुरुषसंस्कारमुखेन क्रत्वर्थत्वाङ्गीकारान्न दोषः। यदुक्तमहीनाधिकरणन्यायेन वाक्यात्प्रकरणबाध इति तन्न; द्वादशोपसत्त्वम् अहीनसंयुक्तम्। अहीनश्चातिविप्रकृष्टम् ज्योतिष्टोमप्रकरणेन न गृह्यत इति प्रकरणादुत्कर्ष आश्रितः। प्रकृते च क्रतुयुक्तस्य पुरुषस्य लाभात् तद्विषयत्वेन मन्त्रोच्चारणमुपपन्नमिति न प्रकरणस्य बाधः। तस्मात्क्रतुयुक्तपुरुषसंस्कार एवेदं मन्त्रोच्चारणमिति ॥

## १०. अवगोरणाधिकरणम्

दर्शपूर्णमासयोः 'ब्राह्मणाय नावगुरेत न निहन्यात्' 'यो ब्राह्मणायावगुरेत तं शतेन यातयात्' इति श्रुतम्। नावगुरेत—हन्तुं नोद्युञ्जीत सोऽयं प्रतिषेधः किं क्रत्वर्थः ? उत पुरुषार्थं इति संशयः। 'कर्त्रधिकरणन्यायेन प्रकरणात् क्रत्वर्थः। पुरुषार्थत्वे फलकल्पनाप्रसक्तेः। न च 'योऽवगुरातै शतेन यातयात्, यो निहनत्सहस्रेण यातयात्' इत्यर्थवादादेव तत्प्राप्तिरिति वाच्यम्; यातनाया अनिष्टत्वेन फलत्वाभावात्। अतः प्रकरणात् क्रत्वर्थ इति प्राप्ते,

सिद्धान्तः—अवगोरणप्रतिषेधः पुरुषार्थः 'योऽवगुरातै शतेन यातयात्' इत्यादिवाक्यशेषे यच्छब्देन क्रतुतद्बहिर्विद्यमानपुरुषसाधारण्येन पुरुषमात्रस्य परामर्शात् तत्संयुक्तस्यैव प्रतिषेधस्य प्रतीयमानत्वात्। न च पुरुषार्थत्वे फलकल्पनायाः प्रसक्तिः, रात्रिसत्रन्यायेनार्थवादिकफललाभात्। नन्वार्थवादिकं फलं यातनारूपमिति चेन्न, शतयातनादिनिवृत्तेरवगोरणवर्जनसाध्यत्वावगमात् शतयातनादिनिवृत्तिमेवावगोरणनिषेधः फलत्वेन स्वीकरोति, न क्रतूपकारम्। तस्मात्प्रकरणं बाधित्वा वाक्यमवगोरणवर्जनं पुरुषार्थमिति बोधयति। किञ्चात्रत्यप्रकरणे शंयुनामको बृहस्पतेः पुत्रो देवैर्हव्यवहनाय प्रेरितो वरं वृणोति—मज्जातीयायाः प्रजायाः कीदृशमभीष्टं सिध्यतीति। एवं तदीयमाशयं

विदित्वा देवाः 'योऽवगुरातै शतेन यातयात्' इत्यादिवरान् देवा दत्त-वन्तः। तदिदं वरदानं क्रतुतद्बहिस्साधारण्येन ब्राह्मणजातिविषयम्। अतः केवलपुरुषधर्म एवायमवगोरणादिप्रतिषेधः॥

## ११. मलद्वाससा संवादनिषेधाधिकरणम्

'मलवद्वाससा न संवदेत' इति दर्शपूर्णमासयोः श्रूयते। मलवद्वासाः रजस्वला। किमयं प्रतिषेधः क्रत्वर्थः पुरुषार्थो वेति सन्देहः। पुरुषार्थत्वे फलसमर्पकस्यार्थवादादेरभावाद्विश्वजिन्न्यायेन फलकल्पनापत्तेः कर्त्र-धिकरणन्यायेन क्रत्वर्थोऽयं प्रतिषेधः। तथासति प्रकरणानुग्रहस्सिध्यति। ननु तया सह संवादस्य प्रसक्तौ तन्निषेध उचितः। किन्तु 'यस्य व्रत्येऽ-हन् पत्न्यनालम्भुका भवति तामपरुध्य यजेत' 'दैवे कर्मणि पित्र्ये च तामप्यपनयेत्ततः' इत्यादिश्रुतिस्मृतिवचनेभ्यः संवादप्रसक्तेरभावात् कथं प्रतिषेध इति चेन्न, व्रतग्रहणप्रभृति व्रतविसर्गपर्यन्तमेव तदपनयन-स्यावगमेऽपि व्रतग्रहणात्प्राक् यागसम्बन्धिद्रव्यानुमतिविषये एवं व्रत-विसर्गानन्तरं ब्राह्मणतर्पणोपयुक्तद्रव्यानुमतिविषये च संवादस्य प्रसक्तेः, 'नाशुचिः काम्यं तप आतिष्ठेत् न यजेत् न स्वाध्यायमधीयीतान्यत्राग्नि-होत्रदर्शपूर्णमासेभ्यः' इति स्मृत्यन्तरवचनेन 'दैवे कर्मणि' इति स्मृतेः तदन्यविषयत्वावगमात् संवादस्य प्रसक्तिरनुमन्यत इति प्रतिषेधप्रसक्तेः। ततश्च क्रत्वर्थ एव प्रतिषेध इति प्राप्ते,

सिद्धान्तः—नायं क्रत्वर्थः प्रतिषेधः, किन्तु पूर्ववत्पुरुषार्थ एव। 'तामपरुध्य यजेत' इत्यत्रापरोधः क्रतुव्यापारनिवर्तनरूपः। स चापरोधः साङ्गप्रयोगविषयः। 'अपरुध्य' इति ल्यपा पूर्वकालत्वमवगम्यते। ततश्चारम्भप्रभृति समाप्तिपर्यन्तं क्रतौ संवादस्य प्रसक्तिरेव नास्तीति क्रत्वर्थत्वेन प्रतिषेधस्य प्रसक्तिः कथम्? 'व्रत्येऽहन्' इत्यत्र नित्यकर्म-योग्यः कालो विवक्षितः। तेनानियतकर्मसु नायमपरोधविधिः प्रवर्तते इत्यापाततः प्रतीयते। किन्तु 'नास्या अन्नमश्नीयात्' 'अभ्यञ्जने वाव स्त्रिया अन्नम्' इत्युपरितनवाक्यपर्यालोचनेन सिद्धं भवति—यत्पुरुषार्थ-स्यापि तस्य-अभ्यञ्जनरूपान्नस्य सङ्गमरूपस्य न प्रसक्तिरस्ति; येन तस्य क्रतौ प्रतिषेधस्स्यात्। अतो 'नास्या अन्नमश्नीयात्' 'अभ्यञ्जने-

वाव स्त्रिया अन्नम्' इति वाक्यशेषसहितप्रतिषेधानुसारात् पुरुषार्थं एवायं प्रतिषेध इति ॥

## १२. सुवर्णधारणाधिकरणम्

'सुवर्णं हिरण्यं भार्यम्, सुवर्ण एव भवति' 'दुर्वर्णोऽस्य भ्रातृव्यो-भवति' इत्यनारभ्य श्रुतम् । किमिदं हिरण्यधारणं क्रत्वर्थम् ? उत-पुरुषार्थम् ? इति संशयः । प्रकरणानधीतमपि हिरण्यधारणं क्रत्वर्थम्, तस्य पुरुषार्थत्वाश्रयापेक्षया क्रतूपकारार्थत्वाश्रयणस्य ज्यायस्त्वात् । पुरुषार्थत्वे फलकल्पनागौरवम् । क्रत्वर्थत्वे क्रतुफलेनैवास्य फलवत्त्व-सम्भवाल्लाघवम् । ननु हिरण्यस्य जुह्वादिवदव्यभिचरितक्रतुसम्बन्धा-भावात् क्रतूपस्थापकशब्दाभावाच्च कथं क्रत्वर्थत्वं साधयितुं शक्यत इति चेत्, 'हिरण्यं दक्षिणा' 'आत्रेयाय हिरण्यं ददाति' इत्यादिना हिरण्यस्य क्रतुसम्बन्धावगमात् सुवर्णविशिष्टहिरण्यधारणेन क्रतुमुपकुर्यात् इति क्रतुसम्बद्धं हिरण्यं धारणेन संस्कुर्यात् इति वा, क्रतौ धार्यं यद्धिरण्यं तत्सुवर्णं कुर्यादिति वाऽऽश्रित्य क्रत्वर्थत्वोपपत्तेरिति पक्षे प्राप्ते,

सिद्धान्तः—प्रकरणाधीतस्य यथा क्रतूपकारकता तथा प्रकरणानधी-तस्यापि क्रतूपकारकत्वे स्वीकृते प्रकरणाप्रकरणाम्नानविवेकः कथं सिध्येत् । दक्षिणासु देयत्वेन हिरण्यस्य सम्बन्धो वर्तत इति तस्य जुह्वा-दिवत्क्रत्वव्यभिचरितत्वं न सिध्यति, येन संस्कारविधिर्गुणविधिर्वाऽङ्गी क्रियेत । हिरण्याभावे द्रव्यान्तरदानेनापि दक्षिणाकार्यं निर्वर्तयितुं शक्यते, जुह्वभावे पात्रान्तरेण जुहूकार्यं न निर्वर्तयितुं शक्यत इति भेदः । अतो न हिरण्यस्याव्यभिचरितः क्रतुसम्बन्धः । सर्वत्र विधिः पुरुषाभि-लषितफलसाधनतया विहिते कर्मणि पुरुषं प्रवर्तयन् क्रतोः पुरुषार्थत्वम-वगमयति । यत्र तादृशं फलं वाक्योपात्तं न भवति तत्र विश्वजिन्न्यायेन फलं कल्पयन् क्रतोः पुरुषार्थत्वं बोधयति । क्वचिच्च फलकल्पनाक्लेशं दूरीकर्तुमार्थवादिकं फलं स्वीकृत्य पुरुषार्थत्वं क्रतोस्साधयति । तदत्र फलकल्पनाक्लेशो नास्ति, अर्थवादे श्रूयमाणं फलं स्ववाक्यगतत्वेनाश्रित्य विधिरार्थवादिकफलेनैव स्वशोभनवर्णत्वशत्रुदुर्वर्णत्वलक्षणफलेन सुवर्ण-हिरण्यधारणस्य सम्बन्धं बोधयन् पुरुषार्थं हिरण्यधारणं इत्यवगमयति ॥

## १३. जयहोमाधिकरणम्

'येन कर्मणेर्त्सेत्तत्र जयान् जुहुयात्' इत्यनारभ्य श्रूयते। येन कर्मणा ऋद्धिं प्राप्तुमिच्छेत् तत्र 'चित्तश्च स्वाहा 'चित्तिश्च स्वाहा' इत्यादिमन्त्रैः जयान् जुहुयादित्यर्थः। कर्मसमृध्यर्थमिमे होमाः क्रियन्ते। जयदिहोमशब्देन चाभिधीयन्ते। किमिमे होमाः लौकिकवैदिककर्मसाधारणाः? उताहवनीये क्रियमाणवैदिकर्मपराः? इति संशये, कर्मशेषत्वं तावद्धोमानां वाक्यादवगम्यते किन्तु प्रकरणं किञ्चिन्नास्ति। कर्मशेषत्वञ्चलौकिकवैदिकसाधारणम्। ततश्च कृष्यादिलौकिककर्मस्वपि समृद्धिरूपफलकामनायां जयादिहोमा भवेयुः। 'येन कर्मणा' इति यच्छब्देन कर्मसामान्यस्य निर्देशात्। न च वैदिकानां कर्मणामाहवनीयसापेक्षत्वात् लौकिककृष्यादिकर्मणामनाहिताग्निभिरपि क्रियमाणानामाहवनीयाभावात् कथं कर्मसामान्य मिति वाच्यम्, आहवनीयाभावेऽपि अङ्गगुणविरोधन्यायेन लौकिकेऽप्यग्नौ जयादि होमान्तं कर्तुं शक्यत्वात्, आहिताग्नीनां तत्सत्त्वादाहवनीय एव जयादिहोमानुष्ठानसम्भवात्। तस्माल्लौकिकवैदिकसर्वकर्मार्था जयादिहोमा इति प्राप्ते;

सिद्धान्तः—जयादिहोमा वैदिकेष्वेव कर्मसु अवस्थिताः न लौकिकेष्वपि। वैदिकानां कर्मणाम् आहवनीये जुह्वति इत्याहवनीयसाध्यत्वस्यावश्यकत्वात्। कृष्यादिकर्मसु तस्याभावात्। यदुक्तमाहनीयाभावे लौकिकेऽप्यग्नौ अङ्गगुणविरोधन्यायेन कर्तुं शक्यन्त इति तदसङ्गतम्, उत्पत्तिविधिना विनियोगविधिना च पदार्थेषु विहितेषु प्रयोगविधिस्तेषां पदार्थानामनुष्ठानाय क्रमं बोधयितुं प्रवर्तते। तत्र लौकिककृष्यादिकर्मणां नोत्पत्तिविधिरस्ति नापि विनियोगविधिः। तदा प्रयोगविधेः कुतः प्रसरः। यद्यपि क्वचित्स्मृतौ कृषिकर्मणः प्रारम्भात्पूर्वं क्षेत्रमर्यादायां बलिहरणाद्यङ्गं कर्तव्यत्वेन विहितम् 'तद्युक्तकृषिं कुर्यात्' इति प्रयोगवचनं कल्पयितुं शक्यम्, तथापि तत्राहवनीयस्य प्राप्तिर्नोपपद्यते; आहवनीयस्याग्न्यगारे सत्वात्, कृष्यादिकश्च केदारे क्रियते, अङ्गप्रधानयोस्समानदेशत्वनियमात्। आहवनीयस्य कृषिदेशे नयनं शास्त्रविरुद्धम्। वैदिकेषु कर्मस्वाहवनीय-

सद्भावात् तत्र क्रियमाणानां जयादिहोमानां प्रधानसमानदेशसद्भावात् जयादिहोमास्सगुणा भवन्ति। तस्मात् 'येन कर्मणेर्त्सेत्' इति लौकिक वैदिककर्मणां यच्छब्देन सामान्येऽवगतेऽपि समानदेशसम्पत्तये जयादि-होमविधिर्वैदिकविषय एवेति ॥

## १४. अश्वप्रतिग्रहेष्ट्यधिकरणम्

'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान् प्रतिगृह्णाति तावतो वारुणांश्चतुष्कपालान् निर्वपेत् वरुणमेव स्वेन भागधेयेनोपधावति स एवैनं वरुणपाशान्मुञ्चति' इति श्रूयते। अत्र विचार-द्वयम्—अश्वप्रतिग्रहेष्टिः पुरुषार्था उत क्रत्वर्थेति प्रथमो विचारः, द्वितीयस्तु प्रतिग्रहीत्रेयमिष्टिरनुष्ठेया उत दात्रेति। द्वितीयो विचारोऽ-ग्रिमाधिकरणे भविष्यति। अस्मिन्नधिकरणे किमियमिष्टिः लौकिके वैदिके चाश्वदाने निमित्ते भवति? उत लौकिके? अथवा वैदिके? इति सन्देहः। अश्वदानं निमित्तीकृत्यास्या इष्टेरनुष्ठानं भवति। तच्च निमित्तमुभयत्रोपलभ्यते। अतो लौकिकवैदिकसाधारणीयमिष्टिरिति प्रथमः पक्षः। दोषं निमित्तीकृत्य प्रवृत्तेयमिष्टिः लौकिक्येव भवितुम-र्हति, न वैदिका। वैदिकाश्वदानस्य विहितत्वेन तत्र दोषाभावात्। अश्वदानं दोषयुक्तमिति ज्ञानं प्रतिषेधप्रयुक्तं भवति। 'न केसरिणो ददाति' इति प्रतिषेधो लौकिकाश्वदान एव प्रवर्तते, वैदिकाश्वदानस्य विहितत्वेन तत्र निषेधो न प्रवर्तते, विहितेतरविषयकत्वान्निषेधस्य। यथा 'न हिंस्यात्सर्वा भूतानि' इति निषेधो विहितेतरविषयत्वेन सङ्कोच्यते, तथा नकेसरिवाक्यस्यापि सङ्कोचः। तथा च यतः 'अश्वो दाक्षिणा' इति विहितमश्वदानं वैदिकं न दोषयुक्तम् अतोऽवैदिकं लौकिकमश्वदानं इष्टेर्निमित्तं पर्यवस्यतीति लौकिकाश्वदाने निमित्तेऽस्या इष्टेरनुष्ठानं पुरुषार्थतया कर्तव्यं न क्रत्वर्थतयेति पक्षे प्राप्ते,

सिद्धान्तः—उपक्रमे योऽश्वं प्रतिगृह्णाति एतं वरुणो गृह्णाति' इत्यनेनाश्वप्रतिग्रहीतारं वरुणः—जलोदरव्याधिः गृह्णातीति बोधितम्। अनन्तरं वरुणग्रहादुन्मोचनाय साधनं विहितं वारुणीष्टिरूपम्। तदनन्तरं 'स एवैनं वरुणपाशान्मुञ्चति' इति वाक्यशेषः। अनेन

सन्दर्भेणेदमवगम्यते—यत् वरुणपाशात्—जलोदरव्याधित आत्मानं मोच-यितुं तत्साधनतया विहिताया इष्टेरवश्यमनुष्ठानं कुर्यादिति। एवं प्रवृत्तो विधिः स्वनिष्ठप्रवर्तकत्वसिद्धय इतिकर्तव्यतामपेक्षते। ताञ्च 'स एवैनं वरुणपाशान्मुञ्चति' इति वाक्यशेषः लक्षणया प्राशस्त्यज्ञानं जनयित्वाऽऽकाङ्क्षां पूरयति। एतदर्थमेवायमर्थवादः प्रवृत्तः; न तु दोष-निर्हरणाय। वरुणपाशशब्दस्य जलोदरव्याधौ प्रसिद्धत्वात् अस्य व्याधे-र्निमित्तं लौकिकमश्वदानमिति न केनचन प्रमाणेनावगम्यते। 'न केसरिणो ददाति' इति प्रतिषेधवाक्यादश्वप्रतिग्रहः पापजनक इत्येव कल्पयितुं शक्यते। तादृशपापजनकत्वं नात्रोपात्तम्। वाक्यशेषाद्वरुण-पाशान्मोचनमात्रं प्रतीयते, नात्र पापाश्वादानयोर्हेतुहेतुमद्भावः प्रति-पादितः, प्रसिद्धजलोदरानुवादेन तन्निर्हरणसाधनीभूतं कर्म विधीयते। यदि च वरुणशब्देनावयवव्युत्पत्त्या पापमेवोच्यत इति कल्पयित्वा तन्निर्हरणाय साधनमिदं कर्मेत्याश्रीयेत, तर्हि वरुणशब्दस्य प्रसिद्धार्थ-त्यागस्स्यात्। तस्माद्वाक्यशेषस्य फलपरत्वाभावात् ज्योतिष्टोमादियज्ञा-ङ्गभूतेऽश्वदाने विहितेयमिष्टिः क्रत्वर्थतयाऽनुष्ठेया। किञ्च 'यावतोऽश्वान् प्रतिगृह्णीयात्' इत्यनेन यत्कर्म विधीयते तद्वैदिकमित्यत्र न सन्देहः अस्य कर्मणोऽनुष्ठाननिमित्तमश्वदानम्। वैदिके ज्योतिष्टोमे ऋत्वि-ग्दक्षिणात्वेन 'गौश्चाश्वश्च' इत्यादिवाक्येनाश्वो विहितः। वैदिकदानं न दोषावहम्। अश्वदानं निमित्तीकृत्येष्टिर्विहिता। तस्याश्च फलमर्थवादेनैव समर्पितम्। वैदिकस्याश्वदानस्य विहितस्य 'न केस रिणो ददाति' इति प्रतिषेधस्य नावसरः। विहितेतरविषयत्वात् तस्य। तस्माद्वैदिक एवाश्वदाने इयमिष्टिरिति ॥

## १५. दातुर्वारुणेष्ट्यधिकरणम्

'दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषस्स्यात्' 'अर्थ वादो वानुपपातात्तस्माद्यज्ञे प्रतीयेत' 'अचोदितश्च कर्मभेदात्' 'सा लिङ्गादार्त्विजे स्यात्' इति चत्वारि सूत्राणि वार्तिककारैरेकाधि करणत्वेन व्याख्यातानि। भाष्ये तु 'अचोदितश्च कर्मभेदात्' 'सा लिङ्गा-दार्त्विजे स्यात्' इति सूत्रद्वयमधिकरणान्तरपरतया व्याख्यातम्।

अस्यार्गेवेष्टौ 'प्रजापतिर्वरुणायाश्वमनयत्; स स्वां देवतामार्च्छत्, स पर्यदीर्यत, स एतं वारुणं चतुष्कपालमपश्यत्, तन्निरवपत्, ततो वै स वरुणपाशादमुच्यत, वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति श्रुतम् । सन्दर्भस्यास्यायमर्थः—प्रजापतिर्वरुणायाश्वं दत्तवान्. अश्वदानेन प्रजापतिर्वरुणग्रहं प्राप्तवान्। वरुणग्रहेण—जलोदरव्याधिना पीडितः तस्योदरं विदीर्णः । स प्रजापतिः वारुणांश्चतुष्कपालानपश्यत्, तानन्वतिष्ठत्, अनुष्ठानेन वरुणपाशादमुच्यत; अतः वरुणस्तं गृह्णाति योऽश्वं प्रतिगृह्णाति, स वारुणोष्टिं कुर्यात्, तेन स वरुणपाशान्मुक्तो भवतीति ।

अत्र संशयः—–किमियमिष्टिः प्रतिग्रहीतुः ? उत दातुरिति । संशयस्येदं बीजम्—उपक्रमे प्रजापतिर्वरुणायाश्वं दत्तवान् इति सङ्कीर्त्यानन्तरं 'स' इति तच्छब्देन तमेव प्रजापतिं परामृश्य 'ततो वै स वरुणपाशादमुच्यत' इति प्रजापतेरेव वरुणपाशान्मुक्तिर्निर्दिष्टा । तदनन्तरं विधिवाक्ये 'यावतोऽश्वान् प्रतिगृह्णाति' इति प्रतिग्रहीतुरिष्टिराम्नाता । अत उपक्रमे उपसंहारे च भिन्नयोरर्थयोर्निर्देशात् किं प्रतिग्रहीतुरियमिष्टिः ? उत दातुरिति सन्देहः । तत्र विधिवाक्ये प्रतिग्रहीतुस्सम्बन्धः 'यावतोऽश्वान् प्रतिगृह्णोयात्' इति स्पष्टतया निर्दिष्टो वर्तते । विधिश्चार्थवादाद् बलीयान् विध्येकवाक्यतयाऽर्थवादानां प्रामाण्यस्वीकारात् । अत उपक्रमस्थोऽर्थवादोऽन्यथा नेयः । यद्यप्युपक्रमेऽर्थवादे प्रजापतिरश्वदानाद्वरुणगृहीतोऽभवत्, वारुणीष्टयनुष्ठानेन वरुणपशान्मुक्तश्चाभवत् । तस्मादन्योऽप्येवमाचरेदिति ज्ञायते; तथापि विधेः प्रबलत्वात् तदनुसारेणैवार्थवादो नेतव्यः—यदा दातुरपि दोषः तदा किमुत प्रतिग्रहीतुरिति । तस्मात्प्रतिग्रहीतुरियमिति पक्षे प्राप्ते,

सिद्धान्तः—–सत्यमर्थवादापेक्षया विधिः प्रबलः, किन्त्वर्थवाद उपक्रमगतोऽसञ्ज्यातविरोघी भवति । असञ्जातविरोधित्वेनार्थवादस्य यथाश्रुत एवार्थो ग्राह्यः । अत्र अश्वदाता प्रजापतिः, अश्वस्य प्रतिग्रहीता वरुणः 'वरुणाय' इति सम्प्रदाननिर्देशात् । 'स स्वां देवतामार्च्छत्'

इत्यत्र तच्छब्देन प्रजापतिरेव परामृश्यते न वरुणः, वरुणस्य चतुर्थ्यन्तेन निर्देशात् । एवं 'स पर्यदीर्यत' इत्यत्रापि तच्छब्देन प्रजापतिरेव परामृष्टः । एवं यथाश्रुतेऽर्थेऽवगम्यमाने प्रतिग्रहीता वरुण एव वरुणपाशं प्राप्तः, स एव वारुणीष्टया पाशान्मुक्त इति व्याहतार्थस्स्यात् । न खलु क्वापि स्वेनैव स्वयं पीड्यत इति भवति । वारुणीष्टौ वरुणो देवता, तद्यष्टापि वरुणश्चेत् आत्मोद्देशेन स्वद्रव्यस्य स्वयं त्यजतीति कथमुपपद्येत ? एवञ्चोपक्रमो दातृपरः, तदनुसृत्य विधिगतः 'प्रतिगृह्णीत्' इति शब्दः प्रयोजकगतव्यापारबोधकत्वेन नेयः । तथा सति 'प्रतिगृह्णीयात्' इत्यस्य 'प्रतिग्राहयेत्' इत्यर्थस्सम्पद्यते । तस्मात्प्रतिग्रहकर्तुर्नेयमिष्टिः किन्तु दातुरेव । किञ्च ज्योतिष्टोमाख्यं कर्म श्रौतं त्रेताग्निसाध्यम् । तत्राहिताग्निर्यजमानो दक्षिणात्वेनाध्वर्यवेऽश्वं ददाति । अध्वर्युश्च प्रतिग्रहीताऽनाहिताग्निरपि भवतुमर्हति । सोऽश्वं प्रतिगृह्येमामिष्टिं कथं कुर्यात् ? इष्टिश्चेयं वैदिकी, दानञ्चेदं वैदिकम् । अत उपक्रमानुसारेण विधिगतशब्द एवान्यथा नेयः, दातुरेवेयमिष्टिरिति ॥

वार्तिककृतस्तु दातृप्रतिग्रहीत्रोरुभयोरियमिष्टिरिति मन्यन्ते । अत्र च मैत्रायणीयशाखावाक्यं मूलम् । किन्तु दातृप्रतिग्रहीतृभ्यामाहिताग्निभ्यां भाव्यम् । दाता त्वाहिताग्निर्भवेदेव प्रतिग्रहीतापि आहिताग्निश्चेत् तेनापीयमिष्टिः कर्तव्यैवेति ॥

### १६. पानव्यापदधिकरणम्

'सौमेन्द्रं श्यामाकं चरुं निर्वपेत् यः सोमं वमिति' इति श्रुतेष्टिः किं लौकिकवमनं निमित्तीकृत्य प्रवृत्ता ? उत वैदिकसोमवमने ? इति संशये, सोमवमनस्य क्वाप्यविहितत्वात् लोके तु धातुसाम्यार्थं वमनायैव सोमः पीयत इति लौकिक्येवेयमिष्टिरिति पक्षे प्राप्ते,

सिद्धान्तः—यद्यपि वमनमत्रापि न विहितम्, किन्तु सोमपानं विहितम्, वैदिकं सोमं पीत्वा वमने जाते तेनापि वैदिकत्वोपस्थितिर्भवति । किञ्च 'इन्द्रियेणैष वीर्येण व्यृध्यते यस्सोमं वमिति' इति सोमवामिनः इन्द्रियवीर्यासमृद्धिदोषः कीर्तितः तन्निर्हरणार्थत्वेनेष्टिर्विहिता । सा वैदिक सोमवमन एव कर्तव्या, लौकिकसोमपानन्तु वमनायैव क्रियते । तत्र

वमनस्य न दोषः । अपि च भक्षमन्त्रे 'हिन्व मे गात्रा हरिवः' इति भागस्सम्यग्जरणे विहितः । अतोऽत्र वमने दोषः, तन्निर्हरणायेष्टिरिति वैदिक्येव ॥

## १७. सौमेन्द्रचरोर्याजमानताधिकरणम्

पूर्वोक्तं वैदिकवमनं याजमानमेव ? उतार्त्विजमपि ? इति सन्देहे, इष्टेरनुष्ठानस्य निमित्तं वमनम् । तच्चाविशिष्टं यजमानस्यर्त्विजामपि । यजमान इव ऋत्विजाऽपि सम्यग्जरणपर्यन्तं क्रतोरवैगुण्याय भक्षयेयुः । सम्यग्जरणाभावे वमनम् । तेन क्रतोः वैगुण्यापत्तिरिति पक्षे प्राप्ते,

सिद्धान्तः—इष्टिविधायकवाक्ये 'यस्सोमं वमिति' इति यच्छब्देनेष्टिवमनयोरेककर्तृकत्वमवगम्यते । इष्टेः कर्तृत्वं यजमानस्य, अङ्गप्रधानयोरेककर्तृत्वनियमात् क्रत्वाधिकारिकत्वमेवेष्टेरास्थेयम् । अतो याजमानमेव सोमवमनमिष्टेर्निमित्तम् । ऋत्विग्वमने सर्वप्रायश्चित्तादिना दोषनिर्हरणम् इति ॥

## १८. सर्वप्रदानाधिकरणम्

दर्शपूर्णमासयोः 'यदाग्नेयोऽष्टाकपालः' इत्याद्युत्पत्तिवाक्यानि श्रुतानि । तथा 'द्व्यवदानं जुहोति' इति, 'सकृदुपस्तृणाति' 'द्विर्हविषोऽवद्यति' सकृदभिघारयति' 'चतुरवत्तं जुहोति' इति च वाक्यानि श्रूयन्ते । अत्र किं कृत्स्नस्य पुरोडाशस्याग्नौ होमः ? उतोपस्तरणाभिघारणसंस्कृतद्व्यवत्तद्रव्यस्य होमः ? इति संशये, अष्टसु कपालेषु संस्कृतस्य पुरोडाशस्याग्निदेवताकत्वं 'यदाग्नेयोऽष्टाकपालः' इति तद्धितान्तेन पदेनावगम्यते, द्व्यवदानन्तु पुरोडाशस्यावयवः, तस्याग्निदेवतासम्बन्धो नास्ति । देवतासम्बन्धरहितस्य द्व्यवदानस्य होमे सति 'अग्नय इदं न मम' इति त्यागोऽपि कर्तुं न शक्यते । अतः कृत्स्नस्य पुरोडाशस्य देवतार्थत्वात्समग्रस्य होमः । ननु कृत्स्नस्य होमे 'शेषात्स्विष्टकृते समवद्यति' इति विहितानि शेषकार्याणि कथं क्रियेरन् इति चेत्, न; आक्षिप्तपुरोडाशान्तरद्वारा शेषकार्याणां सम्भवात् न च पुरोडाशान्तरस्याक्षेपे तस्य शेषत्वं न स्यादिति वाच्यम्, शेषशब्दोऽन्यपर्याय इत्यङ्गीकारात् । 'आज्येन शेषं संस्थापयेत्' इत्यत्र शेषशब्दस्य तथाऽङ्गीकारात् । ततश्च

पुरोडाशान्तरमेव शेषशब्देन विवक्षितमिति कृत्स्नस्यैव होम इति पक्षे प्राप्ते,

सिद्धान्तः—'द्विर्हविषोऽवद्यति' 'मध्यात्पूर्वार्धाच्चावद्यति' 'अङ्गुष्ठपर्वमात्रमवद्यति' 'द्व्यवदानं जुहोति' इत्यनेकानि वाक्यानि पुरोडाशान्निष्कृष्यावत्तस्य द्रव्यस्य होमसाधनतां बोधयन्ति। प्रत्यक्षश्रुतैतद्वाक्यानुसारेण द्व्यवदानप्रणाड्या होमसाधनत्वं पुरोडाशस्याग्नेयवाक्यमवगमयतीति स्वीकर्तव्यम्, अन्यथा बहूनां वाक्यानामानर्थक्यापत्तिः। अतो द्व्यवदानमात्रं हुत्वा पुरोडाशः शेषयितव्यः। शिष्टेन च स्विष्टकृदिडाभक्षणादीनि शेषकार्याणि कर्तव्यानि। नन्वाग्नेयवाक्येन पुरोडाशस्याग्निदेवतासम्बन्धे सिद्धे 'अग्निमुखा वै देवाः' इति वाक्यशेषेण कृत्स्नस्य पुरोडाशस्य होमे निर्द्धारिते होमोपायबोधकतया द्व्यवदानवाक्यानि नेतुं शक्यन्ते मध्यात्पूर्वार्धाच्च पुनःपुनरवदाय होतव्यमिति। उत्पत्त्यवगतकृत्स्नपुरोडाशहोमो द्व्यवदानपूर्वकमनुष्ठेयः। तथासति द्व्यवदानादिवाक्यानां नानर्थक्यमिति चेत्, न, सकृत्प्रयोगेणैव द्व्यवदानहोमस्य पर्यवसन्नत्वात् नाभ्यासस्यावसरः। न चोत्पत्तिवाक्यावगतं कृत्स्नस्य पुरोडाशस्य होमसाधनत्वं द्व्यवदानाभ्यासमन्तराऽनुपपद्यमानं तदाक्षिपतीति वाच्यम्, पुरोडाशस्याग्नेयत्वं नामाग्निदेवत्यहोमसाधनत्वम्। तच्च वाक्यान्तरपर्यालोचनया द्व्यवदानद्वारोपपादयितुं शक्यम्। यथा व्रीहीणां यागसाधनत्वं पुरोडाशप्रणाड्या, यथा वा सोमस्य रसप्रणाडिकया, यथा वा पशोर्हृदयादिप्रणाडिकयोपपाद्यते तद्वत्। किञ्च पुरोडाशो द्रव्यम् गुणभूतं होमसाधनत्वात्। होमश्च साध्यः प्रधानभूतः। गुणभूतद्राव्यानुरोधेन प्रधानस्य होमस्यावृत्तिरभ्यासो वा न न्याय्यः। यदुक्तं शेषशब्दस्यान्यपरत्वमाश्रित्य द्रव्यान्तरमुत्पाद्य तेन शेषकार्याण्यनुष्ठेयानीति, तत्सर्वथाऽसङ्गतम्; प्रसिद्धिं परित्यज्यान्यशब्दपर्यायताश्रयणस्यान्याय्यत्वात्। तस्मान्न सर्वहोमः॥

तदिदमधिकरणं वार्तिकेऽन्यथा परिष्कृत्य वर्णितम्। तथाहि—पुरोडाशप्रकृतितया व्रीहीणां रसप्रकृतितया सोमस्य हृदयादिप्रकृतितया पशोः यागसाधनत्वमुपपन्नम्, व्रीह्यादीनां नाशात्। किन्तु द्व्यवदानप्रकृतितया

पुरोडाशस्य यागसाधनत्वं नोपपद्यते द्व्यवदानेन पुरोडाशस्य नाशा-भावात् । पुरोडाशावरुद्धे कर्मणि व्रीहीणां साक्षात्साधनत्वमनुपपन्नमिति प्रणाड्येति स्वीकृतम्, प्रकृते पुरोडाशस्य साधनत्वे सम्पद्यमाने न काचिद-नुपपत्तिः द्व्यवदानस्य प्रणाड्याश्रयणं कुतः ? 'चतुरवत्तं जुहोति' इति वाक्यं प्रणाड्याश्रयणे प्रमाणमिति वक्तुं न शक्यम्, चतुरवत्तवाक्ये किमुद्देशेन किं विधीयत इति चिन्तनीयम् । न तावद्धोमोद्देशेन चतुरवत्तं विधीयते, होमस्याप्राप्तत्वादनुवादो न सङ्गच्छते । अतो यच्चतुरवत्त-मुपस्तरणादिभिस्सम्पादितं द्रव्यं तदुद्देशेनाप्राप्तो होमो विधीयत इत्या-श्रयणीयम्, द्वितीयाया अप्युपपत्तेः । ततश्च चतुरवत्तहोमस्संस्कार इति सिध्यति । यदि चेदं चतुरवत्तवक्यमुत्पत्तिवाक्यविहितस्य कर्मणस्सा-धनद्रव्यविधायकमभविष्यत् तदा प्रणाडीसमाश्रयणमनुचितमभविष्यत् । न च तथा, उपस्तरणादिवाक्यैश्चतुरवत्तस्य प्राप्तत्वात् । प्राप्तं चतुरवत्तमुद्दिश्य संस्कारो होमरूपोऽनेन विधीयते । होमश्च त्यागपूर्वकः विहितदेशे प्रक्षेपः । तत्रापि प्रक्षेपस्यैवाप्राप्तस्य विधानम् न त्यागस्यापि, उत्पत्तिवाक्येन त्यागस्य प्राप्तत्वात् । यथा प्राप्तव्रीह्याद्युद्देशेन प्रोक्षणा-दीनां विधानम् तथा प्राप्तचतुरवत्तोद्देशेन होमात्मकप्रक्षेपविधानं कर्मान्तरम् । यागस्तु सकलपुरोडाशद्रव्यकः । स चाग्निदेवतया सम्बद्धः । देवतोद्देशेन त्यागात्मकश्च । त्यक्तस्य द्रव्यस्य 'अग्निमुखा वै देवाः' इति शास्त्रानुसारेणाग्नौ प्रक्षेपात्मकस्संस्कारो विधीयते । यथा वोपयुक्तो-पयोक्ष्यमाणयोस्संस्कारो भवति तथोपयुज्यमानसंस्कारोऽयम् । कृत्स्नः पुरोडाशो हविः । तत्र द्व्यवदानवाक्यानुसारेण प्राप्तं चतुरवत्तं प्रक्षेपेण संस्क्रियत इति ॥

## १९. सर्वहविर्भिस्स्विष्टकृदनुष्ठानाधिकरणम्

शेषकार्याणि किमेकस्माद्धविषः शेषात् कार्याणि ? उत सर्वेषां हविषां शेषेभ्य इति संशये, स्विष्टकृदादीनि कर्माणि हविश्शेषेण क्रियन्ते । हविश्शेषश्च साधनत्वाद्गुणभूतः, साध्यत्वाच्च कर्मणः प्राधान्यम्, गुण-भूतशेषानुसारेण प्रधानस्य कर्मण आवृत्तिरन्याय्या । अत एकस्माद्ध विश्शेषात् शेषकार्याणि सम्पादनीयानि । कार्यार्थमेव द्रव्यं संस्कारम-

पेक्षते। यागस्य कार्यस्य सम्पन्नत्वेन तदुत्तरं द्रव्यसंस्काराणां कुतोऽवसरः ? किञ्च स्विष्टकृदादिभिः कर्मभिः हविश्शेषेऽत्रदृष्टमुत्पाद्यते, तच्चादृष्टमेकेन शिष्टद्रव्येण निष्पादितं सत् सर्वेषु सिध्यतीत्येकस्मादेव शेषकार्याणीति प्राप्ते, सिद्धान्तः—

स्विष्टकृदादीनि न प्रधानकर्माणि किन्तु संस्कारकर्माणि। हविश्शिष्टं द्रव्यं स्विष्टकृदादिभिः कर्मभिः संस्क्रियते। नात्र द्रव्यं गुणभूतम् किन्तु कर्मापेक्षया प्रधानभूतम्। प्रधानानुरोधेन गुणानामावृत्तिर्न्याय्या। यदुक्तं यागस्य निष्पन्नत्वात् कृतकार्यं द्रव्यं संस्कारं नापेक्षत इति तत्रोच्यते—कृतकार्याणामेव हविश्शेषाणां प्रतिपत्त्यपेक्षा भवति। प्रतिपत्त्यपेक्षायां तन्नियमः शेषकार्यविधायकैः क्रियते। स्वष्टकृदादिभिः कर्मभिर्नादृष्टमुत्पद्यते, किन्तु रिक्तीकरणादिकं दृष्टमेव फलमुत्पद्यते। अतस्सर्वेभ्यो हविर्भ्यश्शेषकार्याणि कर्तव्यानि ॥

## २०. स्विष्टकृति कृत्वाचिन्ताधिकरणम्

एकस्मादेव हविश्शेषाच्छेषकार्याणीति पक्षमभ्युपगम्य विचार्यते—किं यस्मात्कस्माच्चिद्धविश्शेषाच्छेषकार्याणि ? उत प्रथमात् ? इति। तत्राविशेषात् यथेच्छं यस्मात्कस्माच्चिदित्यनियमः। न च प्रथमोपस्थिते आग्नेये पुरोडाशशेषे विद्यमाने तं परित्यज्यान्यस्य ग्रहणमन्याय्यमिति वाच्यम्, आग्नेयादीनां प्रधानानां कश्चन क्रममवलम्ब्यानुष्ठाने जातेऽपि सर्वप्रधानोत्तरकालं विहितस्य शेषकार्यस्याग्नेययाग एवोपस्थापक इत्यत्र प्रमाणाभावात्। अतो यस्मात्कस्माच्चिदेकस्माच्छेषकार्याणीति पक्षे प्राप्ते,

सिद्धान्तः——मुख्यात्प्रथमादेव हविश्शेषात् शेषकार्याणि भवेयुः। यस्मिन् काले शेषकार्योपस्थितिः, तस्मिन् काले प्रथमतो मुख्यस्यैवोपस्थापकत्वं सिध्यति। तत्तदुत्पत्तिवाक्यैः कर्मसु विहितेषु प्रयोगविधिः प्रकरणपठितानि प्रधानान्यङ्गानि च क्रमेणानुष्ठापयति। तत्र प्रकरणं तत्तकर्मणामुपस्थापकम्। प्रकरणेऽनुसन्धीयमाने तदनुसारेण प्रथमहविश्शेषादेव शेषकार्याणां प्रथममनुष्ठाने सति तेनैवाकाङ्क्षायां शान्तायां नेतरेभ्यः शेषकार्याणि। तस्मात् मूख्यत एकस्मादेव शेषकार्याणि स्युरिति ॥

## २१. पुरोडाशविभागाधिकरणम्

दर्शपूर्णमासयोराग्नेयपुरोडाशस्य चतुर्धाकरणं कृत्वा 'इदं ब्रह्मणः' 'इदं होतुः' 'इदमध्वर्योः' 'इदमग्नीधः' इति निर्देशः क्रियते । निर्दिष्टं भागं 'अग्नीधे प्रथममादधाति' 'वेदेन ब्रह्मणे परिहरति' 'अथ काममन्येन' 'ततो होत्रे' 'अथाध्वर्यवे' इति ददाति । किमिदं दानमृत्विक्संस्कारार्थम् ? उत भक्षणार्थमिति संशये, आदधाति परिहरति इति भागसमर्पणपरश्शब्दः, समर्पणञ्च परिक्रयफलकं न भक्षणफलकम्, तस्याश्रवणात् । यद्यपि परिक्रयोऽपि न श्रुतः तथापि कर्मकरेभ्यो दानमन्वाहार्यपचनवत्परिक्रयार्थमेव भवति । अल्पस्याप्यस्य दानस्यानतिकरत्वमस्त्येव । 'पुरोडाशं बर्हिषदं करोति' इत्यस्य दक्षिणात्वेन संस्तवोऽपि दृश्यते—'दक्षिणा वा एता हविर्यज्ञस्यान्तर्वेद्यवरुन्धन्ते' इति । अतः परिक्रयार्थत्वमेव दानस्येति पक्षे प्राप्ते,

सिद्धान्तः——सकले पुरोडाशे देवतायै यजमानेन त्यक्ते सति यजमानस्तदेकदेशैः ऋत्विजः परिक्रेतुं कथं शक्नुयात् ? द्रव्यस्यादनीयत्वेन भक्षाश्रवणेऽपि योग्यतया भक्षार्थत्वमेव युक्तम् । हविश्शेषः प्रतिपत्त्यपेक्षोऽदनीयश्च भक्षणमेव प्रतिपत्तिरित्यवगन्तुं शक्यम् । भक्षणञ्च येन केनचिन्न कर्तव्यमिति ब्रह्मादयः कर्तारो नियम्यन्ते । नियमविधौ च लाघवम् । अन्यथा परिक्रयार्थत्वेऽन्वाहार्यपचनेन सह विकल्पस्समुच्चयो वेति गौरवं स्यात् । दक्षिणादानसादृश्यमस्तीति संस्तवः साम्यवाद इति भक्षार्थत्वमेव भागदानस्य ॥

इति तृतीयाध्याये चतुर्थः पादः



## १. उपांशुयाजाज्ये स्विष्टकृदननुष्ठानाधिकरणम्

अस्मिन् पादे शेषकार्यविचारो विस्तरेण क्रियते । स्विष्टकृदादिशेष कार्याणि किमुपांशुयाजद्रव्यादाज्यादपि कर्तव्यानि ? उत न ? इति संशयः । संशयस्येदं बीजम्—अङ्गप्रधानसम्बन्धीनि हवींषि सम्पाद्य वेद्यां प्रस्तरमास्तीर्य तदुपर्यासाद्यन्ते। तत्राज्यपानां देवतानां कृते जुहूपभृद्ध्रुवासु आज्यस्थालीतस्समन्त्रकमाज्यग्रहणं क्रियते। जुह्वां यद्गृह्यते तत् प्रयाजार्थम्, उपभृति यद्गृह्यते तत्प्रयाजानूयाजार्थम्, ध्रुवायां यद्गृह्यते तत्सर्वयज्ञार्थम् । तत्रोपांशुयाजानुष्ठानावसरे ध्रुवायां विद्यमानमाज्यं जुह्वां स्रुवेण गृहीत्वा पुनराज्यस्थालीतस्तावत्प्रपूर्यते यावद्ध्रुवातो गृहीतमाज्यम् । जुहूस्थाज्येन निश्शेषेणोपांशुयाजोऽनुष्ठीयते । उपांशुयाजशेषकार्यायाज्यशेषो न जुह्वां वर्तते नापि ध्रुवायाम् । अतस्सन्देहः । तत्र पूर्वस्मिन् पादे स्विष्टकृदधिकरणे सर्वहविषां शेषकार्याणि कर्तव्यानीति व्यवस्थापितम् । आग्नेयादिषु हविष्षु स्विष्टकृतो भागप्राप्तेर्यत्कारणं हविर्वहनरूपं तद् उपांशुयाजाज्येऽपि वर्तत इति भवत्याज्यादपि स्विष्टकृत्, सर्वयज्ञार्थत्वेन गृहीतं ध्रौवमाज्यं जुह्वामवदाय तत्प्रत्यभिघार्यते—पूर्यते किन्तु 'स्विष्टकृतेऽवदाय न प्रत्यभिघारयति, न हि ततः परामाहुतिं यक्ष्यन् भवति' इति वाक्यशेषादवगम्यते यदाज्यादपि स्विष्टकृद्भवतीति पक्षे प्राप्ते,

सिद्धान्तः—ध्रुवास्थाज्यस्योपांशुयाजशेषत्वाभावान्न शेषकार्याणि । ध्रुवायामाज्यस्य सर्वयज्ञार्थतया ग्रहणम्, तत्रोपांशुयाजशेषतैव नास्ति । उपांशुयाजार्थं ग्रहणानन्तरं यत्पूर्यते तत्सर्वयज्ञार्थम् । सर्वयज्ञार्थं यदाज्यं तदुपांशुयाजशेषभूतं कथं स्यात् ? उपांशुयाजानुष्ठानानन्तरमग्नीषोमीयपुरोडाशानुष्ठानावसरे उपस्तरणाभिघारणादिकार्यान्तरार्थत्वात्तस्य ।

---

१. 'देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति, सोऽब्रवीत् वरं वृणै भागो मेऽस्त्विति वृणीष्वेत्यब्रुवन् सोऽब्रवीत् उत्तरार्धादेव मह्यं सकृत्सकृत् समवद्यत' इति वाक्यशेषात् ज्ञायते ।

यद्ध्रुवातश्चतुरवत्तं जुह्वां गृहीतं तत्कृत्स्नं हुतम्। सशेषं न होतव्यम्, 'चतुरवत्तं जुहोति' इति विधानात्। 'सर्वेभ्यो हविर्भ्यस्समवद्यति' इति सर्वशब्दो विद्यमानसर्वहविःपरः। यदुक्तं 'स्विष्टकृतेऽवदाय' इति लिङ्गं तत् पुरोडाशसान्नाय्यशेषपरम्। तस्मादुपांशुयाजाज्यान्न शेषकार्याणि ॥

## २. साकम्प्रस्थायीये शेषकार्याननुष्ठानाधिकरणम्

द्वितीयतृतीये दाक्षायणयज्ञाधिकरणे 'साकम्प्रस्थायीयेन यजेत पशुकामः' इति साकम्प्रस्थायीयः दर्शपूर्णमासयोरवस्थाविशेषः फलाय विधीयत इत्युक्तम्। साकम्प्रस्थायः—सहप्रस्थानम् तत्सम्बन्धी साकम्प्रस्थायीयः इति व्युत्पत्त्या सहप्रस्थानलक्षणगुणबोधकः। तत्रामावास्यायां द्वौ सायंदोहौ प्रतिपदि च प्रातर्दोहौ द्वौ। सायं दोहाभ्यां दध्नि सम्पाद्यते। तेषां दोहानां चतस्रः कुम्भ्यो भवन्ति। प्रतिपदि प्रातः सङ्कल्पानन्तरमध्वर्युः-आज्याभागाभ्यामाग्नेयपुरोडाशेन प्रचर्याग्नीधे स्रुचौ ( जुहूपभृतौ ) प्रदाय सह चतसृभिः कुम्भीभिः वेदिमतिक्रम्य 'इन्द्रायानुब्रूहि' इति पुरोनुवाक्यार्थं होत्रे प्रैषं दत्वाऽनन्तरमाश्रावणप्रत्याश्रावणपूर्वकं याज्यार्थं प्रैषं ददाति यागसमाप्त्यनन्तरं स्विष्टकृदादिशेषकार्याणि सन्ति न वेति संशये उपांशुयाजस्य शेषाभावात् स्विष्टकृदाद्यभावेऽपि प्रकृते शेषसत्वात् स्विष्टकृदादि कर्तव्यमेव। इतराणि हवींषि यथा जुह्वामवदाय हूयन्ते तथैव दधि पयश्च जुह्वामवदाय होमे क्रियमाणे शेषस्स्यादेव। तेन च शेषकार्याणि कर्तव्यानीति पक्षे प्राप्ते,

सिद्धान्तः——अन्येषु होमेष्वध्वर्युः जुह्वां द्रव्यमवदाय जुहूपभृतावादाय वेदिमतिक्रम्य जुह्वा जुहोति। प्रकृते तु स्रुचावाग्नीध्राय दत्वा कुम्भीसहितो वेदिमतिक्रम्य जुहूस्थानापन्नकुम्भीभिः जुहोति। तत्र कुम्भीस्थद्रव्यस्य जुह्वामवदानाय प्रसक्तिरेव नास्ति। अतश्शेषाभावान्न स्विष्टकृदाद्यनुष्ठेयम् इति ॥

## ३. सौत्रामण्यधिकरणम्

सौत्रामण्यां 'पयोग्रहाश्च गृह्यन्ते सुराग्रहाश्च' इति त्रयः पयोग्रहाः त्रयश्च सुराग्रहास्सन्ति। तत्र पयोग्रहाः सान्नाय्यविकृतिः, सुराग्रहाश्च

पुरोडाशविकृतिः। सुराऽत्र पिष्टप्रकृतिका। अतः पुरोडाशविकृतिः। एतेषु ग्रहेषु होमानन्तरं शेषकार्याणि कर्तव्यानि न वेति सन्देहे—सोमे ऐन्द्रवायवादिग्रहेषु 'न सर्वंहुतं जुहोति' इति निषेधेन शेषसत्त्वात् इहापि 'पयोग्रहान् गृह्णाति, सुराग्रहान् गृह्णाति' इति गृह्णाति शब्दघटितत्वसादृश्येन 'न सर्वंहुतं जुहोति' इति विधेयस्स्यादेव। अतश्शेषसत्त्वाच्छेषकार्याणि स्युः। एतावान् विशेषः—सोमयागोऽपूर्वः—प्रकृतिः, तत्र स्विष्टकृदादिकं न क्रियते। किन्त्विह पयस्सुराग्रहा विकृतयः। यथाप्रकृति शेषकार्याणि स्विष्टकृदादीनि स्युरिति पक्षे प्राप्ते,

सिद्धान्तः—सौत्रामण्यामपि न प्राकृतं शेषकार्यमस्ति। अत्रत्यशेषस्य वैकृतं कार्यान्तरं श्रूयते। त्रिषु पयोग्रहेषु आश्विन-सारस्वत-मैत्रेषु 'अध्वर्युः प्रतिप्रस्थाताऽऽग्नीध्रश्चाश्विनं भक्षयन्ति होता ब्रह्मा मैत्रावरुणश्च सारस्वतम्, मैत्रं यजमानः, सुराग्रहान् दक्षिणतः प्राचीनावीतिनो भक्षयन्ति, 'अपि वा ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम्, यदि ब्राह्मणं न विन्देत् वल्मीकवपायामवनयेत्' इति। अत्र प्रकृतिवज्जुह्वामवदानादिकं कृत्वा न हूयते येन किञ्चिदवशेष्य स्विष्टकृदादिकं स्यात्। 'न सर्वंहुतं जुहोति' इति वचनन्तु सोमे हुतशेषभक्षणविधिबलात् यथाऽनुवादः, तथेहापि तद्बलादनुवाद इति न प्राकृतं शेषकार्यम्॥

### ४. सर्वपृष्ठेष्टौ स्विष्टकृत्सकृदनुष्ठानाधिकरणम्

इन्द्रियकामस्य वीर्यकामस्य वा सर्वपृष्ठेष्टिर्विहिता—'य इन्द्रियकामो वा वीर्यकामो वा स्यात् तमेतया सर्वपृष्ठया याजयेत्' इति। अत्र द्वादशकपालः पुरोडाशो द्रव्यम् इन्द्रो देवता। इन्द्रश्च राथन्तर—बार्हत—वैरूप—वैराज—शाक्वर—रैवतगुणकः। स्तोत्रसाधनीभूतसाम्नां नामानि रथन्तरादीनि। अत्रेन्द्रस्यैकत्वेऽपि तत्तद्गुणभेदाद्भिन्नो भवति। यथा इन्द्रो महेन्द्र इति। एकैकस्यै देवतायै चतुर्मुस्टिपरिमितं धान्यं शूर्पे निरुप्य सहावहत्य शूर्पेण विविच्य तण्डुलान् पिष्ट्वा पिष्टं भर्जयित्वा महान्तमेकं पुरोडाशं निर्माय द्वादशसु कपालेषु श्रपयित्वा वेद्यामासाद्यानन्तरं प्रचरणं भवति। प्रचरणकाले पुरोडाशस्य मध्यभागमपहाय प्रान्तभागं षड्धा मनसा विभज्य प्रदक्षिणक्रमेण निश्चितप्रान्तदेशेभ्यो

यथाविधि द्विर्द्विरवदायैकैकां देवतां यजति । अत्रैवं सन्दिह्यते—किं षण्णां यागानां समाप्त्यनन्तरं तत्तत्प्रधानावदानदेशस्योत्तरार्धात् स्विष्टकृते सकृत्सकृदवदातव्यम् ? उत पुरोडाशस्योत्तरार्धात् सकृदेवावदातव्यमिति । तत्र द्रव्यस्यैकत्वेऽपि देवताभेदात् कर्मभेदः । षट्कर्माणि । कर्मणां प्रधानावदानार्थं कल्पितो देशो भिन्नः । तस्य तस्य देशस्योत्तरार्द्धभागोऽपि भिन्नः । 'उत्तरार्द्धात्स्विष्टकृते समवद्यति' तत्तत्प्रदेशस्यौत्तरार्धात् स्विष्टकृदर्थमवदानं भवितुमर्हति । अतः 'समन्तं पर्यवद्यति' इति विध्यनुसारेण प्रधानार्थमवदानेषु कृतेषु तदुत्तरार्धदेशानां भिन्नत्वात् स्विष्टकृदवदानभेदावश्यम्भावात् तत्प्रतिपत्तिकर्म भेदेनैवानुष्ठेयम् । प्रतियागं वषट्कारभेदोऽपि स्विष्टकृदवदानभेदप्रयोजकः । अत एव सोमे ऐन्द्रवायवग्रहे द्विर्भक्षणं भवति वषट्कारभेदात् । तस्मादत्र शेषकार्यभेद इति पक्षे प्राप्ते,

सिद्धान्तः——नात्र प्रतियागं स्विष्टकृदवदानभेदः, सर्वयागं प्रति पुरोडाशस्य साधारणत्वेन तदीयोत्तरार्धस्यापि साधारण्यमङ्गीकर्तव्यम् । नात्र शेषस्य विभागः कल्पयितुं शक्यते, संसृष्टत्वात् । 'उत्तरार्धात् स्विष्टकृते समवद्यति' इति विधिः स्विष्टकृदवदानापादानतया यं भागं विधत्ते स एक एव, तत्र नानात्वमुपपन्नं न भवति । 'समान्तात्पर्यवद्यति' इति विध्यनुसारेण प्रधानावदानदेशस्समन्तरूप आश्रितः । तत्र प्रतिप्रधानं मनःकल्पितो देशभेदः । स्विष्टकृतस्तु 'उत्तरार्द्धात्स्विष्टकृतमवद्यति' इति वाक्यमुत्तरार्द्धं देशमवदानस्य निर्दिशति । एकस्य पुरोडाशस्योत्तरार्धदेश एक एव भवेत् । स च सर्वसाधारण इति तन्त्रेणैव स्विष्टकृदवदानम् । यदुक्तं वषट्कारभेदेन स्विष्टकृद्भेद इति तन्न; दृष्टान्ते एन्द्रवायवग्रहे 'द्विरैन्द्रवायवं भक्षयन्ति' इति वचनाद्द्विर्भक्षणम्, 'द्विर्ह्येतस्य वषट्करोति' इति हेतुत्वेन वषट्कारं न विदधाति, प्राप्तं वषट्कारमनुवदन् हेत्वधिकरणन्यायेनार्थवादः । अतो वषट्कारस्य न भक्षप्रयोजकत्वम् । तस्मादिह सकृदेव पुरोडाशस्योत्तरार्द्धात्स्विष्टकृदवदानमिति प्रतिपत्तिरेकैव ॥

## ५. ऐन्द्रवायवे द्विः शेषभक्षणाधिकरणम्

इदमधिकरणान्तरं न परिगणयन्ति केचन, पूर्वाधिकरणशङ्कापरि-

द्वारार्थत्वेनैव नयन्ति, परं जैमिनीयन्यायमालाशास्त्रदीपिकादिग्रन्थेष्व-धिकरणान्तरत्वेन वर्णितम्। अतो नात्र संशयपूर्वपक्षयोरवसरः। तथापि सर्वपृष्ठेष्टौ यथा सकृत्प्रतिपत्तिः तथा ऐन्द्रवायवेऽपि सकृद्भक्षप्रतिपत्ति-रिति पक्षे प्राप्ते,

सिद्धान्तः—'द्विरैन्द्रवायवं भक्षयति' इति वचनादत्र द्विःभक्ष-णम्, सर्वपृष्ठेष्टौ प्रतियागामुत्तरार्धादवदानाय नैतादृशं वचनमस्तीति प्रदर्शनार्थमिदमधिकरणम्॥

## ६. सोमे शेषभक्षणाधिकरणम्

ज्योतिष्टोमे ग्रहाश्चमसाश्च सन्ति बहवः। होतृब्रह्मादिगणान्तर्गता ग्रहचमसहोमकर्तारः। तत्र ग्रहचमसेषु किं कस्यचिदपि क्वचिदपि भक्षणं नास्ति? उत सर्वेषां सर्वत्राविशेषेण भक्षणम्? अथवा यस्य यत्र प्रत्यक्षं वचनं तस्य तत्र भक्षणम्? किंवा यत्र समाख्या वषट्कर्तृत्वं वा होमा-भिषवकर्तृत्वं वा तत्र तस्य भक्षणमिति संशयः। तत्र हुतशिष्टे यथा दर्शपूर्णमासयोः भक्षवचनानि सन्ति तथाऽत्र सोमे वचनाभावान्नकस्यचिदपि भक्षणम्। 'अल्पं जुहोति' इति वचनेन यद्यपि शेषोऽस्ति, तथापि तस्य भक्षणे न प्रमाणमस्ति। 'पुरस्तादैन्द्रवायवं भक्षयति' इति वाक्यं राग-प्राप्तकादाचित्कभक्षणपरम्। 'सर्व एव हार्योजनस्य लिप्सन्ते' इति वाक्यं लिप्सामात्रप्रतिपादकं न भक्षप्रापकम्। तस्माद्ग्रहचमसेषु कस्यचिदपि न भक्षणमिति प्रथमः पक्षः।

सर्वेषामृत्विग्यजमानानां भक्षणमिति द्वितीयः पक्षः। 'पुरस्तादैन्द्र-वायवं भक्षयति' इति वाक्यं पुरस्ताद्गुणविधिपरम्। तेन ज्ञायते प्राप्तं भक्षणमनूद्य गुणोऽनेन विधीयत इति। रागप्राप्तकादाचित्कभक्षपरत्वे पाक्षिकानुवाद इति स्यात्। तदपेक्षया प्राप्तभक्षानुवादेन पुरस्ताद्रूपगुण-विध्यङ्गीकारे स्थालीपुलाकन्यायेन सर्वत्र सोमे सर्वेषां भक्षणमिति सिध्यतीति द्वितीयः पक्षः।

नेदं प्राप्तभक्षानुवादेन गुणविधिपरम्, गुणविशिष्टभक्षविधायकम्, भक्षणस्य नियमेन लोकतोऽप्राप्तत्वात्। तस्माद् भक्षणस्याप्राप्तत्वात् यत्र यस्य भक्षणमुपदिश्यते तत्र तस्य भक्षणमिति तृतीयः पक्षः।

प्रत्यक्षवचनेन यस्य यत्र भक्षणं विहितं तत्र तस्य भक्षणमिति स्वीकुर्मः, किन्तु नैतन्मात्रम्-कारणान्तरादपि भक्षः प्राप्नोति । समाख्या वषट्कारः होमाभिषवौ इत्यादीनामपि भक्षप्रापकत्वम् । 'होतृचमसः' 'ब्रह्मचमसः' इत्यादयस्सन्ति समाख्याः । एवं सम्प्रैषा अपि विद्यन्ते- 'प्रैतु होतुश्चमसः, प्रब्रह्मणः' इत्यादयः । 'चमु अदने' धातोरसुच्प्रत्ययान्त- श्चमसशब्दः चम्यते भक्ष्यतेऽस्मिन्निति चमसो भवति । होत्रादीनां भक्षणपात्रमित्यर्थः । तस्माद्धोत्रादीनां चमसेषु भक्षणमिति सिद्धान्तः ॥

## ७. उद्गातृचमसभक्षणाधिकरणम्

उद्गातृचमसभक्षणे विचारः-किमुद्गातैव भक्षयेत् ? उत सर्वे ऋत्विजः ? अथवा स्तोतारस्त्रयः ? किं वा त्रिभिरस्तोतृभिस्सह- सुब्रह्मण्योऽपि इति संशये, 'उद्गातृचमस' इति समाख्यया उद्गातुरेव भक्षणम् । क्वचित्प्रैषमन्त्रे 'प्रोद्गातॄणाम्' इति बहुवचनेन तद्गणान्तर्ग- तानां सर्वेषां भक्षणं प्रतीयते तथापि एकत्वादुद्गातुः बहुवचनमविवक्षि- तार्थकम् । अत उद्गातुरेव भक्षणमिति प्रथमः पक्षः ।

'प्रोद्गातॄणां चमसः' इत्यत्र उद्गातॄणामिति पदे पश्चात्स्थितस्य बहुवचनस्यात्यन्तबाधापेक्षया प्रथमपतितोद्गातृप्रातिपदिकस्य जहत्स्वार्थ- लक्षणया तदितरेषां लक्षणयोपस्थितिं स्वीकृत्य प्रकरणात्सर्वे ऋत्विजो भक्षं कुर्युरिति द्वितीयः पक्षः ।

स्तोत्रकर्तार उद्गातृप्रस्तोतृप्रतिहर्तारस्त्रय उद्गातृचमसं भक्षयेयुः त्रयाणामेव स्तोत्रसंयोगात् । एवञ्च 'प्रोद्गातॄणाम्' इति प्रातिपदिक- बहुवचनयोः मुख्यार्थत्वं स्वीकृतं भवति । सुब्रह्मण्यस्य गाने सम्बन्धो नास्तीति त्रयाणामेव भक्ष इति तृतीयः पक्षः । एवं पक्षेषु प्राप्तेषु,

सिद्धान्तः-सामवेदसम्बन्धस्य चतुर्ष्वप्युद्गातृगणान्तर्गतेषु सत्त्वात् उद्गातृप्रस्तोतृप्रतिहर्तृसुब्रह्मण्या भक्षयेयुः । एकैकस्य साम्नः पञ्च भक्तयः-प्रस्तावः उद्गीथः प्रतिहारः उपद्रवो निधनश्चेति सन्ति । साम- गानसमये उद्गातृप्रस्तोतृप्रतिहर्तॄणामेव सम्बन्धः सुब्रह्मण्यस्य तु सुब्रह्मण्याह्वाने । गानावसरे सुब्रह्मण्यस्य सम्बन्धाभावेऽपि सामवेद-

समाख्याततद्वेदविहितकर्मत्वलक्षणगुणयोगात् चत्वारोऽपि छन्दोगा व्यवह्रियन्ते । अतस्समाख्यया चतुर्णामपि भक्षणमिति भाष्याभिप्रायः ।

वार्तिककारास्तु सुब्रह्मण्यं वर्जयित्वा प्रस्तोता प्रस्तौति, उद्गातोद्गायति, प्रतिहर्ता प्रतिहरति उपद्रवमुद्गाता गायति, निधनन्तु त्रय उपयन्ति' इति त्रयाणामेव स्तोत्रव्यापारसत्वात् त्रय एवेत्यपसुब्रह्मण्यवादमभिप्रयन्ति । अयमाशयः—हुतशिष्टस्य भक्षणं प्रतिपत्तिः । भक्षणञ्च तृप्तिफलकम् । तन्मुखेन कर्तारो नियम्यन्ते । नियमोऽयमदृष्टफलकः । त एव नियम्यन्ते ये च कर्मसु व्यापृता अभवन् । सुब्रह्मण्यस्य स्तोत्रकर्मणि सम्बन्धो नासीत्, तस्य प्रातरनुवाकानन्तरं सुब्रह्मण्याह्वाने व्यापारः । क्वचिच्छाखायां दक्षिणाकाले सुब्रह्मण्याह्वानमस्ति तथापि भक्षवेलायां तदभावात् सुब्रह्मण्यविषये भक्षकर्तृनियमस्य केवलादृष्टार्थत्वं स्यात् । अतो न तस्य भक्ष इति ॥

## ८. हार्योजनाधिकरणम्

'यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति, अथैतस्य हार्योजनस्य सर्व एव लिप्सन्ते' इति श्रुतम् । चमसिसमाख्यया चमसिनश्चमसान् भक्षयन्ति; हार्योजनस्य तु सर्वे लिप्सन्ते । वचनबलात्समाख्याबलाच्च भक्षणे निमित्तमवधारितम् । अत्र हार्योजनस्य भक्षणं किं ग्रावस्तुतोऽपि विद्यते न वेति संशयः । कुतस्संशयः ? ग्रावस्तुतस्य वचनाभावात् 'सर्वे' इति पदोपादानाच्च संशयः । तत्र यथा वषट्कारस्य होमाभिषवयोश्च भक्षणे कारणत्वं वक्ष्यते, वचनाच्च पूर्वमुक्तं कारणम्, तादृशं ग्रावस्तुद् विषये कारणाभावान्न तस्य भक्षः । किञ्च 'सर्वे लिप्सन्ते' इति सर्वशब्दः पूर्ववाक्योपात्तचमसिन एव परामृशति । ग्रावस्तुतश्चमसित्वाभावात् न हार्योजनस्य भक्षः । 'लिप्सन्ते' इति पदं लिप्सामात्रमवगमयति; न भक्षम् इति पक्षे प्राप्ते;

सिद्धान्तः—सन्निधिप्रमाणेन सर्वशब्दस्य चमसिषु सङ्कोचो न युक्तः । यदा हि सर्वशब्दः सन्निध्यपेक्षया प्रबलेन प्रकरणप्रमाणेन ऋत्विग्यजमानान् सर्वान् वक्तुं समर्थः, तदा तस्य दुर्बलं सन्निधिप्रमाणमाश्रित्य सङ्कोचायोगात् । अत्र 'चमसिनः' इति पदं सर्वपदबलेन

चमसितदितरर्त्विग्यजमानविषय सिद्धिपरत्वेन नेतुं शक्यम्। यदुक्तं लिप्सन्तेपदं लिप्सामात्रावगमकं न भक्षपरमिति, तत्रोच्यते—पूर्ववाक्ये 'भक्षयन्ति' इत्युपात्तत्वात् लिप्सतेर्भक्षपरत्वे पर्यवसानात् न लिप्सामात्र परम् ॥

## ९. वषट्कर्तृप्रथमभक्षाधिकरणम्

वषट्कारोऽपि भक्षणे निमित्तमिति साधयितुं विचारः प्रवर्त्यते। 'वषट्कर्तुः प्रथमभक्षः' इति श्रुतम्। अत्र किं वषट्कर्तुर्यो भक्षः स प्रथम इत्यनेन विधीयते ? उत यो वट्करोति स प्रथमभक्ष इति विधीयत इति संशयः। वषट्कर्तुर्मानान्तरेण प्राप्तं भक्षमुद्दिश्य प्राथम्यं यदि विधीयते तर्हि वषट्कारो भक्षणे न निमित्तम्। यदि च यो वट्करोति तदुद्देशेन प्राथम्यविशिष्टभक्षविधाने निमित्तं भवति वषट्कारः। तत्र येन केनापि प्रमाणेन प्राप्तं भक्षमुद्दिश्य प्राथम्यमात्रविधाने विशिष्ट-विधानाश्रयणं न युक्तम्। होत्रादेश्चमसिनः समाख्यया भक्षः प्राप्त एव। स भक्षः प्रथमं कर्तव्यः ततश्च समाख्यया यत्र वषट्कर्तुः भक्षणं प्राप्तं तत्प्रथमं कर्तव्यमिति वाक्यार्थस्सम्पद्यते। यत्र तु ग्रहेषु चमसान्तरेषु च न समाख्यया भक्षणप्राप्तिस्तत्र वषट्कारे सत्यपि होत्रादेर्न भक्ष इति पक्षे प्राप्ते;

सिद्धान्तः—भक्षमात्रमुद्दिश्य प्राथम्यमात्रं न विधातुं शक्यते, सर्वस्य भक्षस्य प्राथम्यासम्भवात् किन्तु वषट्कर्तृविशिष्टभक्षोद्देशेन प्राथम्यं विधेयम्, तथासति विशिष्टोद्देशे वाक्यभेदापत्तेः। किञ्च विधे-यान्वयित्वमुद्देश्यत्वम्। विधेयप्रतीतेः पूर्वमुद्देश्यप्रतीतिरावश्यिकी। तदत्र न सम्भवति 'प्रथमभक्ष' इति समस्तपदत्वात्। 'समर्थः पदविधिः' इति समासे समर्थ्यस्यापेक्षितत्वात्। व्यपेक्षालक्षणसामर्थ्यस्य वा एकार्थी भावलक्षणसमार्थ्यस्य वाऽभावात्। तस्माद्वषट्कारे निमित्ते प्राथम्य-विशिष्टभक्षविधिरित्याश्रयणीयम्। एवं सति वषट्कारस्य भक्षनिमि-त्तत्वलाभो भवति ॥

## १०. होमाभिषवयोर्भक्षनिमित्तत्वाधिकरणम्

'हविर्धाने चर्मण्यधि ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः

परेत्य सदसि भक्षयन्ति' इति श्रुतम् । अत्र किं भक्षानुवादेन गुणविधि ? उताभिषवहोमनिमित्तं भक्षान्तरं विधीयत इति संशये, प्राप्तभक्षानुवादेनाभिषवहोमादिगुणविधानमेव । प्राप्ताप्राप्तविवेकन्यायेन वाक्यभेदमन्तरा गुणविधित्वसम्भवादिति पक्षे प्राप्ते;

सिद्धान्तः–होमस्याभिषवस्य च कर्ता अध्वर्युः । समाख्ययाऽध्वर्योः न भक्षप्राप्तिः, अध्वर्युचमस इत्यभावात् । यदि समाख्ययाऽध्वर्योः भक्षः प्राप्तो भवेत् तदा गुणमात्रं विधीयत इति युक्तम् । अध्वर्योर्वषट्कर्तृत्वमपि नास्ति । अतः कथञ्चिदप्यध्वर्योर्भक्षप्राप्तिर्नास्ति, 'अभिषुत्य हुत्वा भक्षयन्ति' इत्यनेनैव भक्षो विधेयः होमाभिषवसमानकर्तृत्वमध्वर्योरेव वर्तते । क्त्वाप्रत्ययः पूर्वकालतायां स्मर्यते । भक्षणप्राग्भावित्वं होमाभिषवयोरस्ति । अतः होमाभिषवौ निमित्तीकृत्य भक्ष एव विधीयत इति सिध्यति । अतश्च भक्षे होमोऽभिषवश्चेति निमित्तम् । निमित्तभेदान्नैमित्तिको भक्षो भिन्नो भवतीति भक्षान्तरविधिरयम् ॥

## ११. भक्षनिमित्तसमुच्चयाधिकरणम्

हुतशिष्टस्य सोमस्य भक्षणे समाख्यावषट्कारहोमाभिषवाणां निमित्तत्वं प्रतिपादितम् । सम्प्रति तेषामेकत्र समवाये किं बाध्यबाधकभावम् विकल्पं वाऽङ्गीकृत्य भक्षः कर्तव्यः ? उत समुच्चयमङ्गीकृत्येति संशये, ग्रहचमससाधारणः वषट्कारहोमाभिषवनिमित्तो भक्षः, होतृचमस इत्यादिसमाख्याकल्पितविधिना चमसभक्षणं विशिष्य विहितम् । विशिष्य विहितेनैकेन भक्षणरूपप्रतिपत्तिसम्भवात् समुच्चयस्य नावश्यकता । ग्रहेषु परं वषट्कारस्य होमाभिषवयोश्च बलवत्वाद्विकल्पो भवत्विति पक्षे प्राप्ते,

सिद्धान्तः––समख्यादीनि भक्षनिमित्तानि, निमित्तेषु सत्सु नैमित्तिकैर्भाव्यम् । समाख्याकल्पितविधिना चमसभक्षणं विशिष्य विहितमिति यदुक्तम्, तत्र यद्यपि 'चमसिनश्चमसान् भक्षयन्ति' इति समाख्या विशेषविधिप्रापिका; तथापि चमसानां भक्षणे प्रत्यक्षेण विहितयोः वषट्कर्तृहोमाभिषवनिमित्तकयोर्भक्षयोर्विरोधाभावात् न बाध्यबाधक-

भावः, हुतशिष्टस्य सोमरसस्यावयवः चमसिभिस्तदितरैश्च भक्षयितुं शक्यत्वात् । यदुक्तमेकेनैव भक्षेण प्रतिपत्तिसम्भव इति, तत्रेदमुत्तरम्—नात्र प्रतिपत्तिमात्रे दृष्टिः कर्तव्या, प्रतिनिमित्तं नैमित्तिकान्यावर्तनीयानीत्यत्रापि दृष्टिर्निक्षेपणाया । तथा सति विना बाधेनोपपत्तौ बाधो न न्याय्यः । तस्माच्चमसेषु समाख्यादिभक्षाणां समुच्चयः, एवं ग्रहेषु वषट्कारनिमित्तहोमाभिषवनिमित्तयोस्समुच्चयः ॥

## १२. भक्षकर्तृव्यवस्थाधिकरणम्

तत्रैवैकस्मिन् पात्रे द्वयोः वषट्कर्तृहोमाभिषवकर्त्रोस्समवाये प्रसक्ते प्राथम्यं कस्येति सन्देहे; हुत्वा भक्षयति' इति होमभक्षयोः पौर्वापर्यविधानात् होमाभिषवकर्ताऽध्वर्युः प्रथमं भक्षयेत् । वषट्कर्तृभक्षस्य प्राथम्ये होमानन्तर्यावगमकशास्त्रस्य विरोधस्स्यात् । वषट्कर्तुः प्रथमभक्षः; इति शास्त्रन्तु चमसिभ्यः पूर्वं भक्षयेदिति नेतुं शक्यत इति पक्षे प्राप्ते,

सिद्धान्तः—वषट्कर्तुरेव प्रथमं भक्षः, ततो होमाभिषवकर्तुः । होतेव नः पाहि' इति मन्त्रलिङ्गात् । एवंकारणीभूतवषट्काराच्च प्रथमं वषट्कर्तुर्भक्षः । यद्यपि वषट्कारो होमश्च समकालौ तथापि विना वषट्कारेण होमो न भवतीति वषट्कारस्य पूर्ववर्तित्वमङ्गीकार्यम् । 'हुत्वा भक्षयती'ति क्त्वा प्रत्ययः पूर्वकालतायां नेतुं शक्यते । 'वषट्कर्तुः प्रथमभक्षः' इति प्राथम्यमप्यनुगृहीतं भवति । एवञ्च मन्त्रलिङ्गात् निमित्तक्रमात् वचनाच्च वषट्कर्तुव प्रथममुपस्थितो भवतीति तस्यैव प्रथमं भक्षणम् ॥

## १३. अनुज्ञानानुज्ञापनाधिकरणम्

'नानुपहूतेन सोमः पातवे' इति वचनात् अनुज्ञातैरेवर्तिग्भिः सोमपानं कर्तव्यम् । 'पातवै' कृत्यार्थे तवै प्रत्ययः पातव्य इत्यर्थः । उपह्वानेन विना सोमो न पातव्य इति यावत् । उत्तरविवक्षार्थमिदम् ।

अनुज्ञानमनुज्ञापनञ्च किं लौकिकवाक्येन उत मन्त्रणेति सन्देहे सोमपातुर्नामानमुल्लिख्य 'होतरुपह्वयस्व' 'अध्वर्यवुपह्वणयस्व' इत्येवमनुज्ञापनम् 'उपहूतः' इत्यनुज्ञानम् ॥

'उपहूत उपह्वयस्व' इति मन्त्रपाठः। अत्रानुज्ञानमन्त्रः प्रथमम् अनुज्ञापनमन्त्रस्त्वनन्तरं पठितः। अनुज्ञानात्पूर्वमनुज्ञापनमावश्यकम्। क्रमस्य वैपरीत्ये विद्यमानेऽपि सामर्थ्यानुसारेण पाठक्रमं बाधित्वा 'अग्निहोत्रं जुहोति' 'यवागूं पचति', इत्यत्र यथा प्रयोजनवशात् क्रम आश्रितस्तथा प्रकृतेऽपि 'उपहूतः' इत्यस्य व्युत्क्रम आश्रयणीयः॥

## १४. एकपात्राणामनुज्ञापनाधिकरणम्

अनुज्ञापनस्यानुज्ञानस्य च लक्ष्यनिश्चयाय विचारः क्रियते। किम् अनुज्ञापयिता यं कञ्चनानुज्ञापयेत्, अनुज्ञानञ्च यः कश्चन कुर्यादित्य नियमः? उत बहूनामेकपात्रस्थल एवानुज्ञापनमनुज्ञानञ्चेति नियमः? इति संशये, अनुज्ञापनस्यानुज्ञानस्य वा विधिः मन्त्रगतसामर्थ्यद्वारा कल्प्यते। एकमेवानुज्ञाप्यं भक्षणकर्तारमाश्रित्य विधेश्चरितार्थत्वात् यं कञ्चिदेकमनुज्ञापयेत्; स एव चानुजानीयात् इति पक्षे प्राप्ते;

सिद्धान्तः—अनुज्ञानुज्ञापने एकपात्र विषये एव प्रवर्तेते। नानापात्रेषु बहुभिर्भक्ष्यमाणेषु न प्रवर्तते। एकं भक्षणपात्रं येषान्ते अध्वर्यु-प्रति-प्रस्थातृ-होत्रादय एकपात्राः। हुतशिष्टं द्रव्यमेकस्मिन् पात्रे वर्तते। तत्र निमित्तभेदेन भक्षणकर्तारोऽनेके। भक्षणावसरे न्यूनाधिकभागस्य प्रसक्तिरस्ति, तन्मर्षणायानुज्ञानं कर्तव्यम्। अत एकपात्रे प्रसक्तानां भक्षणकर्तॄणां विषय एवानुज्ञापनस्यानुज्ञानस्य च नियमः। स्वस्वपात्रे भक्षणकर्तॄणां विषये नानयोः प्रसक्तिरिति॥

## १५. स्वयं यष्टुर्भक्षाधिकरणम्

याज्यामन्त्रपठने समाख्यया होतुरधिकारः, स एव वषट्कर्तापि। एका याज्या 'यजमानस्य याज्या' इति वचनेन यजमानसम्बन्धितया प्राप्ता। परं यजमानः 'होतरेतद्यज' इति होतारं प्रेष्यति; 'स्वयं वा निषद्य यजति' इति कल्पद्वयम्। यदा होता याज्यां पठति न तदा सन्देहः यद् होतुरेव वषट्कारनिमित्तो भक्ष इति। किन्तु यजमानो यदा याज्यां पठति तदा होतुर्भक्षो विद्यते न वेति सन्देहे, यजमानः स्वयं निषद्य (धिष्ण्यस्य पश्चाद्भाग उपविश्य) यदा याज्यां पठति तदा होतुस्सकाशाद्याज्यैवापनीता, न तु वषट्कारः। भक्षश्च वषट्कारनिमित्तकः।

वषट्कारश्च न याज्यान्तर्गतः—'याज्याया अधि वषट्करोति' इति बचनात्। अतो वषट्कारनिमित्तो भक्षो होतुरेवेति पक्षे प्राप्ते,

सिद्धान्तः——याज्यापाठकर्तुरेव भक्षः, 'याज्याया अधि वषट्करोति' इति वचनं याज्यातो भिन्नं वषट्कारं न बोधयति, यो याज्यां पठति सोऽन्ते वषट्कुर्यात् इत्येवावगमयति। याज्यानन्तरपठनावसरे 'सन्ततमृचा वषट्कर्तव्यम्' इति विधानात् याज्यापाठकर्ता अन्यः, वषट्कारकर्ता चान्य इत्येवं प्रसक्तेरवसर एव नास्ति, सन्ततश्रुतेः। सान्तत्यं नामाविच्छेदेन प्रयोगः। किञ्च 'स्वयं यजति' इत्यनेन यजमानस्य वषट्कार प्रयोक्तृत्वमपि सिध्यति। तस्माद्याज्याप्रयोक्तुरेव वषट्कारो भक्षश्च॥

## १६. फलचमसाधिकरणम्

ज्योतिष्टोमे श्रुतम्—'यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य तास्सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत् न सोमम्' इति। याजने ब्राह्मणानामेवाधिकारः, यजने त्रैवर्णिकानामिति स्थितौ, राजन्यः (क्षत्रियः) वैश्यो वा सोमं बिभक्षयिषेत् भक्षयितुमिच्छेत् तर्हि न्यग्रोधस्य वटवृक्षस्य स्तिभिनीः फलस्तबकान् आनीय ताः सम्यक् पिष्ट्वा दधि सम्मेल्य क्षत्रियाय वैश्याय वा तं भक्षं प्रयच्छेत् सोमं न दद्यात् इत्यर्थः। दधिसंसृष्टन्यग्रोधफलपिष्टद्रवपूर्णश्चमसः फलचमसः कथ्यते। अत्र सन्देहः—किमयं फलचमसः यजमानकर्तृकभक्षप्रत्याम्नायः? यजमानस्य भक्षार्थः, यागार्थस्तु यजमानचमसो वर्तत एव उत यजमानचमसस्यैवायं प्रत्याम्नायः, नास्त्यन्यो यजमानचमसः, फलचमसेनैव यागः कर्तव्य इति। तत्र फलचमसोऽयं राजन्यवैश्ययोर्याजमानत्वे विहितः सोमभक्षं विकरोति 'तमस्मै भक्षं प्रयच्छेत्' इति सोमभक्षणकार्यकरित्वेन विधानात्। यजतिपदाश्रवणात् यागसम्बन्धः फलचमसस्य न प्रतीयत इति सोमभक्षप्रत्याम्नाय एवायं फलचमसः, यागार्थस्तु यजमानसोमचमसो विद्यत एव। तस्य भक्षणं वषट्कर्ता कुर्यात् प्रतिपत्तये इति पक्षे प्राप्ते,

सिद्धान्तः——यागार्थ एवायं फलचमसः यजमानसोमचमस प्रत्याम्नायतया विधीयते, यजिपदाश्रवणेन फलचमसस्य यागार्थत्वा-

भावस्साधयितुं न शक्यते, हुतशिष्टस्य भक्षणसंस्कारविधानादेव यागार्थत्वं सिध्यति। यागे विनियुक्तस्यैव प्रतिपत्तिसंस्कारसम्भवात्। 'यदि सोमं बिभक्षयिषेत्' इत्यनेन यागीयसोमभक्षस्यैव प्रत्याम्नायत्वं बोध्यते। तेन फलचमसस्य यागार्थत्वं नास्तीति कथमुन्नेतुं शक्यम् प्रत्युत यागार्थत्वमेवोन्नेतुं शक्यते। किञ्च फलचमसस्य चमसान्तर होमेन सह 'दर्भतरुणकेनोपहत्य जुहोति' इति होमो विहितः। होमश्च यागाविनाभूतः। अतो यागार्थत्वं फलचमसस्य। अस्य भक्षविकारत्वे याग उपयुक्तत्वाभावेन भक्षणं प्रतिपत्तिकर्म न स्यात्, 'भूतभाव्युपयोगि हि द्रव्यं संस्कारमर्हति' इति न्यायेनास्य भूतोपयोगित्वं भाव्युपयोक्ष्यमाणत्वं वा नास्तीति कथं प्रतिपत्ति संस्कारः क्रियेत। तस्मात् इज्याविकार एवायं फलचमसः यजमानचमसोऽप्ययमेव॥

## १७. अनुप्रसर्प्यधिकरणम्

राजन्यकर्तृके राजसूये दशपेयो नाम सोमयागः। अयं ज्योतिष्टोमस्य विकृतिः। प्रकृतितो दश चमसाः प्राप्ताः। तत्रेदं श्रूयते—'शतं ब्राह्मणाः पिबन्ति दश दश एकैकं चमसमनुप्रसर्पेयुः' इति। अनुप्रसर्पणं गमनम्। यजमानचमसं विहायान्येषु चमसेषु सन्देहो नास्ति। यजमानचमसे सन्देहः—यजमानस्य क्षत्रियत्वात् अत्र यजमानचमसो ब्राह्मणैरेव भक्षयितव्यः? उत राजन्यैरिति संशये, तत्र 'दशदशैकैकं चमसमनुप्रसर्पेयुः' इत्यत्र विधिप्रत्ययः श्रुतः 'शतं ब्राह्मणाः पिबन्ति' इत्यत्र वर्तमानापदेशः। प्रकृतितो यजमानचमसभक्षणे यदेकत्वं प्राप्तं तत् दशदशेति विधीयमानेन दशत्वेन बाध्यते यजमानगता या जातिः सा न बाध्यते। शतं ब्राह्मणा इत्यस्य विधायकत्वाभावात् ब्राह्मणपदं राजन्येषु लक्षणया नेयम्। शतपदञ्च विधिलभ्यसमस्तसङ्ख्यानुवादकम्। ततश्च यजमानचमसं दश राजन्या एव भक्षयेयुरिति पक्षे प्राप्ते,

सिद्धान्तः——यजमानचमसमपि ब्राह्मणा एव भक्षयेयुः 'शतं ब्राह्मणाः पिबन्ति' इत्यस्य लेट्लकारकल्पनया 'अनुप्रसर्पेयुः' इति लिङ्प्रत्ययान्तेन तुल्यशब्दत्वाद्विधायकत्वमेव सिध्यति। विधायकत्वे किं विधीयत इति जिज्ञासायां दशदशेति विधिना लब्धां शतसङ्ख्यां 'शतं'

इति पदेनानूद्य ब्राह्मणाः तदाश्रयत्वेन विधियन्त इति ब्राह्मणानां विधिः। तेन यजमानचमसे राजन्यजातिर्निवर्तते। तथा च दशैकैकश्च-मसमित्येवं ये सोमस्य भक्षयितारस्ते ब्राह्मणा इति निष्पद्यते। एवञ्चो-भयोरपि विधायकत्वं सिध्यति ब्राह्मणशब्दे लक्षणाश्रयणञ्च न भवति। तस्माद्ब्राह्मणा एव यजमानचमसं भक्षयेयुः॥

इति तृतीयाध्यायस्य पञ्चमः पादः



## तृतायाध्यायस्य षष्ठः पादः

### १. अनारभ्याधोतानां प्रकृतिगामित्वाधिकरणम्

चतुर्थपादे सुवर्णधारणाधिकरणमारभ्यानारभ्याधीतवाक्य-विचारे प्रस्तुते हविश्शेषविचारः प्रसङ्गाच्चिन्तितः। स एव विशेषरूपेण पञ्चमपादे विचारितः। षष्ठेऽस्मिन् पादेऽनारभ्याधीतानां विशेषेण चिन्ता प्रस्तूयते। किमपि प्रकरणमारभ्याधीतान्यारभ्याधीतानि, प्रकरणमनार-भ्याधीतानि अनारभ्याधीतानि कथ्यन्ते। प्रकरणञ्चाधिकारवाक्यानि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'उद्भिदा यजेत पशुकामः' इत्यादीनि विलोक्य निर्णीयते। एभिर्वाक्यैः फलसाधनेषु यागादिषु प्रतिपादितेषु, तत्रेतिकर्तव्यताकाङ्क्षायां जातायां तत्रैवोपकारकपदार्थानामाम्नातत्वात् आकाङ्क्षा पूर्यत इति प्रकरणेन निश्चीयते। एवं निश्चेतुं यत्र सामग्री नास्ति, अपि चाङ्गान्याम्नायन्ते तत्र तानि वाक्यान्यनारभ्याधीतत्वेन व्यवह्रियन्ते। तेषु 'यस्य पर्णमयी-जुहूर्भवति' 'यस्य खादिरस्स्रुवो भवति' इत्यादीन्यनारभ्याधीतानि सन्ति। तत्र जुहूः स्रुवः इत्यादीनां पात्राणामव्यभिचरितत्वेन क्रतु सम्बन्धस्य सत्वात् पर्णत्वखदिरत्वादीनां प्रकृतिविकृतिसाधारण्येन निवेशः ? उत प्रकृतावेव ? इति सन्देहे-यदा प्रकरणं किञ्चिन्नियामकं नास्ति तदा प्रकृतिविकृतिसाधारण्येन निवेशो भवतु। न चैवं 'प्रकृति-

वद्विकृतिः कर्तव्या' इत्यतिदेशेन प्राकृतपदार्थानां विकृतिषु प्राप्तानां तैस्सहानारभ्याधीतानामपि प्राप्तुं शक्यत्वात् किमित्युभयसाधारण्येना-नारभ्याधीतानां सन्निवेशोऽङ्गीकर्तव्य इति वाच्यम्, प्राकृतपदार्थप्राप्तेः पूर्वमेवानारभ्याधीतानां विकृतिषु निवेशाङ्गीकारात्। तथासति द्विरुक्तत्वदोषोऽपि न भवति। ननु कथं विकृतिषु प्राकृतपार्थप्राप्तेः पूर्वमनारभ्याधीतानां सन्निवेशः ? विकृतौ सौर्येष्टौ 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति वाक्यं प्रकृतितः प्राप्तान् प्रयाजाननूद्य कृष्णलहोमं विधत्ते। तत्रानारभ्याधीतैरेव पदार्थैः विकृतिभावनाया इतिकर्तव्यताकाङ्क्षायाश्शान्तत्वात् प्रयाजानां प्राकृतानां प्राप्तेरसम्भवादिति चेन्न, प्राकृतानामनारभ्याधीतानाञ्च भिन्नकार्यकरत्वात् एककार्यकरत्वे एव बाध्यबाधकभावाङ्गीकारात् न दोष इति प्राप्त उच्यते--

अनारभ्यविहितं यत्तत्प्रकृतिं गच्छति, न विकृतिम्। तथाहि--'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति विकृतिभावना इतिकर्तव्यतात्वेन कृत्स्नपदार्थविशिष्टाखण्डोपकारमाकाङ्क्षति। प्रतिपदार्थमतिदेशो न भिद्यते। यदि प्रतिपदार्थं पृथक्पृथगतिदेशस्स्यात् तर्हि प्रयाजेष्वागतेषु ताननूद्य विकृतौ किञ्चिद्विधीयत इत्यङ्गीकर्तुमुचितम्। नैवं भवत्यतिदेशः, दृष्टं वाऽदृष्टं वोपकारं साधयितुमवान्तरव्यापारसमूहात्मकाखण्डोपकारस्यातिदेशो दशमे साधयिष्यते। अस्यां स्थितौ प्रयाजमात्रातिदेशोऽनुपपन्नः। विकृतौ च प्रयाजानुवादेन कृष्णलहोमः प्रत्यक्षेण विधीयमानो दृश्यते। तेनातिदेशप्रवृत्तेः पूर्वमेवानारभ्याधीतानां विकृतौ सन्निवेश इति कथनमनुपपन्नमेव। किञ्च 'यस्य पर्णमयी जुहूः' 'यस्य खादिरः स्रुवः' इत्यनारभ्यवाक्ये जुहूपर्णतयोः, स्रुवखादिरयोश्चाङ्गाङ्गिभावबोधके, पर्णतया जुहूं भावयेत्, खादिरत्वेन स्रुवं भावयेत् इति बोधयतः। तत्र जुह्वाः स्रुवस्य च प्राप्तिर्वक्तव्या। न चात्र तत्तत्प्रकृतिभूतकाष्ठविशिष्टायाः पर्णताया वा खादिरत्वस्य वा विधानं सम्भवति, जुह्वादीनां प्राप्तत्वात् प्राप्तप्रापकत्वञ्च विधेरनुपपन्नम्। एतेनानारभ्याधीतं प्रत्यक्षमपि जुह्वादिसापेक्षत्वात् आनुमानिकातिदेशात् पूर्वं प्रवर्तत इति प्रत्युक्तम् चोदकबाधकत्वमपि निरस्तम्। एवञ्च पर्णतादीनां प्रकृतितो विकृतौ प्रवृत्तिसम्भवात् अनारभ्याधीतानां प्रकृतिगामित्वमेवेति ॥

## २. सामिधेन्यधिकरणम्

अनारभ्य श्रूयते--'सप्तदश सामिधेनीरनुब्रूयात्' इति। आहवनीयाग्निः समिद्भिस्समिध्यते, तत्प्रकाशनाय होत्रा पठ्यमानाः 'प्रवो-वाजा अभिद्यव' इत्याद्या ऋचस्सामिधेन्यः कथ्यन्ते। तास्सप्तदशसङ्ख्य-याऽनुब्रूयादित्यर्थः। इदमनारभ्य पठितं साप्तदश्यं किं प्रकृतौ गच्छति? उत विकृतौ? इति संशयः। पूर्वस्मिन्नधिकरणेऽनारभ्याधीतानां प्रकृतौ निवेशस्साधितः। तेन न्यायेन प्रकृतिगामित्वमेव। यद्यपि प्रकृतौ 'पञ्च-दश सामिधेनीरि' ति पाञ्चदश्यं श्रुतम्, तथापि विकल्पेनास्यापि निवेशो भवतु। उभयोरपि पाञ्चदश्यसाप्तदश्ययोः क्रतुसम्बन्धश्शब्दमर्यादया तुल्य एव। न च पाञ्चदश्यस्य प्रकरणात् दर्शपूर्णमासरूपक्रतुविशेष-सम्बन्धः, साप्तदश्यस्य तु अव्यभिचरितसामिधेनीमुखेन क्रतुसामान्य-सम्बन्ध इति न तुल्यबलत्वमिति वाच्यम्, प्रकरणस्य साक्षाद्विनियोजक-त्वाभावाद्वाक्यादि कल्पनाद्वारैव विनियोजकत्वम्, ततश्च वाक्यस्यो-पजीव्यत्वात् वाक्येन दर्शपूर्णमाससम्बन्धे साप्तदश्यस्य जाते पश्चादेव प्रकरणस्य प्रवृत्तेः। तस्मात्प्रकृतौ साप्तदश्यस्य पाञ्चदश्येन विकल्प इति पक्षे प्राप्ते,

उच्यते--साप्तदश्यं विकृतिष्वेव निविशते न प्रकृतौ। सर्वेषाम-ङ्गानां तत्तत्स्वरूपोद्देशेन विधीयमानानामानर्थक्यापत्तेरपूर्वसाधनत्वेन विधानमिति नवमाद्ये व्यवस्थापयिष्यते। तन्न्यायेन पाञ्चदश्यसाप्तदश्य-योः सामिधेनीस्वरूपोद्देशेन विधाने आनर्थक्यमित्यपूर्वपर्यन्तमनुधावन-मावश्यकम्। अपूर्वञ्च प्रकरणान्निर्धार्यते--एतद्यागजन्यमिति। तत्र दर्श-पूर्णमासगतं पाञ्चदश्यं दर्शपूर्णमासजन्यापूर्वप्रयुक्तमिति प्रकरणेन निश्चीयते। साप्तदश्यन्तु अनारभ्याधीतं स्वापेक्षितापूर्वसाधनत्वोपस्थापकप्रमा-णाभावात् सामिधेनीशब्देन तदुपस्थापने लक्षणाद्यश्रयणीयेति पाञ्चदश्या-पेक्षया दुर्बलं भवति। ततश्च बलवता पाञ्चदश्येन बाधितं साप्तदश्यं विकृतिष्वेव निविशते। सत्यं प्रकरणाद्वाक्यं प्रबलम् प्रकरणस्योपजी-व्यत्वञ्च, तथापि प्रकरणं यथाऽपूर्वोपस्थापनं झटिति करोति न तथा वाक्यम्। वाक्यञ्च सामिधेन्यङ्गं साप्तदश्यमिति बोधयितुं समर्थम्,

किन्तु सामिधेनीषु यदपूर्वसाधनत्वं तत् प्रमाणाश्रयणेन विना बोधयितु-मसमर्थम्। तच्च प्रमाणं प्रकरणमेव। प्रकरणे चानधीतं साप्तदश्यम्। प्रकृतौ च निवेष्टुं न शक्नोति, पाञ्चदश्यावरोधात्। अतो विकृतिष्वेव साप्तदश्यस्य निवेशः॥

## ३. साप्तदश्याधिकरणम्

दर्शपूर्णमासयोः 'पञ्चदश सामिधेनीरन्वाह' इत्याम्नाय 'सप्तदशानुब्रूयाद्वैश्यस्य' इत्याम्नातम्। इदं दर्शपूर्णमासप्रकरणगतं वाक्यम्। अस्मिन् वाक्ये सन्देहः किं साप्तदश्यमिदमनारभ्यसाप्तदश्यवत् विकृतिषु गच्छति? उत प्रकृतौ? इति। तत्र प्रकृतेः पाञ्चदश्येनावरुद्धत्वात् अनारभ्याधीतसाप्तदश्यवत् प्राकरणिकसाप्तदश्यस्य विकृतिषूत्कर्षः कर्तव्यः। ब्राह्मणकर्तृकदर्शपूर्णमासप्रयोगे साप्तदश्यस्य सर्वथा निवेशो नास्तीति सिद्धमेव। तेन प्रकृतौ पाञ्चदश्यं लब्धात्मकं भवति, 'पञ्चदशसामिधेनीरन्वाह' इति वाक्ये विशिष्य ब्राह्मणादिकर्तृकत्वनिर्देशो न दृश्यते। निर्देशाभावेन वैश्यकर्तृकेऽपि दर्शपूर्णमासाख्ये कर्मणि पाञ्चदश्यमेव प्राप्नोति। अथवा पाञ्चदश्यसाप्तदश्ययोः प्राकरणिकत्वेन शैघ्र्यमान्द्यकृतविशेषाभावात् प्रकृतौ तयोर्विकल्पो भवत्विति पक्षे प्राप्ते,

उच्यते—नात्र विकल्पः, नापि साप्तदश्यस्य विकृतिषूत्कर्षः। अनारभ्याधीतस्य साप्तदश्यस्य विकृतौ निवेश इति तु युक्तम्। 'सप्तदशानुब्रूयाद्वैश्यस्य' इति प्राकरणिकं साप्तदश्यं वैश्यनिमित्तकं प्रकृतावेव पाञ्चदश्यबाधकतया निविशते, अनयोर्नित्यत्वेन नैमित्तिकत्वेन च सम्बन्धभेदात्। पाञ्चदश्यं प्रकरणाविशेषात् दर्शपूर्णमासप्रयोगसामान्यविषयं सत् अनुष्ठानाय प्रयोगविशेषानाक्षिपति। प्रयोगविशेषेषु वैश्यकर्तृकप्रयोगो यावदागच्छति ततः पूर्वमेव वैश्यसम्बद्धं साप्तदश्यं वैश्यकर्तृकप्रयोगे सम्बद्धं भवतीति बलवद्भवति। बलवत्त्वाच्च न विकल्पः। नित्यं पाञ्चदश्यं निमित्तं नापेक्षते, अतस्तस्य पूर्वं प्रवृत्तिः। नैमित्तिकन्तु निमित्तं पर्यालोच्य पश्चात्प्रवर्तते। वैश्यकर्तृकत्वे निश्चिते नैमित्तिकं साप्तदश्यं नित्यत्वेन पूर्वं प्रवृत्तं पाञ्चदश्यं बाधित्वैव निविशते। नैमित्तिकं साप्तदश्यं पश्चात्प्रवर्तमानमपि बलवद्भवति निरवकाशत्वात्। पाञ्चदश्यन्तु ब्राह्मणक्षत्रियविषये सावकाशम्। सावकाशनिरव-

काश्योर्निरवकाशस्य बलवत्त्वं न्यायतस्सिद्धम् । तस्मात्प्रकृतावेव साप्तदश्यं पाञ्चदश्यं बाधित्वा निविशत इति भाष्यानुसारी पन्थाः ।

वार्तिककृतस्त्वन्यथाऽधिकरणशरीरं वर्णयन्ति । तथाहि——नित्यनैमित्तिकोदाहरणस्थले नैमित्तिकस्य साप्तदश्यस्य प्रकरणाम्नानमनर्थकम् । विकृतौ तदुत्कर्षपूर्वपक्षः, सावकाशनिरवकाशस्थले विकल्पपूर्वपक्षश्च दार्ढ्यं नावहतीति नित्यकाम्योदाहरणस्थलं प्रदर्श्य पूर्वोत्तरपक्षौ प्रदर्शयन्ति । दर्शपूर्णमासयोः 'चमसेनापः प्रणयन्ति' इत्यपां प्रणयनाय नित्यं चमसं विदधाति । एवं 'गोदोहनेन पशुकामस्य प्रणयेत्' इति पशुफलाय गोहोहनं विदधाति । गावो दुह्यन्ते येन पात्रेण तद्गोदोहनम् । अत्र गोदोहनं किं विकृतिषूत्कृष्यते ? उत प्रकृतावेव निविशते ? इति सन्देहे, नित्यचमसेन प्रकृतेरवरुद्धत्वात् काम्यं गोदोहनं विकृतावुत्कृष्टं सदर्थवद्भविष्यति । चमसः क्रत्वर्थः, गोदोहनं पुरुषार्थमिति भिन्नविषयत्वेन विरोधाभावात् नानयोर्बाध्यबाधकभावः । यदि च काम्येन नित्यं बाध्येत, तर्हि विगुणः क्रतुस्स्यादिति फलाय विधीयमानस्य गोदोहनस्याश्रयालाभेन फलार्थत्वं तस्य कथं सिध्येत् । अतो विकृतिषु गोदोहनस्योत्कर्षः । ननु विकृतावपि चमसबाधे क्रतोर्वैगुण्यात्कथं गोदोहनस्य निवेश इति चेत्, लौकिकमेवापां प्रणयनमाश्रित्य गोदोहनं फलसाम्पादकं भवतु इति पक्षे प्राप्ते, सिद्धान्तः——

'काम्यं नित्यस्य बाधकम्' इति न्यायेन फलं प्रति गोदोहनं प्रत्यासन्नम् शीघ्रं प्रवर्ततेऽपां प्रणयनायेति गोदोहनं प्रबलम् । तेन चमसस्य बाधः । ननु भिन्नविषयत्वेन कथं बाध इति चेत्——प्रणयनरूपद्वारस्योभयोरेकत्वात्सत्यपि कार्यभेदे द्वारस्याभेदात् विरोधो भवति, विरोधे च प्रबलं दुर्बलं बाधेत । एवञ्च चमसस्य बाधितत्वात् पशुकामप्रयोगे चमसाभावकृतवैगुण्यं नास्ति । बाधितः पदार्थः क्रतोरङ्गं न भवति, कथं वैगुण्यमापद्येत ? कृष्णलचरावववघाताभावकृतवैगुण्यं नाश्रीयते तद्वत् । अतो गोदोहनस्य प्रकृतावेव निवेश इति ॥

## ४. पवमानेष्ट्यधिकरणम्

'अग्नीनादधीत' इत्युपक्रम्य अग्नये पवमानायाष्टाकपालं पुरोडा-

शं निर्वपेत् अग्नये पावकाय अग्नये शुचये' इति तिस्रः पवमानेष्टय आम्नाताः। किमिदमग्न्याधानं पवमानेष्टयङ्गम् उत स्वतन्त्रमिति संशये; आधानं पवमानेष्टयङ्गम्। पवमानेष्टयुत्पत्तिवाक्येषु फलाश्रवणेऽपि विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा फलवत्त्वात्, फलवत्सन्निधौ पठितमग्न्याधानमफलमङ्गं भवति। फलवत्त्वाच्चेष्टीनां कथमिदं फलमनेन सम्पादनीयमित्याकाङ्क्षासत्त्वात् आकाङ्क्षारूपं प्रकरणं सिध्यति। अतः प्रकरणादाधानं तदङ्गम्। यद्यपि 'अग्नीनादधीत' इत्यत्र द्वितीयाविभक्त्याग्नीनां फलत्वं गम्यते। तेन चाधानस्य फलवत्वमेव सिध्यति न त्वफलत्वम्, तथाप्यग्नयोऽपुरुषार्था इत्याधानस्य नाग्नयः फलम्। पवमानेष्टिष्वतिदेशेन प्राप्तानामग्नीनां संस्कारद्वाराऽऽधानं पवमानेष्टयङ्गमिति प्राप्ते,

सिद्धान्त उच्यते—'अग्नीनादधीत' इति द्वितीयावगतसाध्यताका ये अग्नयः तदर्थमेवाधानम्। अग्नयश्च न स्वतःपुरुषार्थाः, किन्तु फलवदग्निहोत्राद्यर्थतयाऽग्निषूपयुज्यमानेषु पुरुषार्थत्वं तेषां सिध्यत्येव। यथाऽऽधानमग्न्यर्थम् तथा पवमानेष्टयोऽप्यग्न्यर्थाः। 'यदाहवनीये जुह्वति' इति पवमानेष्टिप्रकरणगतमेकं वाक्यम् अनारभ्याधीतश्चापरं वाक्यमस्ति। तत्रानारभ्याधीतस्य प्रकृतिगामित्वात् दर्शपूर्णमासयोर्निवेशे सति ततः पवमानेष्टिष्वतिदेशतः प्राप्तिः। पवमानेष्टिसान्निधौ स्थितस्य वाक्यस्यानर्थक्यपरिजिहीर्षया सप्तम्या द्वितीयार्थलक्षकत्वम्, जुहोतेश्च पवमानेष्टिलक्षकत्वमाश्रित्य पवमानेष्टिभिः आहवनीयाद्यग्नीन् सम्पादयेदित्येवं पवमानेष्टीनामग्न्यर्थत्वं विधीयते। एवं सति विश्वजिन्न्यायेन फलकल्पनाक्लेशो नाश्रयितव्यः। यथाधानमग्न्यर्थत्वेन गुणभूतं तथा पवमानेष्टयोऽपि गुणभूता इति मिथो नाङ्गाङ्गिभाव इति भाष्यानुसारी पन्थाः।

वार्तिककारास्तु 'यदाहवनीये जुह्वति' इति प्राकरणिकं वाक्यं नाङ्गीकुर्वन्ति। आधानमग्निसिध्यर्थत्वेन फलवत्। फलवत्सन्निधावफलं तदङ्गं भवति इति न्यायमाश्रित्य पवमानेष्टीनामाधानाङ्गत्वम् अथवा यथाऽऽधानमग्न्यर्थम् तथा पवमानेष्टयोऽप्यग्न्यर्था इत्यभिप्रयन्ति।

### ५. आधानस्य प्रकृतिविकृत्यर्थताधिकरणम्

अग्निसिध्यर्थमाधानमिति निर्द्धारितम्। तदाधानं किं प्रकृत्यङ्गम्,

विकृतिषु चोदकेन प्राप्यते ? उताग्निमात्राङ्गम् ? इति सन्देहे, 'अग्नी-नादधीत' इत्यस्यानारभ्याधीतत्वेन प्रकृत्यर्थत्वमेव, अतिदेशेन विकृत्यर्थं-त्वमपि । यथाऽन्येषामनारभ्याधीतानां खादिरत्वादीनां निवेश इति पक्षे प्राप्ते,

उच्यते—अग्निसिद्ध्यर्थमेवाधानं क्रियते । तेन सिद्धानामाहवनीयाद्य-ग्नीनां प्रकृतिविकृतितदुभयविलक्षणाग्निहोत्रादिषु निवेशो भवति । एता-वताऽऽधानस्य तत्तदङ्गत्वं सिध्यति प्रकृतिविकृतितदुभयविलक्षणाग्नि-होत्रादीनां साधकतामात्रेणाधानं तेषामङ्गं न भवति, अङ्गताबोधकप्रमाणा भावात् । जुहूस्रुवादीनि पात्राणि साकाराणि, तत्स्वरूपोद्देशेन पर्ण-मय्यादीनां विधाने आनर्थक्यं स्यादिति क्रत्वपूर्वसाधनत्वलक्षणया-ऽनारभ्याधीतवाक्यानि 'यस्य पर्णमयी जुहूर्भवति' इत्यादीनि पर्णता-दिनिष्ठमङ्गत्वं ग्राहयन्ति, तथा 'अग्नीनादधीत' इत्यनारभ्याधीतमपि वाक्यम् आहवनीयादिस्वरूपस्यालौकिकत्वात् तस्याधानेन विना सिद्ध्य-भावात्—आहवनीयादयो ये अग्नयस्तान् आधानेन संस्कुर्यात् इति संस्कारविधिर्भवितुमर्हति । संस्कृतानाञ्चाग्नीनामुत्तरक्रतुषु विनियोगो-ऽस्त्येव । स्वतस्तेषां पुरुषार्थत्वाभावेऽपि दर्शपूर्णमासज्योतिष्टोमादीनां पुरुषार्थानां क्रतूनां साधकत्वेन सर्वक्रत्वर्थमाधानम् ॥

### ६. पवमानेष्ट्यनतिदेशाधिकरणम्

पवमानेष्टिषु पवमानेष्टयः कर्तव्या न वेति सन्देहः । सन्देहस्येदं बीजम्—पवमानेष्टयो दर्शपूर्णमासविकृतयः । पवमानेष्टिविधायकवाक्येषु आख्यातार्थभावना इतिकर्तव्यतामाकाङ्क्षति । सादृश्यादाग्नेयविकृतित्वे सिद्धे तस्मादङ्गानि गृह्णाति । तत्र चाहवनीयाद्यग्निद्वारा पवमानेष्टी-नामप्यङ्गत्वात् प्रयाजादिवदतिदेशेन प्राप्तिरस्त्विति पक्षे प्राप्ते,

उच्यते——यथाऽऽधानमग्न्यर्थम् तथा पवमानेष्टयोऽप्यग्न्यर्था इति वार्तिकमतेन, आधानाङ्गं पवमानेष्टय इति च भाष्यमतेन प्रदर्शितम् । आधानेन पवमानेष्टिभिश्च सिद्धा अग्नयो दर्शपूर्णमासयोः प्राप्ताः । तत्र 'यदाहवनीये जुहोति' इत्यादिवाक्यैर्दर्शपूर्णमासाङ्गतां गताः । दर्श-पूर्णमासाङ्गत्वञ्चाग्निषु प्रमाणेनावगतम् । पवमानेष्ट्युत्पन्नत्वेनाग्नीनां न दर्शपूर्णमासाङ्गत्वम्, किन्त्वग्नित्वेनैव । पवमानेष्टिसम्बन्धस्त्वार्थिकः ।

अर्थात्सिद्धमङ्गं न भवति। अङ्गानामेव चातिदेशः, आर्थिकस्यातिदेश-विषयत्वं नाङ्गीक्रियते 'नह्यार्थिकं चोदकः प्रतिदिशति' इति न्यायात्। अतो न पवमानेष्टीनामतिदेशः। प्रयाजादीनान्तु प्रकरणप्रमाणेन दर्श-पूर्णमासाङ्गत्वमवधृतम्। ते चातिदेशेन पवमानेष्टिषु प्राप्य भावनेतिकर्तं-व्यताकाङ्क्षां पूरयन्ति। किञ्च पवमानेष्टीनामाद्यप्रयोगे तासां दर्शपूर्णमा-ससम्बन्धो न सिद्धः, किन्त्वितिकर्तव्यताकाङ्क्षाण्यो भूत्वा दर्शपूर्णमासतो यावन्ति अङ्गानि आयान्ति ताभिरेव शान्ताकाङ्क्षा भवन्तीति पवमाने-ष्टीनामतिदेशस्य कुतस्सम्भवः ? आद्यप्रयोगे मथिताग्नेराधानेन योऽग्निः तस्यैव संस्कारकत्वेन पवमानेष्टयः क्रियन्ते। एवं संस्कृतानग्नीन् आह-वनीयादीन् अङ्गत्वेन गृह्णन्तो दर्शपूर्णमासादयोऽनुष्ठीयन्त इति पव-मानेष्टिषु न पवमानेष्टयो भवन्ति॥

## ७. पशुधर्माणामग्नीषोमीयपशुमात्रार्थत्वाधिकरणम्

पञ्चदिनसाध्ये ज्योतिष्टोमे सन्ति त्रयः पशुयागा भिन्नकालानुष्ठेयाः—अग्नीषोमीयः सवनीय आनुबन्ध्यश्चेति। तेष्वग्नीषोमीयः पशुः द्वितीय-दिने सोमक्रयसन्निधावाम्नातः—'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत' इति। किन्तु स याग औपवथ्येऽन्हि सुत्यायाः पूर्वस्मिन् दिनेऽनुष्ठीयते—'स एष उपवसथीयेऽहन्द्विदैवत्यः पशुरालभ्यते' इति। सुत्यादिने पञ्चमे सवनोयः पशुरनुष्ठीयते—'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीया-ग्नेयं सवनीयं पशुमुपाकरोति' इति। आनुबन्ध्यस्वभृथान्ते उदयनीयेष्टच-नन्तरमनुष्ठीयते। पशुधर्माः 'यूपं छिनत्ति' 'यूपे पशुं नियुञ्जन्ति' इत्यादयोऽग्नीषोमीयपशुसन्निधावाम्नाताः। पशुधर्मेष्वेव किमिमे पशु-धर्माः त्रयाणामपि पशूनां साधारण्येन विधीयन्ते ? उत सवनीयपशो-रेव ? अथवाऽग्नीषोमीय सयनीयपश्वोः ? यद्वाऽग्नीषोमीयपशोरेव ? इति चतुर्धा संशयः। तत्र ज्योतिष्टोमप्रकरणात् सर्वपश्वर्था धर्माः। पशुस्वरूपोद्देशेनानुष्ठीयमानेषु धर्मेषु आनर्थक्यं स्यादिति अपूर्वसाधन-पश्वर्थत्वेनेति वक्तव्यम्। अपूर्वञ्च ज्योतिष्टोमप्रकरणान्निश्चेतव्यम्। प्रकरणञ्च त्रयाणामपि पशूनां समानम्। तेन प्रकरणाविशेषात् प्रकरण-गतसर्वपश्वर्थत्वं धर्माणामिति प्रथमः पक्षः।

अथवा—ज्योतिष्टोमस्येमे त्रयोऽपि पशुयागा अङ्गभूताः। प्रधान-

सोमयागश्च सुत्यादिने (पञ्चमे) भवति। तस्मिन्नेव दिने सोमलताया अभिषवादिद्वारा सोमरसो हूयते। तत्रैव च सवनीयपशोरनुष्ठानम्। अतः सवनीयपशोरवान्तरप्रकरणमुन्नीय महाप्रकरणेन पशुधर्माणां सर्वपश्वर्थत्वे गम्यमानेऽपि महाप्रकरणादवान्तरप्रकरणस्य प्रबलत्वेन सवनीयपश्वर्थत्वमेव धर्माणां भवतु इति द्वितीयः पक्षः।

यथाऽवान्तरप्रकरणेन सवनीयपश्वर्थत्वं धर्माणां ज्ञायते, तथा स्थानप्रमाणेनाग्नीषोमीयपश्वर्थत्वमपि सिध्यति, यतः औपवसथ्येऽह्नि अग्नीषोमीयः पशुरनुष्ठानायोत्कर्षेण प्रापितः तस्मिन्नेव दिने पशुधर्मा आम्नाताः। ततश्चानुष्ठानसादेश्यमादायाग्नीषोमीयपश्वर्थत्वमङ्गीकर्तुं शक्यते। यद्यपि प्रकरणात्स्थानं दुर्बलम्, तथाप्यग्नीषोमीययागस्य पशुधर्मविषयकाङ्क्षायास्सत्वात्, तदाकाङ्क्षाबलेन धर्माणामप्याकांक्षोत्थानात् प्रकरणेन स्थानं न बाध्येत। अत उभयार्था धर्मा इति पक्षेषु प्राप्तेषूच्यते—

अग्नीषोमीयपश्वर्था धर्माः। सुत्यादिनात्पूर्वस्मिन् दिनेऽग्नीषोमीयपशोरनुष्ठानं नियतम्। तत्रैव च धर्मा आम्नाताः। तेषां धर्माणां सवनीयार्थत्वे ततः पशुधर्माकाङ्क्षायुक्तेऽग्नीषोमीयपशौ धर्माणामतिदेशेन प्राप्तिर्वक्तव्या। अतिदेशेन त एव पदार्था अतिदिश्यन्ते ये च क्लृप्तोपकारकाः। परेद्युरनुष्ठीयमाने सवनीये धर्माणामुपकारकत्वं भविष्यति। ततः पूर्वमेवाग्नीषोमीयपशोराकाङ्क्षा वर्तते। तामाकाङ्क्षां सवनीयपश्वर्थत्वेन स्वीकृताः पशुधर्माः कथं पूरयितुं शक्नुयुः? प्रकृतित्वेन निश्चिते क्रतावनुष्ठिता एव पदार्था विकृतीतिकर्तव्यताकाङ्क्षां शमयितुं शक्नुवन्ति।अतः अग्नीषोमीयपश्वर्था धर्मा इति स्वीकृत्य तत्रत्यक्लृप्तोपकारकपशुधर्माः सवनीयपश्वाकाङ्क्षां पूरयन्तीति उपपादनं युक्तम्। एवं सति पशुधर्माणां सवनीयपश्वर्थत्वशङ्कैव कथमुदितेति प्रश्नो जायते। शङ्काया मूलमित्थमुपपादनीयम्——तदर्थं प्रथमं सवनीयपशोरुत्पत्तिवाक्यं किमिति परीक्षणीयम्। वाक्यद्वयमुपलभ्यते। 'आग्नेयोऽग्निष्टोम आलभते' इति वाक्यं औपवसथ्येऽहनि श्रुतमेकम्, अपरञ्च 'आश्विनं गृहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इति सुत्यादिने श्रुतम्। यदि सवनीयस्यौपवसथ्येऽहन्युत्पत्तिः तर्हि तत्रैव पशुधर्माणामाम्नातत्वेन सवनीयार्थत्वशङ्काया उत्थितेः कारणमुक्तं

भवति। यदि चेदं गुणविधायकं तर्हि सुत्यादिने श्रुतस्य 'आश्विनं ग्रहन्' इत्यादि वाक्यस्योत्पत्तिविधित्वम्। यदि चाश्विनवाक्यस्य गुणविधाकत्वं तर्हि औपवसथ्येऽहनि श्रुतस्योत्पत्तिवाक्यत्वं सिध्यति। तत्र किं युक्तमिति परीक्षायाम् आश्विनवाक्ये आश्विनग्रहग्रहणोत्तरकाललक्षणानुपादेयस्य सत्वात् तस्य चाविधेयत्वात् तद्विशिष्टसवनीयपशुर्विधीयत इत्यङ्गीकारे प्रकरणान्तराधिकरणन्यायोऽनुसृतो भवति। तस्मात् औपवसथ्येऽहनि श्रुतं 'आग्नेयस्सवनीयः पशुरग्निष्टोम आलभ्यते' इति वाक्यं नोत्पत्तिवाक्यमिति सिद्धे पशुधर्माणामग्नीषोमीयपशवर्थत्वं साधितं भवति ॥

८. शाखाहरणादीनामुभयदोहार्थताधिकरणम्

दर्शपूर्णमासयोः दर्शे 'ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायाम्' इति यागद्वयम्। प्रकृतियागो द्विदिनसाध्यः। अमावस्यायामारभ्य परेद्युः प्रतिपदि यागस्समाप्यते। अमावास्यायां सायं दोहं दुग्ध्वा श्रपयित्वा दध्यर्थमातञ्च्य निक्षिप्यते, परेद्युः प्रातर्दोहं दुग्ध्वा श्रपयित्वा पयोयागार्थमवस्थाप्यते। पूर्वेद्युः सायं दोहार्थं शाखाहरण-वत्सापाकरणादिकं क्रियते। तदिदं शाखाहरणादिकं दधिधर्मत्वेन ग्राह्यम्? उतोभयधर्मत्वेन? इति सन्देहे, दध्न एव शाखाहरणादयो धर्माः, तत्सन्निधावाम्नातत्वात्। परेद्युः प्रातर्दोहे धर्मा नाम्नाताः। अतो दधिधर्मा इति पक्षे प्राप्ते--

उच्यते उभयधर्मा इमे, दर्शपूर्णमासप्रकरणाम्नानात्। सन्निधिवशेन दधिमात्रधर्मत्वं वक्तुं न शक्यम्, ततः प्रकरणस्य प्रबलत्वात्। दधियागस्यावान्तरप्रकरणसाधनाय सन्दंशसामग्र्यभावादवान्तरप्रकरणं न सिध्यति। शखाहरणाद्यङ्गविधायकवाक्येषु दधियागसंयोगोऽपि न दृश्यते। पूर्वेद्युः शाखाहरणादयो धर्मा अनुष्ठेया इति पूर्वेद्युः कालविधानमात्रमिति शाखाहरणादयोऽनुष्ठीयन्ते। तावता दधियागार्थत्वमिति निश्चेतुं न शक्यते। तस्मादुभयदोहार्थाः शाखाहरणादय इति ॥

९. ग्रहधर्माणां सवनत्रयार्थताधिकरणम्

ज्योतिष्टोमे सन्ति ग्रहधर्माः--'ग्रहं सम्मार्ष्टि गृहीत्वा खरे सादयन्ति' इत्यादयः। प्रातस्सवनं माध्यन्दिनं सवनं सायं सवनमिति त्रीणि सवनानि। प्रतिसवनं ग्रहयज्यभ्यासा भवन्ति। तत्र ग्रहधर्माः प्रातस्सवने

ये ग्रहाः तदर्था एव ? उत सवनत्रयसाधारणा इति संशये, पूर्वाधिकरणस्यैवातिदेशः । प्रातस्सवनिकग्रहार्थत्वमिति पूर्वपक्षः, महाप्रकरणात् सवनत्रयसम्बद्धग्रहार्थत्वमिति सिद्धान्तः ॥

## १०. रशनाधर्मसाधारण्याधिकरणम्

ज्योतिष्टोमे पशुधर्माणां मध्ये यूपपरिव्याणं श्रुतम्—'यूपं परिव्ययति' इति। परिव्याणं रशनया वेष्टनम् । तत्र केचन रशनाधर्मा आम्नाताः—त्रिगुणा भवति' दर्भमयी भवति' इत्यादयः । पूर्वं पशुधर्माणामग्नीषोमीयपश्वर्थत्वं व्यवस्थापितम् । तेन सवनीययूपयरिव्याणसाधनीभूतरशनायां रशनाधर्मा अग्नीषोमीयाद् अतिदेशेन प्राप्नुवन्तीति निश्चितम् । सवनीयपशौ 'स आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति' इति वाक्येनापूर्वं परिव्याणान्तरं विद्यते । अनेन वाक्येनातिदेशप्राप्तपरिव्याणे आश्विनग्रहग्रहणोत्तरकालो न विधीयते, तस्य सवनीयोत्पत्तिवाक्येनैव प्राप्तत्वात्, किन्तु यूपसंस्कारार्थं नूतनमप्राकृतकार्यकालविशिष्टं परिव्याणान्तरमेव विधीयते । तत्र ये 'त्रिगुणा भवति' 'दर्भमयी भवति' इत्यादयो रशनाधर्माः ते रशनाद्वयसाधारणाः ? उताग्नीषोमीयरशनामात्रार्था इति सन्देहे, परिव्याणोद्देशेन विधीयमानाः त्रैगुण्यदर्भमयीत्वादयो धर्माः परिव्याणस्वरूपं परित्यज्यापूर्वसाधनीभूतपरिव्याणोद्देशेन विधातव्याः । तत्र किमपूर्वसाधनत्वमाश्रयणीयमिति जिज्ञासायां स्थानात् अग्नीषोमीयपरिव्याणरशनार्थत्वमेवेति सिध्यति । तथा सति सवनीयपशावतिदेशात् प्राप्तपरिव्याणरशनायामेव त्रिगुणत्वादयो धर्मा निविशन्ते न त्वपूर्वपरिव्याणरशनायामिति प्राप्तेऽभिधीयते—

सवनीयापूर्वपरिव्याणरशनायामपि ते धर्मा भवेयुः । अग्नीषोमीय सवनीयपरिव्याणरशनासाधारणा अमी धर्माः । 'यूपं परिव्ययति' इति परिव्याणं यूपसंस्कारः यूपार्थः । परिव्याणञ्च रशनया सम्पाद्यते । रशनायां क्रियमाणा धर्मा अपि यूपार्थाः प्रतिपद्यन्ते । यूपश्च त्रयाणामपि पशूनामेकस्साधारणः । तत्र अग्नीषोमीययूपः; सवनीययूप इति यूपे भेदप्रतीतिः न समुचिता, एकादशे यूपस्य पशुत्रयसाधारण्यं व्यवस्थापितम् । अतश्चाग्नीषोमीययूपपरिव्याणम् सवनीययूपपरिव्याणमिति

भेदव्यवहरापेक्षया यूपसम्बन्धित्वमात्रकल्पना लघीयसी। तस्मादुभयरशनार्था त्रिगुणत्वादयो धर्माः ॥

## ११. अंश्वदाभ्याधिकरणम्

'अंशुं गृह्णाति' 'अदाभ्यं गृह्णाति' इति ग्रहद्वयमनारभ्य श्रुतम्। अनारभ्याधीतानां प्रकृतिगामित्वात् ज्योतिष्टोमे ग्रहद्वयस्य निवेशः। तत्र 'ग्रहं सम्मार्ष्टि' इत्यादयो ग्रहधर्माः अंश्वदाभ्ययोर्भवन्ति न वेति संशये, प्रकरणपठितैर्ग्रहधर्मैरनारभ्याधीतयोरंश्वदाभ्ययोस्सम्बन्धाभावात् प्रकरणपठितसोमग्रहेष्वेव ग्रहधर्मा निविशन्त इति पक्षे प्राप्त उच्यते—

सम्मार्गादि धर्माणां ग्रहोद्देशेन विहितानां वाक्येन ग्रहप्रयुक्तत्वं तावदङ्गीकर्तव्यम्। प्रकरणबलाच्च प्राकरणिकग्रहमात्रार्थत्वं सम्मार्गस्य प्रतीयत इति तु सत्यम्, तावताऽनारभ्याधीतग्रहयोर्व्यावृत्तिर्न कर्तुं शक्यते; प्रकरणस्य धर्मविधिविशेषणत्वासम्भवात्। प्रकरणं हि विनियोगमात्रे प्रमाणम्। 'ग्रहं सम्मार्ष्टि' इत्यत्र ग्रहशब्दो ज्योतिष्टोमापूर्वलक्षणः ग्रहस्वरूपोद्देशेन विधीयमानस्य सम्मार्गस्यानर्थक्यापत्तेः। अनारभ्याधीतयोश्च ग्रहयोः ज्योतिष्टोमप्रकृतिसम्बन्धस्य विद्यमानत्वात् प्रकृतिजन्यापूर्वसाधनत्वं सिध्यति। तस्माज्ज्योतिष्टोमीयसर्वग्रहार्था धर्माः ॥

## १२. चित्रिण्यधिकरणम्

चयने 'प्राणभृत उपदधाति' इत्यादयः प्रकरणपठिता इष्टकास्सन्ति, एवं 'चित्रिणीरुपदधाति' इत्यनारभ्याधीता अपीष्टका विद्यन्ते। तत्रेष्टकाधर्मेषु 'न खण्डामुपदध्यात्' इत्यादि वाक्यविहितेषु संशयः—किमिमे धर्माः अनारभ्यविहितेष्टकासु निविशन्ते न वेति। पूर्वाधिकरणन्यायस्यैवातिदेशः। पूर्वपक्षसिद्धान्तौ पूर्वाधिकरणवदेव भवतः ॥

## १३. अभिषवादिधर्माणां सोमार्थत्वाधिकरणम्

पूर्वस्मिन् पादे क्षत्रियवैश्यकर्तुके ज्योतिष्टोमे सोमप्रत्याम्नायतया फलचमसविधिरिति फलचमसाधिकरणे निरूपितम्। तदत्र फलचमसे सोमाभिषवादयो धर्माः कर्तव्याः? उत न इति संशये, 'सोममभिषुणोति' इति विधौ सोमशब्दो ज्योतिष्टोमापूर्वसाधनत्वेन सोममाचष्टे, न सोमत्वेनेति तावदङ्गीकर्तव्यम्। अन्यथा व्रीह्यवहननादयो धर्मा यवेषु न प्रवर्ते-

रन्। यथा सोमः क्रत्वपूर्वसाधकः तथा फलचमसोऽपि क्रत्वपूर्वसाधक इत्यभिषवादयो धर्माः फलचमसेऽपि प्राप्नुवन्तीति पक्षे प्राप्त उच्यते—

फलचमसो नैमित्तिकः। निमित्ते सति प्रवर्तते, तदभावे च न प्रवर्तते। अभिषवादयो धर्मा नित्यं सोममवलम्ब्य प्रवर्तन्ते। अतो नित्य संयोगविरोधादभिषवादिधर्माणां फलचमससाधारण्यं न युज्यते। यद्यपि व्रीहियवद्रव्ययोः प्रयोगभेदादनित्यत्वमस्ति तथापि शब्दतो नित्यत्वात्तयोः धर्मसाधारण्ये न विरोधः। प्रकृते तु 'यदि राजन्यं वैश्यं वा' इति यदिशब्दोपबन्धादनित्यत्वं शब्दत एव गम्यते। किञ्च नित्यसोमद्रव्यप्रवृत्तिवेलायां नैमित्तिकफलचमसद्रव्यस्य प्रवृत्त्यभावेन फलचमससस्यापूर्वसाधनत्वावगतेरभावात् तदुद्देशेन धर्माणामभिषवादीनां कथं सम्बन्धस्स्यात्। साप्तदश्याधिकरणे नित्यप्रवृत्तिवेलायां नैमित्तिकस्य प्रवृत्त्यभावः साधितः। एवं सति फलचमसगतापूर्वसाधनत्वानवगमादभिषवादिविधयः स्वार्थान् विधाय चरितार्था न नैमित्तिकद्रव्यागमनं प्रतीक्षन्ते। तस्मान्नाभिषवादयो धर्मा नित्यनैमित्तिकसाधारणाः॥

## १४. मुख्यप्रतिनिध्योरसमानविध्यधिकरणम्

नित्यकाम्यकर्मसु श्रुतद्रव्यस्यालाभे प्रतिनिधिरुपादातव्य इति षष्ठे प्रतिनिधिपादे वक्ष्यते। तत्र येऽवधात प्रोक्षणादयो धर्मास्ते किं श्रुतप्रतिनिध्युभयसाधारणाः? उत श्रुतमात्रधर्मा इति फलचमसन्यायेन नित्यानित्यसम्बन्धस्यायुक्तत्वात् धर्मा नोभवसाधारणाः, इति पक्षे प्राप्ते,

उच्यते—श्रुतव्ये ये धर्मा विहितास्तान् प्रतिनिधेया नीवारादयोऽपि प्राप्नुवन्ति। प्रतिनिधितया तदेव द्रव्यं गृह्यते यत् श्रुतद्रव्यगतावयववत्। 'व्रीहिभिर्यजेत' इत्यत्र व्रीहित्वजातिरर्थः अमूर्तायास्तस्या यागसाधनत्वमनुपपन्नमिति व्यक्तयो लक्ष्यन्ते। व्यक्तीनामपि यासधनत्वमनुपपन्नम्, अवहननपेषणादिना व्यक्तीनां नाशान्। अतो व्रीह्यवयवा एव यागसाधनमिति व्रोहिशास्त्रस्य तात्पर्यं कल्पनीयम्। व्रीहिषु अवयवबाहुल्यम्, नीवारादिष्वल्पा अवयवाः। व्रीहयो यदि न लभ्यन्ते व्रीहिशास्त्रानुग्रहायनीवारगता अल्पा अवयवा एव गृह्यन्ते नान्तरीयकतया। नीवारग्रहणं व्रीह्यवयवबुध्यैव। तथा च व्रीहय इव नीवारास्सकानाः, यथा व्रीहयो धर्मान् लभन्ते तथा नीवारा अपीति श्रुतप्रतिनिध्युमयसाधारणा धर्माः॥

## १५. प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम्

'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इति सोमालाभे पूतीकानां प्रतिनिधिनियमविधिः। प्रतिनिधिग्रहणं सादृश्यमादाय भवति, न तु विधितः। किन्तु प्रकृते सोमसदृशीष्वनेकलतासु प्राप्तासु तत्र पाक्षिकांशपूरणाय नियमविधिरयम्। अर्थात्तदितरलतानां निवृत्तिः। तत्र पूतीकेषु सोमे ये क्रयणाभिषवादयो धर्मा अनुष्ठीयन्ते ते पूतीकेषु न कर्तव्याः ? उत कर्तव्याः ? इति सन्देहे, व्रीह्यलाभे नीवाराणां व्रीहिबुद्ध्या ग्रहणम्; नीवारा ग्राह्या इति तत्र विधिर्नास्ति, प्रकृते च पूतीकानां सोमबुद्ध्या ग्रहणं नास्ति, अपितु विधिवशेन पूतीकबुद्ध्या ग्रहणम्। अतः फलचमसे यथा न सोमधर्माः, तथा प्रकृतेऽपि न सोमधर्मा इति प्राप्त उच्यते—

विधिवाक्ये पूतीकग्रहणं सोमावयवोपलक्षणम्। एतद्विध्यभावदशायां पूतीकानां नात्यन्ताप्राप्तिः, अनेकेषु सदृशद्रव्येषु पाक्षिकी अप्राप्तिः पूतीकानाम्। तां पूरयत्ययं विधिः। अतः पूतीकानां सोमसमानधर्मवत्त्वमस्त्येव ॥

## १६. संस्थाधिकरणम्

'सोमेन यजेत' इति ज्योतिष्टोमस्योत्पत्तिवाक्यम्। तस्याधिकारवाक्यं 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। अयं यागो नित्यः काम्यश्च। ज्योतिष्टोमयागः सप्त संस्थाकः—अग्निष्टोमः, उक्थ्यः, अत्यग्निष्टोमः; षोडशी, वाजपेयः, अतिरात्रः अप्तोर्यामइति। एतासु संस्थासु अत्यग्निष्टोमः, वाजपेयः अप्तोर्यामश्चाग्निष्टोमोक्थ्यादीनामनुष्ठानप्रकारभेदेन भिन्ना भवन्ति। प्रधानतया चतस्रः संस्था भवन्ति—अग्निष्टोमः उक्थ्यः, षोडशी, अतिरात्र इति। संस्था नाम स्तोत्रेण क्रतूपरमः। अग्निष्टोमस्तोत्रेण क्रतोरुपरमे अग्निष्टोमसंस्थाको ज्योतिष्टोमः, उक्थ्यस्तोत्रेण क्रतूपरमे उक्थ्यसंस्थाको ज्योतिष्टोम इति। एवमन्यत्रापि। स्तोत्रेण क्रतूपरम इत्यस्य क्रतोस्समाप्तिरिति नार्थः, अन्ये क्रियाकलापा भवेयुः, किन्तु स्तोत्रव्यापारो न भवतीत्यर्थः। स्तोत्रव्यापारो यद्यग्निष्टोमस्तोत्रेण समाप्तस्तर्हि अग्निष्टोम संस्था। एवमुक्थ्यसंस्था इत्येवं व्यवहारः। उक्थ्यादयस्संस्थाः काम्या विहिताः—'पशुकाम उक्थ्यं गृह्णीयात्, 'षोडशिना वीर्यकामस्य स्तुवीत' 'अतिरात्रेण प्रजाकामं याजयेत्'

इति । अग्निष्टोमोक्थ्यषोडश्यतिरात्रशब्दाः स्तोत्रविशेषवाचिनोऽपि संस्थावाचिनोऽपि भवन्ति । 'अग्निष्टोमेन यजेत' इत्यत्र यजिसामानाधिकरण्यादग्निष्टोमशब्दः संस्थानिमित्तकक्रतुपरोऽपि भवति । तथा चायमत्र निष्कर्षः—अग्निष्टोमसंस्थाया नित्यत्वं काम्यत्वञ्च । उक्थ्यादयस्तु काम्या एव । अग्निष्टोमादिशब्दानां प्रचुरप्रयोगात् तत्तत्संस्थासु शक्तिः, तादृशसंस्थावति ज्योतिष्टोमे निरूढलक्षणा, तद्वति क्रत्वन्तरे सम्प्रदायतः प्राप्ता साम्प्रतिकी लक्षणा, ग्रहणे स्तोत्रे च गौणी । उक्थ्यादयस्संस्थाः प्रकृतज्योतिष्टोममाश्रित्य पश्वादिफलोद्देशेन विधीयन्ते । प्रकृतज्योतिष्टोमाश्रितोक्थ्यसंस्थया पशून्, तथाविधषोडशिसंस्थया वीर्यम् तथाविधातिरात्रसंस्थया प्रजां भावयेदित्यर्थो भवति । सर्वत्र ज्योतिष्टोमस्वरूपमनुस्यूतं भवति । तत्तदवस्थाभेदेन ज्योतिष्टोमस्य भेदः, ज्योतिष्टोमत्वन्तु सर्वत्र वर्तत इति स्थितिः । अस्यां स्थितौ चिन्त्यते-अग्निष्टोमसंस्थाकज्योतिष्टोमस्य यान्यङ्गानि दीक्षणीयाप्रायणीयादीनि तान्युक्थ्यादिसंस्थासाधारणानि ? उताग्निष्टोमसंस्थाक ज्योतिष्टोमस्यैव, उक्थ्यादिसंस्थास्वतिदेशेन तान्यङ्गानि प्राप्नुवन्ति इति ।

तत्र नित्याग्निष्टोमसंस्थायाः काम्योक्थ्यसंस्थानाञ्च प्रकरणमेकं ज्योतिष्टोमाख्यम् । प्रकरणाविशेषात् संस्थास्समानविधानाः । यथाऽग्निष्टोमसंस्थाकः क्रतुरङ्गानि गृह्णाति-दीक्षणीयादिभिरङ्गैः क्रतूपकारं कुर्यादिति, तथा तैरङ्गैः फलवदुक्थ्यादिसंस्था उपकुर्यादित्युक्ते न फलचमसवन्नित्यानित्यसंयोगप्रयुक्तो विरोधः प्रसरति । नैमित्तिकफलचमसस्याफलत्वात् न स्वतो धर्मग्रहणे सामर्थ्यम्, काम्यसंस्थानान्तु फलवत्वात् स्वतो धर्मग्रहणे सामर्थ्यं विद्यत एव । यद्येवं नाश्रीयते तर्हि ज्योतिष्टोमस्य नित्यस्याग्निष्टोमसंस्थाकस्यैव धर्माणामुपकारकत्वं काम्यज्योतिष्टोमस्याग्निष्टोमसंस्थाकस्य धर्माणामुपकारकत्वं नास्तीति कल्पनीयं स्यात् । ये धर्मा नित्यप्रयोगे उपकुर्वन्ति ते काम्यप्रयोगेऽपीत्यङ्गीक्रियत एव । तथैव पश्वादिफलकामनायामुक्थ्यादिसंस्था धर्मा उपकुर्वन्तीति समानविधानतैव धर्माणाम् ।

किञ्च धर्माणां समानविधानत्वाभावे सवनीयपशूनां समुच्चयदर्शनमनुपपन्नं स्यात् । तथाहि—'आग्नेयमजं सवनीयमग्निष्टोम आलभते, ऐन्द्राग्नमुक्थ्ये द्वितीयम्, ऐन्द्रं वृष्णिं षोडशिनि तृतीयम्, सारस्वतीं मेषीं

चतुर्थीमतिरात्रे' इति सवनीयपशवो विहिताः। अत्र 'अग्निष्टोमे' 'उक्थ्ये' 'षोडशिनि' 'अतिरात्रे' इति सप्तम्यन्तानि पदानि स्तोत्रपराणि, न तु संस्थापराणि। संस्थापरत्वे उक्थ्यसंस्थाकक्रतौ अग्निष्टोमसंस्थाया अभावः, एवं षोडशिसंस्थाकक्रतौ अग्निष्टोमोक्थ्ययोरभावः, तथाऽतिरात्रसंस्थाकक्रतौ अग्निष्टोमोक्थ्यषोडशिसंस्थानामभाव इति हेतोः तत्तन्निमित्तकपशूनामभावस्स्यात्। तथा सति 'द्वितीयम्' 'तृतीयम्' 'चतुर्थीम्' इत्युपपन्नं न भवेत्। अतः अग्निष्टोमादिसप्तम्यन्तानि पदानि स्तोत्रपराणीत्यङ्गीकर्तव्यम्। एवमङ्गीकृतेऽग्निष्टोमसंस्थे ज्योतिष्टोमेऽग्निष्टोमस्तोत्रनिमित्तक आग्नेय एकस्सवनीयः पशुः, उक्थ्यसंस्थाके ज्योतिष्टोमे अग्निष्टोमोक्थ्यस्तोत्रे निमित्तीकृत्याग्नेयैन्द्रौ सवनीयपशू द्वौ, षोडशिसंस्थे ज्योतिष्टोमे निमित्तत्रयसत्वात् त्रयः पशवः, तथातिरात्रसंस्थे ज्योतिष्टोमे चत्वारस्सवनीयाः पशवः। उत्तरोत्तरसंस्थासु पूर्वपूर्वसंस्था न भवन्ति किन्तु पूर्वपूर्वस्तोत्राणि भवन्तीति स्तोत्राणि निमित्तीकृत्य सवनीयपशूनां विधानं सङ्गतं भवति। संस्थां निमित्तीकृत्य सवनीयपशूनां विधाने उत्तरोत्तरसंस्थासु पूर्व पूर्वसंस्थानामभवात् तन्निमित्तकपशूनां प्राप्तिर्न स्यात्। तदा 'द्वितीयं' 'तृतीयं' इति समुच्चयदर्शनं नोपपद्येत। तस्मात् स्तोत्रपरा एवाग्निष्टोमादयश्शब्दाः।

एवं स्थिते दीक्षणीयाप्रायणीयाद्यङ्गानामसमानविधानता स्यात्तर्हि काम्योक्थ्यादिसंस्थानाम् अग्निष्टोमसंस्थाक ज्योतिष्टोमः प्रकृतिरित्याश्रयणीयम्। तदैवोक्थ्यसंस्थायामाग्नेयसवनीयपशोरतिदेशतः प्राप्तिस्स्यात्। अतिदेशतः प्राप्तेः पूर्वं 'ऐन्द्राग्नमुक्थ्ये द्वितीयम्' इति वाक्यं प्रवृत्तं सत् ऐन्द्राग्नपशुं यदि विदध्यात् तर्हि अतिदेशतः प्राप्तस्याग्नेयसवनीयस्य औपदेशिकसवनीयस्य च विरोधो जायेत। तेन बाध्यबाधकभावो वा विकल्पो वा जायेत, तथा 'द्वितीयम्' इति समुच्चयोऽनुपपन्नस्स्यात्। यदि चाङ्गानां समानविधानता स्यात् तर्हि सर्वे पशवः संस्थासु प्रकरणविशेषात् प्राप्ताः पूर्वपूर्वसंस्थासु परः परः पशुः निमित्ताभावान्न भवेत् उत्तरोत्तरसंस्थासु च प्रत्यक्षेण निमित्तेन पूर्वः पशुर्वाक्यात्प्राप्नोतीति समुच्चयस्सिध्येत् एककार्यकरत्वाच्च बाधो वा विकल्पो वा न भवेत्। तस्मात्समानविधाना धर्मा इति पक्षे प्राप्ते,

सिद्धान्तः—दक्षिणीयादयो धर्मा असमानविधानाः । अग्निष्टोमसंस्थाकज्योतिष्टोमस्य काम्या उक्थ्यादयस्संस्था विकृतयः । पश्वादिफलान्तरसाधनतया उक्थ्यादिसंस्थाः काम्या विधीयन्ते, अग्निष्टोमसंस्था च नित्या । धर्माणां साधारण्ये नित्यानित्यविरोधस्स्यात् । पश्वादिकामनायां सत्यां काम्यसंस्थासु प्रवर्तते, असत्यान्तु न प्रवर्तते इत्यनित्यत्वं काम्य संस्थानाम् । यदा प्रवर्तते तदा फलसाधनीभूता संस्था आश्रयमपेक्षन्ते दध्यादिवत् । आश्रयश्चाग्निष्टोमसंस्थाकज्योतिष्टोमः । ज्योतिष्टोमक्रियामाश्रित्यैव संस्थानां फलसाधनता । अङ्गैरुपकृत एव ज्योतिष्टोम आश्रयो भवितुमर्हति । ज्योतिष्टोमक्रिया काम्यसंस्था अनपेक्ष्यैव दीक्षणीयादीन् धर्मान् स्वोपकारार्थं गृह्णाति न तु काम्यसंस्थार्थम् । तथाहि—'सोमेन यजेत' इत्युत्पन्नस्य सोमयागस्य नित्यः काम्यश्चेति द्वौ प्रयोगौ । तत्र नित्यः प्रयोगः 'वसन्ते वसन्ते ज्योतिषा यजेत' इति विहितः, अननुष्टानप्रयुक्तप्रत्यवायपरिहाराय धर्मान् गृह्णाति, 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति विहितः काम्यः प्रयोगः कामनासाधनाय धर्मान् गृह्णाति । इमौ प्रयोगौ उत्पन्नमात्रे सोमयागे युगपत्प्रवर्तेते, पौर्वापर्यं नास्ति किञ्चिद्विनिगमकम् । तत्राङ्गोपकृतेन ज्योतिष्टोमेन प्रत्यवाय परिहारं कुर्यादिति, अङ्गोपकृतेन ज्योतिष्टोमेन स्वर्गं कुर्यादिति च वाक्यार्थस्सम्पद्यते । एवञ्च नित्यकाम्योभयविधज्योतिष्टोमसाधारण्येन धर्मविधय इनि ज्ञातं भवति । उक्थ्यादयस्संस्थास्तु फलाय गुणविधिसरूपाः ज्योतिष्टोमाश्रिताः । ततश्च प्रथमं धर्मा दीक्षिणीयादयो ज्योतिष्टोमक्रिययाऽन्वयं प्राप्नुवन्ति, पश्चात् काम्यसंस्थाविधिषु धर्मा अन्वयं प्राप्नुवन्तीति धर्माणां न समानविधानत्वम् ।

यदुक्तं 'द्वितीयं' 'तृतीयम्' इति समुच्चयदर्शनं नोपपद्यत इति तत्रोच्यते—वचनादेव समुच्चयो भविष्यति । अग्निष्टोमसंस्थाकज्योतिष्टोम प्रयोगं समाप्यैव प्रयोगान्तरे उक्थ्यादिसंस्थाकज्योतिष्टोमानुष्ठानेऽधिकारी भवतीति नियमस्य सत्वात् द्वितीयतृतीयादिशब्दानां वचनादुपपत्तिर्भवितुमर्हतीति धर्माणामसमानविधित्वमिति ॥

इति तृतीयाध्याये षष्ठः पादः

## तृतीयाध्याये सप्तमः पादः

### १. वेदिबर्हिरधिकरणम्

पूर्स्मिन् पादे प्रधानयोः प्रकृतिविकृत्योस्सामानविध्यं विचारितम्। अस्मिन् पादेऽङ्गप्रधानानां सामानविध्यं प्राधान्येन विचार्यते। यागेषु वेदिः बर्हींषि अङ्गानि। वेद्यां बर्हींष्यास्तीर्य तदुपरि हवींष्यासाद्यन्ते। हविष्षु प्रधानयागसम्बन्धीन्यपि भवन्ति, अङ्गायागसम्बन्धीन्यपि। वेद्याः खनन-सम्मार्जन-परिग्रह-प्रोक्षणादयो धर्माः कर्तव्याः, एवं बर्हिषां लवनसम्भरण-सन्नहन प्रोक्षणादयो धर्माः कर्तव्याः। इमे धर्मा विचार्यन्ते- किं अङ्गप्रधानसाधारणाः उत प्रधानहविषामेव? इति। तत्र 'वेद्यां हवींष्यासादयति' 'बर्हिषि हवींष्यासादयति' इति विहितं वेद्यादिकं प्रकरणात् प्रधानहविरर्थमेव, न त्वङ्गहविरर्थमपि। प्रधानमाश्रित्यैव प्रकरणव्यवहारः। अतस्तत्तत्प्रकरणसम्बन्धीनि प्रधानहवींषि संस्कृत-वेद्यां संस्कृतबर्हिष्षु चासादनीयानि; तदर्थमेव च खननलवनादयस्संस्कारा इति पक्षे प्राप्ते,

सर्वेषामेवाङ्गप्रधानहविषां वेद्यादिकमङ्गम्, वेदिबर्हिस्तद्धर्माणा-मविशेषप्रवृत्तवाक्यविहितत्वात्। 'वेदिं खनति' 'बर्हिर्लुनाति' 'वेद्यां हवींष्यासादयति' 'बर्हिषि हवींष्यासादयति' इत्यादि वाक्यैरविशेषेण प्रवृत्तैः प्रकरणद्वारा सङ्कोचायोगात्। यद्यपि प्रकरणसहकृतमेव 'वेद्यां बर्हिषि हवींष्यासदयति' इति वाक्यं विनियोजकम् दर्शपूर्णमासप्रकरण-पाठात्, तथापि वेदिबर्हिस्तद्धर्माणामङ्गप्रधानहविरर्थत्वे न कोऽपि विरोधः। उत्पत्तिविधिना विनियोगविधिना च प्रधानतदङ्गेष्ववगतेषु प्रयोगविधिरेतान्यनुष्ठापयति। प्रयोगविधिश्च साङ्गप्रधानविषयः। स च प्रधानापूर्वोपयोगि हविरासादनद्वारा प्रधानापूर्वं कुर्यादित्येवमर्थपर्यव-सायी। ततश्च वेदि बर्हिस्तद्धर्माणामङ्गप्रधानार्थत्वे को विरोधः? किञ्च वेदिबर्हिर्धर्माणामङ्गप्रधानसाधारण्ये एव प्रयाजशेषाभिघारणम् आज्य-भागीयहविषि सिद्धं स्यात्। तथाहि—'चतुर्ध्रुवायां गृह्णाति सर्वस्मै वा एतद्यज्ञाय गृह्यते' इति ध्रुवास्थमाज्यं प्रधानोपांशुयाजेऽप्युपयुज्यते,

अङ्गभूताज्यभागयोरप्युपयुज्यते । तत्र प्रयाजानिष्ट्वा 'प्रयाजशेषेण हवींष्यभिघारयति' इति विध्यनुसारेण हविरभिघारणं क्रियते । तत्रेदं श्रूयते—'स वै ध्रुवामेवाभिघारयति ततो हि प्रथममाज्यभागौ यक्ष्यन् भवति' इति । अत्र हविरभिघारणे क्रमः प्राथम्यञ्च कीर्तितं वर्तते । ततश्च वेद्यामासादितेषु हविष्षु ध्रुवास्थमाज्यभागाज्यं प्रथममभिघार्य ततोऽन्यानि हवींष्यभिघारयेत् । प्रधानहविर्भिस्सहाङ्गहविषो वेद्यामासदने सत्येव क्रमो हेतुवन्निगदश्चोपपन्नस्स्यात् । तस्माद्वेदिर्बर्हिस्तद्धर्मा अङ्गप्रधानहविरर्थाः ॥

## २. याजमानानां प्रधानार्थत्वाधिकरणम्

ज्योतिष्टोमे पुरुषसंस्काराः वपनादयो विहिताः—'केशश्मश्रु वपते, नखानि निकृन्तते' इति । किमिमे अङ्गप्रधानार्थाः ? उत प्रधानार्थाः ? इति संशयः । यागानुष्ठातरि यजमाने कर्तृत्वं भोक्तृत्वञ्चेति धर्मद्वयं वर्तते । तत्र कर्तृत्वमुपसर्जनं भोक्तृत्वञ्च प्रधानम् । तत्र भोक्तृत्वं कर्मजन्यफलभाक्त्वम् । तदर्थत्वे वपनादिसंस्काराणां प्रधानाङ्गत्वं न स्यात्, प्रधानतुल्यकक्ष्यत्वात् । अतः कर्तृगामिन इमे संस्काराः । कर्ता चाङ्गप्रधानसाधारणः । तथा चाङ्गप्रधानार्थत्वं सिध्यति वपनादीनामिति प्राप्ते,

उच्यते—यजमाने यद्भोक्तृत्वमस्ति तदर्था एवेमे संस्काराः । अर्थात् यजमानगतफलभोक्तृत्वयोग्यतासम्पादकाः । यागेन फले जननीये तेषामुपयोगः । कर्तृत्वार्थत्वे च कर्तृत्वस्य वपनादिसंस्काराणाञ्च गुणत्वात् 'गुणानाञ्च परार्थत्वात्' इति न्यायेन परस्परं सम्बन्धो न स्यात् । भोक्तृत्वार्थत्वे तु नायं दोषः, क्षेत्रसंस्काराणां कर्षणादीनां बीजावापरूप प्रधानर्थत्वं यथा तथा पुरुषसंस्काराणां प्रधानभोक्तृत्वार्थत्वे न विरोधः । वपनादिसंस्कारा अङ्गप्रधानार्थत्वे अग्नीषोमीयपशोरप्यङ्गभूता इति तद्विकृतौ वायव्यपशावपि प्रवर्तेरन्, सिद्धान्ते तु न प्रवर्तेरन्निति फलभेदः । तस्मात्प्रधानमात्रार्था वपनादयः ॥

## ३. वेदिहविरभिमर्शनयोरङ्गप्रधानार्थत्वाधिकरणम्

अस्मिन्नधिकरणे उदाहरणद्वये विचारः । ज्योतिष्टोमे महावेदिः, दर्शपूर्णमासयोर्हविरभिर्शनञ्च । ज्योतिष्टोमे दार्शपौर्णमासिकवेद्या सह

प्राग्वंशः, तस्य पुरस्तात्सदः, हविर्धानमण्डपः, तत्पुरस्ताच्चोत्तरवेदिरितो-
यतो भूमिस्सौमिकी वेदिरित्युच्यते। सेयं वेदिः प्रधानार्था उताङ्ग-
प्रधानार्था ? इति सन्देहः। एवं दर्शपूर्णमासयोः वेद्यामासादितानां हविषां
चतुर्होतृमन्त्रेण पौर्णमास्यां पञ्चहोतृमन्त्रेणामावास्यायाञ्चाभिमर्शनं
क्रियते—'चतुर्होत्रा पौर्णमासीमभिमृशेत्' 'पञ्चहोत्रामावास्याम्' इति।
'पृथिवी होता' इत्यादिको मन्त्रश्चतुर्होता, 'अग्निर्होता' इत्यादिको मन्त्रः
पञ्चहोता। तदिदमभिमर्शनं प्रधानहविषाम् ? उताङ्गप्रधानहविषाम् ?
इति सन्देहः। तत्र ज्योष्टोमः फलं प्रति साधनं प्रधानम्। सर्वत्र
प्रधानस्य चिकीर्षा भवति। तदेव फलं प्रति चिकीर्षितम्। अङ्गानि च-
तदुपकारार्थतयाऽनुष्ठीयन्ते। तानि फलसाधानतया न चिकीर्ष्यन्ते।
तस्माद्वेदिः चिकीर्षितप्रधानमात्रार्थेति पक्षे प्राप्ते,

उच्चते—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्यमङ्गसहितस्य
प्रधानस्य फलसाधनत्वमभिधत्ते, न केवलं प्रधानस्य। ततश्च साङ्ग-
प्रधानस्यैव चिकीर्षा युक्ता। तदर्था महावेदिः। महावेदेरङ्गप्रधानार्थत्वे-
ऽग्नीषोमीयपश्वर्थत्वस्यापि सिद्धत्वात् अग्नीषोमीयपशुविकारे निरूढपशु-
बन्धेऽपि प्रवृत्तिर्भवितुमर्हति। तस्मादङ्गप्रधानार्था महावेदिः॥

'चतुर्होत्रा पौर्णमासीमभिमृशेत्। पञ्चहोत्राऽमावास्यामभिमृशेत्'
इत्यत्र पौर्णमास्यमावस्या शब्दौ द्वितीया विभक्तौ वर्तेते। द्वितीयान्त-
त्वादिमौ शब्दौ कर्मवचनौ। कर्मणोऽभिमर्शनमनुपपन्नम्। तत्रानर्थकं
सदभिमर्शनं 'आनर्थक्यतदङ्गन्यायेन तदीयहविषि पर्यवस्यति। पौर्ण-
मासीनाम्नः प्रधानस्य अमावास्यानाम्नः प्रधानस्य यानि हवींषि तदर्थ-
त्वमेवाभिमर्शनस्येति पक्षे प्राप्ते,

उच्यते—अभिमर्शनं न प्रधानमात्रार्थं किन्त्वङ्गप्रधानार्थम्। चतु
र्होतृपञ्चहोतृवाक्याभ्यां नाभिमर्शनं विधीयते, अभिमर्शनस्य 'आसन्नानि
हवींष्यभिमृशति, इत्यनेनाभिमर्शनस्य प्राप्तत्वात्; किन्तु प्राप्तमभिमर्श-
नमनूद्य गुणो विधीयते। पौर्णमासीकर्मण्यमावास्याकर्मण्यभिमृशेत्
चतुर्होतृपञ्चहोतृमन्त्रैरिति सिध्यति। आसन्नानि च हवींषि अङ्गप्रधान-
सम्बन्धीनि। तस्मात् द्वितीयाप्रतिपाद्यकर्मत्वस्य 'आसन्नानि हवींष्य-

भिमृशेत्' इत्यनेन प्राप्तत्वात् द्वितीयायाः सप्तम्यर्थे लक्षणामाश्रित्याङ्ग-प्रधानहविषामभिमर्शनम् ॥

### ४. दीक्षादक्षिणयोः प्रधानार्थत्वाधिकरणम्

ज्योतिष्टोमे 'वाससा दीक्षयति' 'दण्डेन दीक्षयति' 'कृष्णाजिनेन दीक्षयति' इत्यादयो दीक्षितसंस्काराः श्रुताः। एवं 'तस्य द्वादशशतं दक्षिणा' 'तस्य' ज्योतिष्टोमस्य द्वादशोत्तरं शतं गावो दक्षिणा इति दक्षिणा श्रुता। तदिदं दीक्षादक्षिणमङ्गप्रधानार्थम्? उत प्रधानार्थम्? इति संशयः। तत्र 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' 'दीक्षितस्सोमं क्रीणाति' इत्यग्नीषोमीय-सोमक्रयणाद्यङ्गार्थत्वेन दीक्षासंस्काराणां श्रुतत्वात् फलसंयोगाच्च प्रधानार्थत्वस्यापि सत्त्वात् अङ्गप्रधानार्थत्वम्। एवं दक्षिणायाश्च ऋत्विगानमनस्य सहायोपादित्सया प्रयोगार्थत्वात् प्रयोगस्याङ्गप्रधानार्थत्वात् महावेदिन्यायेनाङ्गप्रधानार्थत्वमिति पक्षे प्राप्ते,

उच्यते––'दीक्षा सोमस्य, दक्षिणा सोमस्य' इति वचनात् साक्षात् प्रधानेन सम्बन्धे सम्भवति परम्परासम्बन्धो न युक्तः। अग्नीषोमीय-सोमक्रमणादीनां दीक्षानन्तरभावित्वेन 'यो दीक्षित' इति वाक्यस्य तत्क्रमानुवादे तात्पर्यं कल्पनीयम्। दक्षिणाया अपि यागकर्तृत्वकारयितृत्वयोर्यजमानस्य सत्त्वादृत्विक्त्वमुखेन प्रधानार्थतैव। तेन निरूढपशौ दीक्षादक्षिणस्य निवृत्तिः प्रयोजनं सिध्यति ॥

### ५. यूपावटदेशलक्षणाधिकरणम्

ज्योतिष्टोमेऽग्नीषोमीये पशौ 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इति श्रुतम्। यूपस्यार्धो भागो वेद्या अन्तः, अर्धश्च भागो वेद्या बहिर्यथा स्यात् तथा यूपस्य खननं कर्तव्यम्। अर्थात् यूपस्य मूलभागे विद्यमानं स्थौल्यपरिमाणं विज्ञाय तस्यार्धो भागो वेद्या अन्तः अर्धश्च वेद्या बहिः यथा स्यात्तथा मिनुयात्। अत्र किमन्तर्वेदीति वेद्येकदेशो मीयमानयूपाङ्गतया विधीयते, बहिर्वेदीत्यनुवादः? उतोभाभ्यामेक एव सन्धिदेशो विधीयते? इति सन्देहे, दीक्षादक्षिणं यथा वचनात् प्रधानाङ्गं तथा महावेदिरपि तदेकदेशद्वारा मीयमानयूपाङ्गम्। तत्रान्तर्वेदि इति विधिः। एकस्मिन्नर्धे वेद्या अन्तः स्थिते अर्धान्तरं वेद्या बहिरेव तिष्ठेदिति बहिर्वेदीत्यनुवाद इति प्राप्ते,

उच्यते--'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इत्यत्रार्धमन्तर्वेदि इत्यस्य विधायकत्वम् अर्धं बहिर्वेदीत्यस्य न विधायकत्वमित्यत्र न किञ्चिद्विनिगमकमस्ति । 'अर्धं बहिर्वेदि इत्येव बहिर्देशविधायकमस्तु, अर्थादन्तर्वेद्यर्धस्य प्राप्तिरस्तु इति प्रश्नः स्यात् । अत उभाभ्यामेव वेद्येकदेशत्वं पुरुस्कृत्य तदुपलक्षितान्तर्देशबहिर्देशोभयात्मक एव सन्धिदेशो यूपमानाङ्गतया विधीयते । उभयविधाने वाक्यभेदापत्तेः । किञ्च-यूपमानमेव न वेदिकार्यम्, वेद्यां सदो मिनोति, हविर्धानं मिनोति, वेद्यामुत्तरवेदिं निवपति, इत्यादीन्यनेकानि सन्ति वेदिकार्याणि । तत्तत्कार्ये वेदिविधेरावश्यकत्वात् न वेदिपरिमाणस्यादृष्टार्थत्वम् । तस्माद्वेदित्वानादरेणैव सन्धिदेशविधिरिति ॥

## ९. हविर्धानस्य सामिधेन्यनङ्गताधिकरणम्

ज्योतिष्टोमे 'उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः' इति श्रुतम् । अयमत्र सन्दर्भः—यागीयहविषां निधानाय ज्योतिष्टोमे हविर्धानमण्डपः उत्तरवेदेः पश्चाद्भागे निर्मीयते । तस्य मण्डपस्य उत्तरदक्षिणभागयोः हविर्धानाख्ये द्वे शकटे भवतः । उभयोरपि शकटयोस्सोमलताऽवस्थापिता-भवति । तत्र दक्षिणभागे स्थिते शकटे यस्सोमः तं तदधस्तादुपावहृत्या-धिषवणफलकसाधनेनाभिषुण्वन्ति । अभिषवणावसरे होता तत्र स्थित्वा सामिधेनीमन्त्रान् पठति । तथा च विषयवाक्यस्यायमर्थः—'उत' अथेत्यर्थे । यत्तत्पदं सप्तम्यन्तम् । 'यत्' यच्छकटसमीपेऽधस्तात् 'सुन्वन्ति' अभिषुण्वन्ति सोमलताम्; 'तत्' तस्मिन् शकटे-तत्समीपे स्थित्वा होता सामिधेनीमन्त्रान् अनुब्रूयादिति । अत्र संशयः—किं हविर्धानशकटं सामिधेन्यङ्गम् ? उत तल्लक्षितो देशः ? इति । तत्र दक्षिणं शकटं सामिधेन्यङ्गम्, तस्मिन् स्थित्वा सामिधेन्यनुवचनस्य विधानात् इति पक्षे प्राप्ते,

उच्यते—शकटं नाङ्गं तत्समीपदेश एवाङ्गम्; होतुश्शकटे स्थातुमशक्यत्वात्, सोमस्य तत्रासादितत्वाच्च । ततश्च लुप्तसप्तम्यन्तस्य तच्छब्दस्य सामीपिकाधारे लक्षणा । तस्माच्छकटसमीपदेश एवात्र विधीयते ॥

## ७. यजमानभिन्नकर्त्रन्तरप्रतिपादनाधिकरणम्

सर्वमपि श्रौतं कर्म दर्शपूर्णमासादिकं किं साङ्गप्रधानं यजमानेन कर्तव्यम् ? उत द्रव्यत्यागदक्षिणादानेषु यजमानः, अन्येषु कर्मसु यजमानो वाऽन्यो वेत्यनियमः ? अथवा द्रव्योत्सर्गे यजमानः कर्ता, अन्येषु चान्य एवेति सन्देहे, 'यजेत स्वर्गकामः' इति वाक्यं यत्फलं प्रतिपादयति तस्य साङ्गप्रधानप्रयोगनिबन्धनत्वात् फले च प्रयोगकर्तुरेवाधिकारात् प्रयोक्ता यजमान एव कर्ता । दक्षिणादानञ्चादृष्टार्थतयाप्युपपद्यते । होत्रध्वर्य्वादिसमाख्या च यजमानस्यैव ।

साङ्गप्रधानानुष्ठातुः फलम् इति युक्तम्, अङ्गानान्तु ऋत्विक्कर्तृकत्वेऽपि यजमानस्य न विरुध्यते, द्रव्यत्यागे यजमानस्य मुख्यत्वात् । ऋत्विक्कर्तृकाङ्गविषये प्रयोजककर्तृत्वसम्भवात् अङ्गानां कर्ता यजमानादन्यो वा भवतु, स्वयं यजमानो वा । अन्यापेक्षा यदा भवति तदा परिक्रयद्वाराऽन्यः कर्ता भवति, यदि नापेक्षा तदा यजमान एव साङ्गं प्रधानमनुतिष्ठतीति पक्षे प्राप्ते,

उच्यते––ऋत्विक्परिक्रयस्याम्नानात् द्रव्योत्सर्गे यजमानः कर्ता अन्यत्र त्वङ्गजाते ऋत्विज एव कर्तारः । परिक्रयो नाम द्रव्यदानेन भृत्यस्वीकरणम् । तदर्थमेव दक्षिणा विहिता । तच्च दक्षिणादानं स्वस्मै न भवति । न हि स्वस्मै स्वयमेव दातुं क्षमते, स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनस्य दानपदार्थत्वात् । तस्मादङ्गविषये यजमानादितरे कर्तारः, द्रव्यत्यागे च यजमानः कर्तेति युक्तम् ॥

## ८. ऋत्विक्सङ्ख्यानियमाधिकरणम्

यजमानादन्ये कर्तारस्सन्तीत्यवगतम् । ते किं बहवः ? उतैक एव ? किं वा यावत्यस्समाख्याः तावन्तः कर्तारः ? इति संशये, कर्तृपरिमाणस्य न नियमः । एको द्वौ त्रिचतुरा वा कर्तारो भवितुमर्हन्ति । यस्मिन् प्रयोगे यावद्भिः कार्यं निर्वर्तयितुं शक्यते तावन्तः कर्तार इत्यनियमः । परिक्रयविध्यनुसारेण परिक्रीयन्ते ऋत्विजः । परिक्रयविधिश्चैकस्य द्वयोः त्रिचुराणां समावेशेऽप्युपपद्यते । अतोऽनियम इति प्रथम पक्षः ।

एकस्यैव कर्तुः परिक्रयेण विध्युपपत्तौ न द्वितीयादेरुपादानम्। अतो द्रव्योत्सर्गे यजमानः, अन्येषामनुष्ठानायैकः कर्तेति द्वितीयः पक्षः।

सिद्धान्तस्तु--क्रतुषु 'अध्वर्युर्ग्रहं गृह्णाति, होता शंसति, उद्गातोद्गायति, ब्रह्माभ्यनुजानाति, आग्नीध्रोऽग्नीन् विहरति' इत्येवं यावन्ति कर्तॄणां नामानि श्रूयन्ते तावन्तः कर्तारो भवेयुः। यथा 'अथैष ज्योतिः, अथैष विश्वज्योतिः' इत्यत्र संज्ञया कर्मभेदः तथैवाध्वर्य्वादिनाम भेदेन कर्तृभेद आश्रयणीयः। कर्मण आरम्भे ऋत्विजां वरणसंस्कारो भवति–'अग्निर्मे होतासौ मानुषः' इति होतुः, चन्द्रमा मे ब्रह्मासौ मानुषः' इति ब्रह्मणः, इत्येवमन्येषां वरणश्रवणात्। तस्य तस्य क्रतोः कर्तृसङ्ख्यापि नियता वर्तते–'दर्शपूर्णमासयोश्चत्वार ऋत्विजः, पशुबन्धस्य षडृत्विजः; चातुर्मास्यानां पञ्चर्त्विजः, ज्योतिष्टोमे षोडशर्त्विजः सदस्यश्च' इति। तस्माद्वरणं समाख्याञ्चाश्रित्य कर्तॄणां सङ्ख्यानियमः॥

## ९. चमसाध्वर्य्वधिकरणम्

कर्तॄणामन्यत्वं तेषां सङ्ख्या परिमाणञ्च साधितम्। ज्योतिष्टोमे चमसाध्वर्यव इति केचन व्रियन्ते--'रश्मयो मे चमसाध्वर्यव' इति मन्त्रेण। ते किमृत्विक्ष्वेवान्तर्भवन्ति? उतान्ये? इति सन्दिह्यते। पूर्वं वरणनिमित्तकः कर्तृभेदस्साधितोऽध्वर्युब्रह्मादीनाम्। चमसाध्वर्युशब्दो यौगिकः--चमससम्बन्धिनोऽध्वर्यव इति। यौगिकत्वाद् वरणनिमित्तक कर्तृभेदकत्वं नाश्रयणीयम्। यद्यपि 'चमसाध्वर्यून् वृणीते' इति वरणविधिरस्ति, तथाप्यदृष्टार्थं तद्वरणं भविष्यतीति ऋत्विक्ष्वेव चमसाध्वर्यवोऽन्तर्भवन्ति इति पक्षे प्राप्ते,

उच्यते--'मध्यतः कारिणां चमसाध्वर्यवः' 'होत्रकाणां चमसाध्वर्यवः' इति भेदेन व्यवहारदर्शनात् चमसाध्वर्यवो भिन्ना ऋत्विग्भ्यः। ब्रह्महोत्रादिषु 'मध्यतः कारिणः' इति 'होत्रका' इति भेदद्वयम्। तत्र ब्रह्म होतृयजमानोद्गातारश्चत्वारो मध्यतः कारिणः, मैत्रावरुणब्राह्मणाच्छंसि-पोतृ-नेष्टृच्छावाकाग्नीध्रा होत्रकाः षट्। इमे चमसिनः। एतेषां सम्बन्धिनोऽध्वर्यवश्चमसाध्वर्यव इति भेदघटितत्वान्न तेषु चमसाध्वर्यूणामन्तर्भावो भवितुमर्हति। तस्मादृत्विग्भ्योऽन्ये चमसाध्वर्यवः॥

## १०. चमसाध्वर्यूणां बहुत्वाधिकरणम्

चमसाध्वर्युषु एको द्वौ बहव इत्यनियमः? उत बहव इति नियमः? इति सन्देहे–'चमसाध्वर्यून् वृणीते' इत्यत्रोद्देश्यगतबहुत्वस्य ग्रहैकत्वन्यायेनाविवक्षितत्वादनियम इति पक्षे प्राप्ते,

उच्यते–'चमसाध्वर्यून् वृणीते' इत्यस्य वरणेन चमसाध्वर्यून् संस्कुर्यादिति नार्थः। वाक्यान्तरेण चमसाध्वर्यूणामविहितत्वात्। 'ग्रहं सम्मार्ष्टि' इत्यत्र 'ग्रहैर्जुहोति' इति वाक्येन क्रत्वर्थतया प्राप्तग्रहोद्देशेन 'ग्रहं सम्मार्ष्टि' इति वाक्यं सम्मार्गाख्यं संस्कारं विधत्त इत्युद्देश्यगतायास्सङ्ख्याया अविवक्षा स्वीकृता। प्रतुते तु क्रत्वर्थत्वेन चमसाध्वर्यूणां प्राप्तिरनेनैव वाक्येन वक्तव्या। तथा च वरणसंस्कृतैश्चमसाध्वर्युभिः क्रतूपकारं भावयेदित्यर्थस्स्वीकर्तव्यः। एवं सति चमसाध्वर्यूणां क्रतुं प्रत्युपादेयत्वात् पश्वेकत्वन्यायेन बहुत्वं विवक्षणीयम्। ज्योतिष्टोम प्रकरणपठितत्वेन क्रतुसम्बन्धश्चमसाध्वर्यूणां प्रयोगवचनेन सुलभः। ततश्चैकमेव वाक्यं प्रकरणसहकृतं सद्वरणस्य चमसाध्वर्यूणां सङ्ख्यायाश्च क्रतुसम्बन्धं विधत्ते, अनन्तरञ्चारुणैकहायनीन्यायेन यथायोगमन्वयस्सिध्यति–वरणोत्पादितैश्चमसाध्वर्युभिः क्रतुमुपकुर्यादिति। अतश्च बहुत्वमुपादेयगतं विवक्षणीयमिति बहवश्चमसाध्वर्यव इति॥

## ११. चमसाध्वर्यूणामियत्ताधिकरणम्

बहवश्चमसाध्वर्यवः कियन्त इति संशये 'प्रथमं वा नियम्येत' इति कपिञ्जलाधिकरणन्यायेन (११. १. ८) त्रयाणां ग्रहणमिति प्राप्ते,

उच्यते––होतृचमसः ब्रह्मचमस इति चमसस्वामिनो दश भवन्ति। तेषां चमसैर्होमो विहितः। अतश्चमसाध्वर्यूणां दशत्वं सिध्यति। तेन ज्योतिष्टोमविकृतौ दशपेये 'दश दश चमसाध्वर्यवः' इत्यनुवाददर्शनमुपपन्नं भवतीति दश चमसाध्वर्यवः॥

## १२. शमित्रधिकरणम्

ज्योतिष्टोमे शमिता–पशुसंज्ञपयिता परिगणितेषु ऋत्विक्षु अन्तर्भवति, तेभ्योऽन्यो वेति संशयः। यथा चमसाध्वर्यव ऋत्विग्भ्योऽन्ये तथा शमितापि तेभ्योऽन्यः संज्ञाभेदात् इति पक्षे प्राप्ते,

उच्यते—संज्ञाधिकरणे द्वितीये उत्पत्तिवाक्यगतसंज्ञाया भेदकत्वं प्रतिपादितम्। तन्न्यायेन 'चमसाऽध्वर्यून् वृणीते' इत्युत्पत्तिगतचमसाध्वर्युसंज्ञाशब्दः प्रकृतऋत्विग्भ्यो भेदक इति युक्तम्, तथा 'शमितारं वृणीते' इति वाक्यं न श्रूयते। शमयति पशुं संज्ञपयतीति यौगिकव्युत्पत्त्या शमितृशब्दो नेयः। संज्ञपनञ्चाध्वर्यवम्। अध्वर्युगणे अध्वर्युः प्रतिप्रस्थाता नेष्टा उन्नेता चेति चत्वारः पुरुषाः। तत्र 'पराङावर्ततेऽध्वर्युः पशोस्संज्ञप्यमानात्' इत्यध्वर्योः पराङावर्तनस्य श्रुतत्वात् प्रतिप्रस्थातृनेष्ट्रुन्नेतृषु कश्चिच्छमिता भवति। तेनाध्वर्यवसमाख्याया उपपत्तिरिति शमिता ऋत्विक्ष्वेवान्तर्भवति। ननु 'क्लेमानं वैकर्तस्य शमितुः दद्यात् स ब्राह्मणाय दद्यात् यद्यब्राह्मणस्स्यात्' इति वाक्ये 'स यद्यब्राह्मणस्स्यात्' इति शमितुरब्राह्मणत्वकीर्तनेन ऋत्विग्भ्योऽन्यश्शमिता (क्लेमा मांसखण्डविशेषः। विकर्ता एव वैकर्तः—प्राणशैथिल्यसंज्ञपनकर्तेत्यर्थः।) इति चेदुच्यते—'यद्यब्राह्णस्स्यात्' इति वाक्यस्य क्षत्रियो वैश्यो वा यदि यजमानस्स्यात् तदा शमिता स्वभागं ब्राह्मणाय दद्यात् न स्वयमुपभुञ्जीतेत्यर्थपरत्वान्न दोषः। अतः ऋत्विक्ष्वेव शमितान्तर्भवति। आचारे तु शमिता ऋत्विग्भ्योऽन्य एव चतुर्थवर्णो गृह्यते। विशसनादिकन्तु ऋत्विक्कर्तृकम्। वैकर्तः विशसनकर्तेत्यर्थः॥

## १३. उपगात्रधिकरणम्

ज्योतिष्टोमे 'उपगातार उपगायेयुः' इत्युपगातारः श्रुताः। गायकेषु मुख्यो गायकः कश्चन भवति। तस्मिन् विरम्य गायति सति तदन्तराले तद्गुणभूता गायका उपगातारो भवन्ति। प्रकृते गानकर्तारो मुख्या उद्गाता प्रस्तोता प्रतिहर्ता चेति त्रयः। तद्गुणभूता गायकाः किमृत्विक्ष्वेवान्तर्भवन्ति? उतान्ये? इति संशये, ऋत्विग्भ्योऽन्य एवोपगातारः, ऋत्विक्षु मिथो गुणप्रधानभावोऽनुपपन्नः; सर्वेषां गुणभूतत्वात् गुणानां मिथस्सम्बन्धोऽनुपपन्नः। अत उपगातारः ऋत्विग्भ्योऽन्ये इति पक्षे प्राप्ते;

उच्यते—शमित्रधिकरणन्यायेन ऋत्विक्ष्वेवान्तर्भवन्त्युपगातारः। मिथो गुणभावस्तु वचनादुपपद्यते। किञ्च 'नाध्वर्युरुपगायेत्' इति

निषेधबलाज्ज्ञायते उपगातार ऋत्विक्ष्वन्तर्भवन्ति इति। याज्ञिकास्तु ऋत्विग्भ्योऽन्य इति मन्यन्ते ॥

## १४. सोमविक्रेतुः पृथक्त्वाधिकरणम्

सोमविक्रेता किं ऋत्विक्ष्वन्यतमः? उत तेभ्योऽन्य इति संशये सोमविक्रेतृशब्दस्य यौगिकत्वात् वरणविध्यभावाच्चोपगातृवत् ऋत्विजामन्यतम इति पक्षे प्राप्ते,

उच्यते--ऋत्विग्भ्योऽन्यः। उपगातॄणां 'उपगातार उपगायन्ती' ति विधिरस्ति, तथा सोमविक्रयिणो विधिर्नास्ति। अध्वर्युप्रभृतयः क्रत्वर्थतया विहिताः, सोमविक्रयी तु न तथा विहितः। न च 'सोमं क्रीणाति' इति क्रयविधिना विक्रयविधिराक्षिप्यत इति वाच्यम्। द्रव्यलोभेन विक्रये प्रवृत्तं पुरुषमादाय क्रयविध्युपपत्तेः विक्रयविध्यनपेक्षणादृत्विक्कर्तृकत्वानुपपत्तेश्च। तस्मादृत्विग्भ्योऽन्यस्सोमविक्रयी ॥

## १५. ऋत्विक्च्छब्दवाच्यताधिकरणम्

ऋत्विक्छब्दार्थो विचार्यतेऽस्मिन्नधिकरणे। ज्योतिष्टोमे ऋत्विजस्सप्तदश भवन्ति। अध्वर्युः प्रतिप्रस्थाता, नेष्टा, उन्नेता (अध्वर्युगणः) ब्रह्मा, ब्राह्मणाच्छंसी, आग्नीध्रः पोता (ब्रह्मगणः) होता मैत्रावरुणः अच्छावाकः, ग्रावस्तुत् (होतृगणः) उद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्यः (उद्गातृगणः) सदस्य इति सप्तदश। चमसाध्वर्यंव इत्येतेभ्योऽन्ये इत्यवगतम्। इमे सर्वेऽपि कर्तार इत्येतदपि समधिगतम्। किं चमसाध्वर्युसहितास्सर्व एव ऋत्विक्छब्दवाच्याः? उत सप्तदशैव तच्छब्दवाच्या इति संशयशरीरम्। तत्र यागीयकर्मकरत्वमृत्विक्छब्दस्य प्रवृत्तिनिमित्तम्। ऋतौ यज्ञे यजन्ति यज्ञसम्बन्धीनि कार्याणि कुर्वन्तीति ऋत्विजः। एतादृशकार्यकरत्वं चमसाध्वर्युसहितेषु सर्वेषु वर्तत इति सर्वे ऋत्विज इति पक्षे प्राप्ते;

उच्यते--'सौम्यस्याध्वरस्य सप्तदशर्त्विजः' इति सङ्ख्यासप्तदशत्वदर्शनात् सप्तदशभ्योऽन्ये नर्त्विजः। अन्येषामपि ऋत्विक्त्वे प्राप्ते सप्तदशवचनं द्वादशकपालेऽष्टाकपालशब्दवदवयुत्यानुवादो भवत्विति चेन्न; द्वादशकपाल इत्यत्र द्वादशत्वं 'वैश्वानरं द्वादशकपालं निर्वपेत्' इति विधि-

विषयं यथा तथाऽत्र परमसङ्ख्या न विधिविषया। विधिबोधितद्वादश-सङ्ख्यायामष्टत्वसङ्ख्याऽवयुत्यानुवादो भवति। प्रकृते तु न परमसङ्ख्या काचिदाम्नायते, येन तत्स्तोतुं सप्तदशसङ्ख्याऽनूद्येत। ऋत्विक्छब्दो न यौगिकः किन्तु वरणनिमित्तकः, 'ऋत्विजो वृणीते' इति वचनात्। वरणेन ऋत्विजस्संस्कुर्यादिति तदर्थः, न तु ऋत्विजस्सतो वरणेन संस्कुर्यादिति। वरणात्प्राक् क्वापि ऋत्विक्छब्दप्रयोगाभावात्। अतस्स-प्तदशवरणान्येव ऋत्विक्छब्दप्रवृत्तिनिमित्तम्। ननु वरणं निमित्ती-कृत्य ऋत्विक्छब्दस्सप्तदशसु वर्तते, ऋतौ यजतीति यौगिकव्युत्पत्ति-माश्रित्य सप्तदशभ्योऽन्यत्रापि स्यादित्यनेकार्थत्वमन्याय्यमिति चेत् प्रकरणवशेन नानार्थत्वेऽप्यदोष इति भाष्यकृतः।

वार्तिककृतस्तु—वरणनिमित्तकत्वेऽवयशक्तिबाधापत्तिः, योगप्रदर्श-कस्य 'ऋत्विग्दधृक्' इति व्याकरणानुशासनस्य बाधापत्तिश्च स्यादिति योगाबाधेनाध्वर्युत्वब्रह्मत्वादिकं प्रयोगोपाधिरित्युचितम्। अध्वरं युनक्तीति व्युत्पत्त्या तु अध्वरयुक् इत्येव रूपं स्यात् न त्वध्वर्युरिति। अतो वरणनिमित्तकत्वमेव। ऋत्विक्छब्दस्तु प्रसिद्धावयवार्थकत्वात्सप्त दशत्ववचनाच्च यज्ञियकर्मविशेषनिबन्धन इत्यभिप्रयन्ति। एतेन नानार्थ-कत्वं नाङ्गीकृतं भवति॥

## १६. ऋत्विक्त्वनियमाधिकरणम्

सोमे सप्तदशर्त्विज इत्यधिगतम्। तत्राध्वर्युब्रह्मादीनां चमसाध्व-र्यूणाञ्च मध्ये यैः कैश्चित्सप्तदशत्वं पूरणीयम्? उतास्ति नियमः? इति सन्देहे नियामकाभावादनियम इति पक्षे प्राप्ते,

उच्यते—सप्तदशत्वे दक्षिणादानं नियामकम्। सप्तदशत्वञ्च चमसाध्वर्युवर्जितेषु पर्यवस्यति। 'ऋत्विग्भ्यो दक्षिणां ददाति' इति प्रकृत्याग्नीध्रमारभ्य प्रतिहर्त्रन्ताः सप्तदश चमसाध्वर्युवर्जिता ऋत्वि-जः श्रूयन्ते। चमसाध्वर्यूणां द्रव्यान्तरेण परिक्रयः। किञ्च सत्रे दीक्षा-वसरे गृहपतिं दीक्षयित्वा' ब्रह्माणं दीक्षयति' इत्यादिना ब्रह्मादयस्सप्त-दशैवानुक्रान्ताः न तु चमसाध्वर्यव इत्यतश्चमसाध्वर्यवो न ऋत्विजः॥

## १७. यजमानसप्तदशत्वाधिकरणम्

दक्षिणायां दीक्षायाञ्चानुक्रान्ता ऋत्विज इत्यधिगतम्। अध्वर्व्वा-

दिगणभेदेन षोडशैवर्त्विजो भवन्ति । सप्तदशः कः ? किं सदस्यः ? उत यजमानः ? इति सन्देहे, कर्मकरत्ववत्सप्तदशः सदस्य एव न तु यजमानः । कृताकृतप्रत्यवक्षेणकार्याय सदस्यो नियुज्यते । अतस्सदस्य एव सप्तदश इति पक्षे प्राप्ते,

उच्यते––यजमानसप्तदशा एवर्त्विजः । अध्वर्यु ब्रह्मादिषु यागीयाङ्गकर्मकर्तृत्वमस्तीति ते ऋत्विजः । तत्सामान्याद्यजमान एव तादृशः, न तु सदस्यः । विहिताङ्गकर्मणां कर्तृत्वेन ये विहितास्त ऋत्विजो भवन्ति । अनेन सोमविक्रयिणो व्यावृत्तिस्सिध्यति, विक्रयस्याविहितत्वात् । चमसाध्वर्यूणामन्यतमो न सप्तदशो भवितुमर्हति, अन्यतमस्यानिर्द्धारणात् । कृताकृतपर्यवेक्षणमपि न विहितम् । अतस्सदस्य व्यावृत्तिः । यजमानस्तु–त्यागानुमन्त्रणपठनाद्यवेक्षणविष्णुक्रमक्रमणादिविहिताङ्गकर्माण्यनुतिष्ठतीति यजमान एव सप्तदशः ॥

## १८. ऋत्विजां नियतपदार्थकर्तृत्वाधिकरणम्

अध्वर्य्वादीनां यागीयाङ्गकर्मकर्तृत्वेन शेषत्वमधिगतम् । तच्च शेषत्वमनियमेन किं सर्वकार्येषु ? उत समाख्यया नियमः ? इति संशये, प्रकरणे कर्तव्यत्वेन विहितान्यङ्गानि स्वस्वानुष्ठानाय कर्तॄनाक्षिपन्ति । कर्तारश्च क्रतुभेदेन चत्वारः पञ्च षट् इत्येवं नियताः । ते यद्यदङ्गं कर्तुं समर्थाः स्वशक्त्यनुसारेण तत्तदङ्गमनुतिष्ठन्तीति प्रकरणसहकृतेन सामर्थ्येनैवाङ्गानामनुष्ठाने सम्भवति दुर्बलाः आध्वर्यवम् हौत्रमित्यादयोऽकिञ्चित्कराः । अतो लिङ्गप्रकरणाभ्यां कर्तॄणामनियमः । ननु स्फयकपालाधिकरणन्यायेन (३.१.५) स्फयादीनाम् उद्धननादिनियतकार्यसाधनत्वमध्वर्युप्रभृतीनामस्त्विति चेन्न; तत्र 'स्फयेनोद्धन्ति' 'कपालेषु श्रपयति' 'शूर्पेण विविनक्ति' इत्यादिविनियोगवचनानां सत्त्वात् अत्र तादृशवचनानामभवात् समाख्यायाश्च दुर्बलत्वात् । किञ्चाधानसिद्धाहवनीयाद्यग्नीनां यथा प्रकृतिविकृतिसर्वार्थत्वम् 'अग्नयश्च स्वकालत्वात्' ( ३.७.३७ ) इति सूत्रेण व्यवस्थापितं तथा लिङ्गप्रकरणाभ्यां कर्तॄणामनियम इति पक्षे प्राप्ते,

उच्यते––'आध्वर्यवम्' हौत्रम्' इत्यादिभिस्समाख्याभिः संयुक्तानि

कर्माणि सन्ति। तासां समाख्यानां प्रयोजनवत्त्वं तावदङ्गीकर्तव्यम्, अन्यथा समाख्यानां वैयर्थ्यं स्यात्। समाख्या इमा नित्यवच्छ्रुताः। तासामनुवादत्वेन नयने नित्यवच्छ्रवणविरोधस्स्यात्। समाख्यापेक्षया लिङ्गप्रकरणयोर्बलीस्त्वं तदा सिध्यति यदा च समाख्याभिर्विरोधो-भवति। न चात्र विरोधोऽस्ति। प्रत्युत लिङ्गं प्रकरणञ्च समाख्यासा-पेक्षे। शक्तिरस्तीति न सर्वस्सर्वं कर्तुं प्रवर्तेत। अनेकेषु कर्तव्यपदार्थेषु सत्सु किं मया कर्तव्यमित्यपेक्षेतैव। प्रकरणेन पदार्थेषूपस्थापितेषु कः पदार्थो ममानुष्टेय इति कर्तुरपेक्षा जायत एव। तत्र समाख्या 'आध्वर्य-वम्' इत्यादिः इमेऽध्वर्युणाऽनुष्ठेयाः इमे होत्राऽनुष्ठेया इति सविभागं पदार्थानवबोधयति। तत्राप्येकोऽध्वर्युर्होता वा एकाकी सर्वमाध्वर्यवं होत्रं वा न शक्नोति कर्तुमिति तत्तत्सहायकाः तत्तद्गणे त्रयस्त्रयः परिग-णिताः। अतः लिङ्गप्रकरणाभ्यां कर्तृष्वव्यवस्थया प्राप्तेषु केन किं कर्तव्यमिति व्यवस्थासमर्पकत्वेन समाख्या प्रवर्तते। अन्यथा समाख्याऽन-र्थिका स्यात्। तस्मात्समाख्यया कर्तृनियमः॥

## १९. प्रैषानुवचनस्य मैत्रावरुणकर्तृकत्वाधिकरणम्

मैत्रावरुणकर्तव्यमत्र विचार्यते। मन्त्रेषु प्रैषमन्त्रा अनुवचनमन्त्राः प्रैषानुवचनमन्त्रा इति भेदेन व्यवहारः। तत्र 'अनुब्रूहि' 'यज' इत्या-दयः प्रैषा आध्वर्यवसमाख्याकाः। एवमध्वर्युणा प्रैषितेन ऋत्विजा पठ्य-माना मन्त्रा याज्यापुरोनुवाक्याः। इमे च हौत्रसमाख्याकाः। 'प्रेष्य' इत्यध्वर्युकर्तृक प्रैषानन्तरं मैत्रावरुणेनानूच्याः 'होतायक्षदग्निम्' इत्या-रभ्य 'होतर्यज' इत्यन्ताः प्रैषानुवचनोभयात्मका इति वैदिकी स्थितिः। ज्योतिष्टोमे 'मैत्रावरुणः प्रेष्यति चानुचाह' इति श्रुतम्। प्रैषं करोति अनुवचनञ्च करोतीति तदर्थः। तत्र किं सर्वेषु प्रैषेषु सर्वे-ष्वनुवचनेषु च मैत्रावरुणविधिः? उत प्रैषानुवचनेष्वेव? इति सन्देहे, 'मैत्रावारुणः प्रेष्यति चानुचाह' इति वाक्येन केवलप्रैष-केवलानु-वचन-प्रैषात्मकानुवचनेषु साधारण्येन मैत्रावरुणो विधीयते। यद्यप्यत्र चशब्दाभ्यां समुच्चयोऽवगम्यते तेन प्रैषात्मकानुवचनेष्वेव तत्कर्तृत्वं प्रतीयते, तथापि समुच्चयस्योद्देश्यगतत्वेनाविवक्षितत्वात् सर्वेषु प्रैषेष्व-नुवचनेषु मैत्रावरुणः कर्तेति पक्षे प्राप्ते,

उच्यते—दर्शपूर्णमासयोः प्रैषकर्ताऽध्वर्युः अनुवचनकर्ता च नियतः। ज्योतिष्टोमे 'प्रेष्य' इति प्रैषेऽध्वर्युणा कृते मैत्रावरुणः प्रैषात्मकानुवचनमन्त्रेण होतारं प्रेष्यति। तदनु होता केवलानुवचमन्त्रं पठति। तत्र केवलप्रैषे केवलानुवचने च समाख्ययाऽध्वर्युः होता च प्राप्तौ। उभयात्मकमन्त्रेषु 'होता यक्षत्' इत्यादिषु मन्त्रैकत्वेन कर्तृभेदो न सम्भवति। मन्त्रभेदे सति कर्तृभेदः प्राप्नुयात्। अत उभयात्मकमन्त्रेषु होतुरध्वर्योश्च प्रच्युतत्वात्कर्ताऽपेक्षितः। स चानेन मैत्रावरुणो विधीयते। न च केवलप्रैषेषु केवलानुवचनेषु च समाख्यया कर्तृत्वमवगन्तव्यम्। समाख्या च विलम्बितप्रवृत्तिका। वचनन्तु शीघ्रप्रवृत्तिकम्। अतो वचनात्सर्वप्रैषानुवचनेषु मैत्रावरुणकर्तृकत्वमेवास्त्विति वाच्यम्, समाख्याया अबाधेनैवोभयात्मकमन्त्रेषु मैत्रावरुण विधेरुपपत्तेः। तस्मादुभयात्मकमन्त्रेष्वेव मैत्रावरुणविधिः॥

### २०. चमसहोमेष्वध्वर्युकर्तृकत्वाधिकरणम्

'चमसाञ्जुहोति' इत्यादिचमसकार्याणि किं चमसाध्वर्युकर्तृकाणि? उताध्वर्युकर्तृकाणि? इति संशये, चमसाध्वर्यव इति समाख्यविशेषेण चमसाध्वर्यव एव कर्तार इति पक्षे प्राप्ते,

उच्यते—अध्वर्युरेव चमसकार्याणि कुर्यात्। चमसाध्वर्युकर्तृकं कार्यम् आध्वर्यवमिति सामान्यसमाख्याप्रवृत्तिमूलकम्। आध्वर्यवमिति समाख्यासामान्यम्, चमसाध्वर्यव इति विशेषसमाख्या। सामान्यविशेषयोर्बाध्यबाधकभावस्तत्रैव प्रवर्तते, यत्र सामान्यसमाख्यामनपेक्ष्य विशेष समाख्या प्रवर्तते। यथा नेष्ट्रीयं पोत्रीयमित्यादौ। यत्र तु सामान्यसमाख्यामपेक्ष्यैव विशेषसमाख्या प्रवर्तते न तत्र बाध्यबाधकभावः। प्रकृते चमससाधनाध्वर्युकार्यकारित्वाच्चमसाध्वर्युसमाख्या प्रवर्तत इति सामान्यसापेक्षत्वात्। यदि सामान्यसमाख्ययाऽध्वर्युश्चमसकार्याणि न कुर्यात् तदा तत्कार्यकारिणामध्वर्युकार्यकारित्वाभावेन चमसाध्वर्युसमाख्यैव न स्यात्। तस्मादध्वर्युरेव चमसकार्याणि कुर्यात्। किञ्च 'हुत्वा हुत्वा तं तं चमसं चमसाध्वर्यवे प्रयच्छति' इति सवनमुखप्रचारे श्रवणात् चमसाध्वर्युभ्यो भिन्नः चमसहोमकर्ता प्रतीयते। अतोऽध्वर्युरेव चमसकार्याणि कुर्यादिति॥

## २१. वाजपेयादेरनेककर्तृकत्वाधिकरणम्

ज्योतिष्टोमाख्यं कर्म ऋग्यजुस्सामवेदैस्साध्यं कर्म। ऋग्वेदो होतृवेद इति यजुर्वेदोऽध्वर्युवेद इति सामवेद उद्गातृवेद इति समाख्याः। ऋग्वेद-सम्बन्धीन्यङ्गानि याज्या-पुरोनुवाक्या-प्रातरनुवाक-शस्त्रादीनि। सोमाभिषवादीनियानुषाणि। स्तोत्रादीनि सामवेदीयान्यङ्गानि। ज्योतिष्टोम इमान्यङ्गानि भवन्ति, तानि ज्योतिष्टोमविकृतिष्वतिदिश्यन्ते। अस्यां स्थितौ वाजपेयाख्यः सोमयागो यजुर्वेद उत्पन्नः। तत्र पूर्वोक्तान्यङ्गान्यतिदेशेन प्राप्नुवन्ति, तानि किं सर्वाण्यध्वर्युणैव कर्तव्यानि? उत प्रकृतिवत्समाख्यावशेन तेन तेन कर्तव्यानि? इति संशये, तृतीयाध्यायस्य तृतीयपादीयगुणमुख्यव्यतिक्रमाधिकरणेऽङ्गैर्मुख्यस्यानुसरणं कर्तव्यमिति व्यवस्थापितम्। तन्न्यायेन प्रधानोत्पत्तिवेदानुसारेण तदङ्गानि नेतव्यानि। प्रधानोत्पत्तिवेदश्च यजुर्वेदः, अङ्गानामुत्पत्तिवेदश्चान्यः। अध्वर्युवेदसमाख्याते यजुर्वेदे प्रधानमात्रस्यैव वाजपेयस्य पाठो विद्यते, तदङ्गानां वेदान्तरपठितत्वेऽपि प्रधानोत्पत्तिवेदेनैव तानि विहितानीत्यङ्गीकर्तव्यम्। यदा हि 'वाजपेयेन स्वाराज्यकामो यजेत' इति फलोद्देशेन यागो विधीयते, तदाऽङ्गसहितस्यैव यागस्य विधानमङ्गीकर्तव्यम्। साङ्गं वाजपेयाख्यं कर्म याजुर्वेदिकमिति समाख्यायां सिद्धायाम् अविहितेतिकर्तव्यताकत्वादस्यानन्तरमतिदेशेनाङ्गानि प्राप्नुवन्ति। अतिदेशात्प्रागेव समाख्यया वाजपेयस्य साङ्गस्याध्वर्यवत्वं निर्धारितं भवतीति स्तोत्रशस्त्रादीनां कर्ताऽध्वर्युरेव। ज्योतिष्टोमे च 'होता शंसति' 'उद्गाता स्तुवते' इत्यादिवचनबलेन होत्रादिकर्तृकत्वम्, प्रकृते च तादृशवचनाभावेनाध्वर्युरेव सर्वेषामङ्गानां कर्तेति पक्षे प्राप्ते;

उच्यते—ज्योतिष्टोमादङ्गानि तत्तत्कर्तृकाण्येवातिदिश्यन्ते। सोमाभिषवस्तोत्रशस्त्रादीनि यथाङ्गानि तथा कर्ताप्यङ्गम्। अङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव प्रयोगविधिर्भवति। स च 'वाजपेयेन स्वाराज्यकामः' इत्यधिकारविधिः प्रयोगविधिरेव। प्रयोगविधित्वं तदैव परिपूर्णं भवति, यदा चातिदेशेन सर्वाण्यङ्गानि प्राप्नुवन्ति। तदनन्तरमेव समाख्यायाः प्रवृत्तिः, न ततः पूर्वम्। एवञ्च समाख्या

प्रथमं प्रवृत्ता सती चोदकतः प्रबलेति वक्तुं न शक्यते। चोदकश्च नानाकर्तृकाण्यङ्गानि प्रापयति। तन्निवारणं समाख्यया न भवितुमर्हति। तस्माद्वाजपेये प्रकृतिवत् भिन्नकर्तृकाण्येवाङ्गानि, न केवलमध्वर्युकर्तृकाणि ॥

इति तृतीयस्य सप्तमः पादः



## तृतीयाध्यायस्याष्टमः पादः

### १. दक्षिणादानस्य स्वामिकर्तृत्वाधिकरणम्

पूर्वस्मिन् पादे समाख्यामवलम्ब्य कर्तृव्यवस्था प्रदर्शिता। अथास्मिन् पादे तदपवादः प्राधान्येन निरूप्यते। ज्योतिष्टोमे—'तस्य द्वादशशतं दक्षिणा' ऋत्विग्भ्यो दक्षिणां ददाति' इति श्रुतम्। दक्षिणा ऋत्विगानमनाय दीयते। आनमनं परिक्रयरूपम् लोके कर्मकरा यथा परिक्रीयन्ते, तथा क्रतुसम्बन्धीनि कार्याणि कर्तुमृत्विजः दक्षिणादानेन परिक्रीयन्ते। तदिदं परिक्रयणं किमध्वर्युणा कर्तव्यम्? उत यजमानेन? इति संशयः। अध्वर्युकाण्डे ज्योतिष्टोमस्य तदङ्गस्य दक्षिणादानस्याम्नातत्वात् आध्वर्यवमिति सामाख्यावशादध्वर्युणा कर्तव्यम्। 'स्वर्गकामो यजेत' इत्यधिकारविधिः साङ्गस्य क्रतोरनुष्ठाने यजमानस्यैव कर्तृत्वं बोधयति; तथापि 'आध्वर्यवम्' इति समाख्या निरवकाशा सती यजमानकर्तृकत्वं बाधित्वाऽध्वर्युकर्तृकत्वं बोधयतीति पक्षे प्राप्ते,

उच्यते—साङ्गे कर्मणि यजमानस्यैवाधिकारः, स एव साङ्गस्य कर्मणः कर्ता किन्तु परिक्रयाम्नानबलेनाङ्गेषु परम्परया कर्तृत्वमिति पूर्वस्मिन् पादे सप्तमाधिकरणे व्यवस्थापितम्। ऋत्विजां परिक्रयणानन्तरमेव तत्तत्समाख्यया तस्य तस्य कर्तृत्वं वक्तव्यम्। परिक्रयो नाम द्रव्यदानेन भृत्यस्वीकरणम्। लोके कार्यापवर्गे कार्यकर्तृभ्यो द्रव्यं दीयते। परिक्रयावसरे तस्मै द्रव्यं न दीयते। वाचा केवलं निर्दिश्यते—एतावद्दामीति। तथैवाऽध्वर्युः होता वा अस्मिन् क्रतावियती दक्षिणा, स्वमा-

ध्वर्यवं कुरु; त्वं हौत्रं कुरु इत्येवं निश्चयानन्तरमेवाध्वर्यवादयस्समाख्याः प्रवर्तन्ते । तथा सति परिक्रयमध्वर्युः कथं कुर्यात् ? द्रव्यन्तु यजमानस्य, नाध्वर्योः । स कथं परिक्रयं कुर्यात् । यजमानद्रव्येऽध्वर्योस्स्वामित्वाभावात् । अतो यजमान एव परिक्रेता नाध्वर्युः ॥

## २. फलिसंस्काराणां याजमानताधिकरणम्

अध्वर्युवेदविहिते ज्योतिष्टोमे 'केशश्मश्रु वपते' 'नखानि निकृन्तते' 'दतो धावते' इति विहितवपनादयस्संस्कारा उदाहरणम् । वपते-वापयति, निकृन्तते-निकृन्तयतीत्यर्थः । इमे संस्कारा अघनिर्हरणद्वारा पुरुषार्थाः । ते किमाध्वर्यवाः ? उत याजमाना इति सन्देहे, पूर्वस्मिन्नधिकरणे ऋत्विक्परिक्रयस्य यजमानकर्तृकत्वं स्थापितम् । तेन परिक्रयादन्यत्र परिक्रयविधेः कर्त्रन्तरप्रापकत्वं सिद्धं भवति । वपनादयः परिक्रयाद्भिन्नाः पुरुषार्थाः । अत्राध्वर्यवसमाख्यायाः प्रवृत्तौ परिक्रय इव बाधकं किमपि नास्ति । स्तोत्रशस्त्रादिकर्मसु यथावेदं यथा कर्तृव्यवस्था, तथाऽध्वर्युवेदे व्यवस्थितकर्तृविशेषा अध्वर्य्वादयः कर्तारो भवितुमर्हन्ति । अत इमे संस्कारा आध्वर्यवा इति पक्षे प्राप्ते;

उच्यते--वपनादयस्संस्कारा याजमानाः । यजमानं निमित्तीकृत्य प्रवृत्ता वपनादयः । कर्मयोग्यत्वलक्षणातिशयविशेषजननार्थाः यजमानः स्वस्यिन्नेव कर्मयोग्यताजनककर्माण्यनुष्ठाय ऋत्विजः परिक्रीणीते । परिक्रीता ऋत्विजः वपनादिसंस्कारेभ्योऽन्यत्रैव व्यापृता भवन्ति । कर्मजन्यफलभोक्तृत्वं यजमानस्यैव । स च तादृशभोक्तृत्वयोग्यतासम्पादनाय कानिचन कर्माणि करोति । साङ्गस्य कर्मणोऽनुष्ठानमेकाकी यजमानः कर्तुं न शक्नोतीति सः ऋत्विजः परिक्रीणीते, तथैव वपनादिभिस्संस्कारैः कर्मानुष्ठानयोग्यतातिशयजनकैस्संस्कृतो भवति । परिक्रीतानामृत्विजां स्वस्वप्रयोगान्तर्गतपदार्थपरिज्ञानयोग्यतैवावश्यकी, न त्वलौकिकातिशयविशिष्टयोग्यता । अतस्तेषामत्र विशेषव्यवस्थापकसमाख्या प्रवर्तत इति याजमानत्वमेव वपनादिसंस्काराणाम् । यथा यागात्मक प्रधानकर्माणि पुरुषार्थत्वाद्यजमानकर्तृकाणि, तथा पुरुषार्था वपनादयस्संस्कारा यजमानकर्तृकाः। यथा प्रयाजादय आराදुकारकाः परमापूर्व

जननौपयिकास्तथा वपनादयोऽपि परमापूर्वप्राप्तियोग्यं यजमानं विदधाना यजमानमाश्रयमवाप्य कृतार्था भवन्ति, न ऋत्विक्षु निवेशं लभन्ते। ननु वपनादयस्संस्कारा यथा याजमाना भवन्ति, तथा समाख्यावशेन ऋत्विजामपि ते भवन्तु, विरोधाभावादिति चेन्न; वपनादिविधानानामृत्विग्यजमानसमानविधानत्वाभावात्। ऋत्विक्कर्तृकेषु कर्मसु 'वाससा दीक्षयति' 'सोमं क्रीणाति' इति परस्मैपदप्रयोगः; यजमानकर्तृकेषु तु कर्मसु 'वपते' 'निकृन्तते' आङ्क्ते' इत्येवमात्मनेपदप्रयोगो दृश्यते। अतोऽपि वपनादयो नाध्वर्यवाः किन्तु याजमाना एव॥

## ३. तपसो याजमानताधिकरणम्

ज्योतिष्टोमे दीक्षितस्य व्रतं विहितमस्ति—'पयो ब्राह्मणस्य यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति। दीक्षाकालेषु ब्राह्मणेन पयः पीत्वा वर्तितव्यम्, यवागूं पीत्वा क्षत्रियेण, आमिक्षासेवनेन वैश्येनेत्यर्थः। यद्येवं वर्तनं दुश्शकमिति चेत्तदाऽनुकल्पोऽपि श्रुतः—'यदि मन्येतोपदस्यामीति ओदनं धानाः सक्तून् घृतमित्यनुवर्तयेदात्मनोऽनुपदस्याय' इति। पयोमात्रव्रतेन यदि उपदस्यामि—शुष्यामीति मन्येत तदौदनादिना सह व्रतं कुर्यादित्यर्थः। अनुव्रतेऽप्यस्ति कश्चन नियमः—पयसा यवाग्वाऽऽमिक्षया सह यद्यनुव्रतमोदनादिना कुर्यात् तदा 'द्व्यहं नाश्नाति, अथाश्नाति त्र्यहं नाश्नाति, अथाश्नाति चतुरहं नाश्नाति' इत्यादिश्रुतम्। अर्थाद्यदि अनुव्रतमोदनादिकमश्नीयात् तदा दिनद्वयमनशनम्, तदूर्ध्वं यद्यश्नीयात् तदा दिनत्रयमित्येवमनशनं विहितम्। तदिदमनशनं चिन्त्यते—किमिदमाध्वर्यवम्? उत याजमानमिति? फलिसंस्काराणां वपनादीनां याजमानत्वं युक्तम्, अनशनरूपं व्रतं कष्टमयम्। स्वयं यजमानः क्लेशस्य दूरीकरणाय ऋत्विजः परिक्रीणाति। परिक्रयणञ्च स्वसुखाय। तादृशः कथं दुःखमयमनशनं कुर्यात्? फलिसंस्काराणां यजमानेऽतिशयाधायकत्वेन तत्र कर्त्रन्तरप्राप्तिर्वारिता; प्रकृते त्वनशनस्य यजमानगतसुखाधायकातिशयजनकत्वाभावेन दुःखात्मकानशनानुष्ठानाय ऋत्विजः परिक्रीतवान् यजमान इति कर्त्रन्तरप्राप्तौ सत्यां तद्व्यवस्थापिकायास्समाख्यायाः प्रवृत्तिः। अतोऽनशनस्याध्वर्यवत्वमेव युक्तमिति पक्षे प्राप्ते,

उच्यते--अनशनं कायशोषणम्। तदेव तपः। यथा वपनादयस्संस्कारा यजमानं संस्कुर्वन्ति तथैवानशनरूपं तपोऽपि यजमानसंस्कारकम्। कार्यसम्पादनयोग्यताधायका यथा संस्कारा भवन्ति तथा प्रतिबन्धकनिरसनद्वारापि योग्यताधायका भवन्ति। स्वर्गफलककर्मणि प्रवृत्तो यजमानः कदाचित्प्रतिबन्धकविशेषेण प्रतिबद्धः दुःखात्मकानशनरूपतपसा प्रतिबन्धं नाशयितुं योग्यो भवति। लोक इव वैदिककर्मस्वपि स्थितिः। लोके मलिनस्य दर्पणस्य बिम्बग्राहकत्वयोग्यताभावेऽपि प्रोञ्छनादिना दर्पणं स्वच्छीकृत्य मुखं पश्यामस्तदा बिम्बग्राहकत्वशक्तिमनुभवामः। तथैव वैदिककर्मसु स्वल्पक्लेशात्मकेन तपसा प्रायश्चित्तेन वा महतो दुरितस्य निवृत्तिद्वारा स्वर्गसुखमनुभवितुं शक्नुमः। पुण्यं वा पापं वा न प्रत्यक्षेणानुभूयते, किन्तु तज्जन्यं सुखं-दुःखं वाऽनुभूयते। यजमानकर्तृके कर्मणि अध्वर्युप्रभृतयस्समाख्ययाऽनशनरूपं तपो यदि कुर्युः तदा 'सोमेन यक्ष्ये' इति संङ्कल्प्य प्रवृत्तस्य यजमानस्य को लाभः? अतो याजमानमेवेदमनशनम् न त्वाध्वर्यवम्। ऋत्विक्कर्तृकं वचनं यत्रास्ति 'ऋत्विज उपवन्ति' इति तत्र तत्कर्तृकत्वमपीष्यते॥

## ४. हिरण्यमालित्वाधिकरणम्

अध्वर्युवेदसमाम्नाते वाजपेये 'हिरण्यमालिन ऋत्विजः प्रचरन्ति' इति श्रुतम्। तदिदं हिरण्यमालाधारणमध्वर्युणा तत्पुरुषैः प्रतिप्रस्थातृनेष्टृन्नेतृभिरेव कर्तव्यम्? उत सर्वर्त्विग्भिरिति संशये, ऋत्विक्छब्दस्य सर्वर्त्विग्वाचकत्वेऽपि समाख्ययाऽध्वर्युगणेनैव कर्तव्यमिति पक्षे प्राप्ते,

उच्यते--'ऋत्विजः' इति ऋत्विक्सामान्यस्य प्राप्तं हिरण्यमालाधारणं समाख्यया सङ्कोचमर्हति। अनेन वाक्येन हिरण्यमालाधारणं गुणो विधीयते, ऋत्विजां तेषां प्रचारस्य च प्राप्तत्वात्। मालाधारणरूपगुणापेक्षया ऋत्विजामुद्देश्यत्वात्प्राधान्यम्। प्रतिप्रधानं गुणावृत्तिरिति न्यायेन गुणस्य मालाधारणस्यावृत्तिरेबोचिता। 'ऋत्विज' इत्यस्याध्वर्युगणमात्रवाचकत्वं नास्ति, यद्यध्वर्युगणमात्रबोधकत्वमस्य शब्दस्य तदा लक्षणयैव तद्बोधकत्वं वक्तव्यम् तदा लक्षणैव दोषः। अतस्सर्वर्त्विग्विषयमिदं मालाधारणम्॥

## ५. गुणकामानां याजमानताधिकरणम्

ज्योतिष्टोमे 'यः कामयेत वर्षुकः पर्जन्यस्स्यात् इति नीचैस्सदो मिनुयात्' इति श्रुतम्। सदोनामकमण्डपस्य कामनाविशेषे सति मान-विधायकवाक्यमिदम्। अस्य मण्डपस्य पुरस्तात् प्राचीनवंशमण्डपः, पश्चाच्च हविर्धानमण्डप उच्चैः, तदपेक्षया सदोमण्डपो नीचैः निर्मातव्यः यदि वृष्टिं कामयते। अध्वर्योर्वृष्टिकामनायामिदं मानं विधीयते? उत यजमानकामनायाम्? इति सन्देहे, सदोमानमाध्वर्यवं कर्म। अध्वर्युः कामयते स एव मिनोतीति सामानाधिकरण्यसिद्धयेऽध्वर्युरेव कामयिता मण्डपमानकर्ता चेति पक्षे प्राप्ते,

उच्यते—'मिनुयात्' इति परस्मैपदप्रयोगात् अध्वर्युव्यापारजन्य-फलस्य वृष्टिलक्षणस्य परगामित्वं तावज्ज्ञायते। वाक्यात्सदोमान-कामनयोरेककर्तृत्वे प्रतीयमानेऽपि परस्मैपदश्रुत्या कामस्य परगामित्व-मेष्टव्यम्। ततश्च यजमानस्य कामनां पर्जन्यः पूरयत्विति धिया सदोमानमध्वर्युः कुर्यात् इति वाक्यस्यार्थः॥

## ६. प्रोत्साहनमन्त्राणां याजमानताधिकरणम्

अग्निहोत्रे 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादयो मन्त्राः पठ्यन्ते। ते किम् आध्वर्यवाः? उत याजमाना इति सन्देहः। आध्वर्यवसमाख्य-याऽध्वर्युणैवेमे पठनीया इति पक्षे प्राप्ते;

उच्यते——पूर्ववद्याजमाना इति। यथा गुणकामा याजमानास्तथै-वेमेऽपि। करणक्रियमाणानुवादिमन्त्रा आध्वर्यवा भवितुमर्हन्ति, 'आयुर्दा' इत्यादयो मन्त्राः प्रार्थनारूपाः। हे अग्ने त्वमायुर्दा असि, अतो मे आयुर्देहि इति प्रार्थना क्रियते। यजमानः क्रतुफलावाप्तये सङ्कल्पपुरस्सरं क्रतु-मनुतिष्ठन् अग्निं प्रार्थयते—'आयुर्मे देहीति। एवं सत्येव मन्त्रार्थस्स-मन्वितो भवति। यजमानारब्धक्रतूपकारकोऽयं मन्त्रः उपकारश्च दृष्टार्थप्रकाशनद्वारेति मन्त्राधिकरणे स्थितम्। तत्र यजमानः स्वीये-ऽग्नौ कर्माणि सम्पादयितुमध्वर्युं नियुज्य कर्मानुतिष्ठति। तत्रान्यदीय-क्रतूपकारकमन्त्राणामन्यदीयायुरादिफलाशासनपरत्वं कथं सङ्गतं स्यात्।

अध्वर्युणा यत्किमपि प्रार्थ्यते तद्यजमानादेव प्रार्थनीयम्; न त्वग्नेः। अत एते मन्त्राः यजमानगामिफलपरा एवेति याजमानत्वमेवैषां युक्तम् ॥

## ७. द्व्याम्नाताधिकरणम्

'वाजस्य मा प्रसवेन' इत्यादिर्मन्त्रः पौराडाशिककाण्डे यजमानकाण्डे च पठिताः। ते किमध्वर्युयजमानयोरन्यतरेण पठनीयाः? उताध्वर्युणैव? आहोस्विद्यजमानेनैव? अथवोभाभ्यामिति संशये, अनियम इति प्रथमः पक्षः। न चान्यतरेण पाठे सतोतरत्र पाठो व्यर्थस्स्यादिति वाच्यम्, स्वरूपज्ञापनार्थत्वेन विनियोगार्थत्वेन चोपपत्तेः। अङ्गानां प्रधानसमानकर्तृत्वनियमादिमेऽध्वर्युणैव पठनीया इति द्वितीयः पक्षः। आध्वर्यवसमाख्या सामान्यभूता, याजमानसमाख्या तु विशेषभूता। सामान्यतो विशेषस्य बलवत्वात् यजमानकर्तृत्वमेवास्त्वस्य मन्त्रस्येति तृतीयः पक्षः। एवं पक्षेषु प्राप्तेषूच्यते--

द्वाभ्यामेव मन्त्रोऽयं पठनीय इति। काण्डद्वयाम्नानस्य सार्थक्यं तदैव स्यात् यदा द्वाभ्यां पठ्यते, अन्यथाऽन्यतराम्नानं व्यर्थं स्यात्। विशेषसमाख्याया बलीयस्त्वं तत्रैव भवति यत्र यजमानेनैव मन्त्रः पठनीयो भवति। यथा प्रयाजानुमन्त्रणमन्त्रेषु। किञ्च मन्त्राणां क्रत्वङ्गता स्वरूपेण न भवति, किन्तु पाठविशिष्टत्वे एव। पाठश्च द्वाभ्यामिति समाख्याद्वयस्य सार्थकता सिध्यति। अत उभाभ्यामेते मन्त्राः प्रयोक्तव्याः ॥

## ८. अभिज्ञवाचनाधिकरणम्

'आयुर्यज्ञेन कल्पताम्' 'प्राणो यज्ञेन कल्पताम्' इत्यादयः क्लृप्तिमन्त्रा यजुर्वेदे समाम्नाताः। एतेषां 'क्लृप्तीर्यजमानं वाचयति' इत्यनेन वाचने विनियोगः कृतः। 'क्लृप्तीः' क्लृप्त्यर्थकशब्दघटिता मन्त्रा इत्यर्थः। वाचने सन्देहः--किम् अधीतमन्त्रोऽनधीतमन्त्रस्सर्वोऽपि वाचयितव्यः? उतानधीतमन्त्र एव? अथवाऽधीतमन्त्र एव? इति। विशेषाभावादुभयोऽपि वाचयितव्यः। अथवाऽधीतवेदविषये वाचनस्यादृष्टार्थत्वापत्त्याऽनधीतमन्त्र एव वाचयितव्यः, अधीतवेदस्तु स्वयं ब्रूयादिति प्राप्ते,

उच्यते––अनधीतवेदस्याविदुषः क्रत्वनुष्ठानेऽधिकाराभावात् स्वाध्यायाध्ययनविधिसिद्धवेदलाभो यस्य तमुद्दिश्यैव क्रतुविधिप्रवृत्तेरधीतवेद एव वाचयितव्यः। वाचनमिदम् अदृष्टार्थं प्रवर्तते। वेदाध्ययनं गुरुकुलवासभिक्षाचरणानध्यायवर्जनरूपव्रताचरणपुरस्सरं विहितश्। व्रताचरणमिदं यद्यपि स्वशाखाध्ययनमधिकृत्य विहितम्, तथापि क्रतवः प्रायेण स्वपरशाखागतमन्त्रसाध्या भवन्तीति क्रत्वनुष्ठानारम्भात्पूर्वमेव व्रताचरणाभावेऽपि अधीतसकलमन्त्र एव क्रतुष्वधिकरोति। अतः क्रतुप्रयोगात्प्रागेवाधीतसकलमन्त्रस्य वाचनमिदम्।

अत्र भाष्यकृतः 'कियता पुनर्विदितेन विद्वानधिक्रियते' इति प्रश्नमुत्थाप्य 'यावता विदितेन शक्तो भवति यथोक्तं क्रतुमभिनिर्वर्तयितुम्' इत्यादिना समस्तवेदाध्ययनाभावेऽपि क्रतुषूपयुक्तवेदभागाध्येतापि क्रत्वनुष्ठानेऽधिकरोतीत्यभिप्रयन्ति।

वार्तिककृतस्तु–ब्रह्मचर्यकाले सकलो वेदो यथायथमध्येतव्य एव। यदि कश्चनाशक्तो नाधीते सकलं वेदम् अग्निहोत्रदर्शपूर्णमासमात्रं कथञ्चिदधिगच्छति तावन्मात्रवैदुष्येणाग्निहोत्रे दर्शपूर्णमासयोश्चाधिकारी भवितुमर्हतीति वदन्ति॥

### ९. द्वादशद्वन्द्वाधिकरणम्

यजुर्वेदे दर्शपूर्णमासयोः अध्वर्युकाण्डे यजमानकाण्डे च वत्सोपावसर्जनोखाधिश्रयणादिद्वादश द्वन्द्वान्याम्नातानि––वत्सोपावसर्जनम् उखाधिश्रयणम् अवहननम्, दृषदुपलयोस्समाहननम् अधिवपनम् कपालोपधानम्; पुरोडाशाधिश्रयणम्, आज्याधिश्रयणम्; स्तम्बयजुर्हरणम् अभिग्रहणम् वेदिपरिग्रहणम्; पत्नीसन्नहनम्, प्रोक्षण्यासादनम्, आज्यासादनम्, इमानि सप्तद्वन्द्वानि। स्फ्यः, कपालानि, अग्निहोत्रहवणी, शूर्पः, कृष्णाजिनम्, शम्या, उलूखलः, दृषत् उपला इति पञ्चद्वन्द्वानि, आहत्य द्वादश। इमानि कार्याणि किं याजमानानि? उताध्वर्यवाणि? इति सन्देहे, यजमानकाण्डपठितत्वात् याजमानमिति विशेषसमाख्यया अध्वर्युकाण्डपठितत्वेऽपि आध्वर्यवसमाख्यायाः सामान्यरूपत्वात् विशेषेण सामान्यं बाधितं भवतीति याजमानान्येवेति पक्षे प्राप्ते,

उच्यते—अध्वर्युरेवैतानि द्वन्द्वानि सम्पादयेत् न यजमानः। एवमादीनि कार्याणि सम्पादयितुमेवाध्वर्युः परिक्रीतः। दर्शपूर्णमासादिषु कर्माणि कर्तुं कर्त्रन्तरमपेक्षितम्। तत्राध्वर्युकाण्डे उत्पन्नानि कर्माण्यध्वर्युरेव कुर्यात्। एतेषां कर्मणामुत्पत्तिवाक्यानि 'वत्सश्चोपावसृजति, उखाञ्चाधिश्रयति' इत्यादीन्यध्वर्युकाण्डेऽपि पठितानि यजमानकाण्डेऽपि। तथापि द्वन्द्वतासम्पादनाम्ध्वर्युरेव कुर्यात्, यजमानस्तु द्वन्द्वतासम्पादनायाध्वर्युं प्रयोजयति। नाध्वर्युकाण्डपाठमात्रेणाध्वर्युकर्तृकत्वम् किन्तु न्यायपूर्वकमप्यध्वर्युकर्तृकत्वम्। कर्मणामुत्पत्तिकाल एव प्रथमम सञ्जातविरोधितयाऽध्वर्युकर्तृकत्वं प्रतीतम्। यजमानकाण्डे पठितानामपि कर्मणां तत्कर्तृत्वम् अङ्गगुणविरोधन्यायेन बाधितं भवति। अध्वर्युणा क्रियमाणानां कर्मणां यजमानेन द्वन्द्वतासम्पादनस्याशक्यत्वात्। यजमानस्तु द्वन्द्वानि कुरु इत्यध्वर्युं प्रयोजयति। ततश्चाध्वर्युरेवैतानि कर्माणि द्वन्द्वतासम्पादनञ्च कुर्यात्॥

## १०. होतुः करणमन्त्रानुष्ठातृत्वाधिकरणम्

ज्योतिष्टोमेऽग्नीषोमीयपशौ 'यूपाय परिवीयमाणायानुब्रूहि' इत्यध्वर्युप्रैषानन्तरं होता 'युवासुवासाः' इति मन्त्रं पठति। अध्वर्युस्तु 'परिवीरसि' इति मन्त्रेण यूपं परिव्ययति। अध्वर्योरयं करणमन्त्रः, होतुस्तु क्रियमाणानुवादी मन्त्रः। अध्वर्युणा क्रियमाणस्य परिव्याणस्यानुवादक इत्यर्थः। परिव्याणारम्भात्पूर्वमध्वर्युणा पठ्यमानो मन्त्रः करणमन्त्र इति कथ्यते। करणमन्त्रोऽध्वर्युवेदे, क्रियमाणानुवादी तु होतृवेदे पठितः। तदिदं ज्योतिष्टोमे उभयकर्तृकम्। कुण्डपायिनामयने संवत्सरसाध्ये सत्रे ज्योतिष्टोमाच्चोदकत इमौ मन्त्रावतिदिष्टौ। तत्र 'यो होता सोऽध्वर्युः' इति श्रुतम्। एकेनोभयोर्मन्त्रयोः प्रयोक्तुमशक्यत्वात् अन्यतरस्त्यक्तव्यो भवति होत्रा। किमाध्वर्यवो मन्त्रस्त्याज्यः? उत हौत्रः? इति सन्देहे, 'यो होता सोऽध्वर्युः' इति होतुस्सतोऽध्वर्युत्वं विदधाति। स्वधर्माविरुद्धैरेवाध्वर्युकार्यैर्होता सम्बध्नाति। अतः 'परिवीरसि' इति मन्त्रो होत्रा त्यक्तव्यः। यथा 'परिधौ पशुं नियुञ्जीत' इति यूपकार्ये पशुनियोजने परिधौ विधीयमाने परिधित्वाविरोधेनैव यूपकार्यं सम्पाद्यते

तथा होतृकार्याविरोधेन होताऽध्वर्युकार्यं कुर्यादिति परिवीरसीति मन्त्रस्त्यक्तव्य इति पक्षे प्राप्ते;

उच्यते--अध्वर्युहोतृशब्दौ विभिन्नपुरुषवाचिनौ। तयोर्मुख्यसामानाधिकरण्यं तावद्बाधितम्। अन्यतरशब्दस्य तत्कार्यकारित्वे लक्षणा स्वीकर्तव्या। तत्र होतृशब्दः प्रथमपठितः, अध्वर्युशब्दस्त्वनन्तरं पठितः। 'मुख्यं वा पूर्वचोदनात्' इति न्यायेन प्रथमश्रुतहोतृशब्दस्यैव मुख्यवृत्तित्वम्, जघन्यश्रुताध्वर्युशब्दः तत्कार्यकारित्वे लक्षकः। तथा च यो होता सोऽध्वर्युकार्यकारीति आश्रयणीयम्। अर्थादध्वर्युकार्यं यत् तद्धोता कुर्यादिति पर्यवस्यति। एवञ्च होता हौत्रमन्त्रं परित्यज्य आध्वर्यवं करणमन्त्रं 'परिवीरसि' इति ब्रूयात्। क्रियमाणानुवादिमन्त्रन्तु होतृगणान्तर्गतो मैत्रावरुणो ब्रूयात्। यदुक्तं होतारमुद्दिश्याध्वर्युत्वं विधीयत इति तदयुक्तम्, अध्वर्युकार्ये कर्तृत्वेन होतुः प्रत्यक्षविधानात्। परिधिदृष्टान्तो विषमः, परिधौ यूपधर्मा अतिदेशेन प्राप्नुवन्ति तक्षणाष्टश्रीकरणादयः, तथैव परिधिधर्मा अपि 'सत्वक्काः परिधयो भवन्ति' इत्यादयोऽतिदेशेन प्राप्नुवन्ति। तत्रोभयेषामातिदेशिकत्वाविशेषे प्रथमोपस्थिताः परिधिधर्मा एव ग्राह्या इति॥

## ११. प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम्

'प्रोक्षणीरासादय' 'अग्नीन् विहर' इत्यादयः प्रैषाः। 'प्रोक्षणीरासादयति' 'अग्नीन् विहरति' इति प्रैषार्थाः। उभयेऽप्यध्वर्युवेदे दर्शपूर्णमासयोस्सन्ति। किमुभयेऽप्येककर्तृकाः? उत भिन्नकर्तृकाः? इति सन्देहे, आध्वर्यवसमाख्ययाऽध्वर्युकर्तृकत्वं तावत्सिद्धम्, तद् बाधकमत्र किमपि नास्ति। पूर्वत्र 'यो होता सोऽध्वर्युः' इत्यत्र तु समाख्यालब्धकर्तृबाध इवात्र कर्तृबाधकं नास्तीति समाख्यानुग्रहाय प्रैषप्रैषार्थयोरेक एव कर्ता। लोट्लकारस्तु प्राप्तकालतायां द्रष्टव्यः। मध्यमपुरुषोऽपि स्वात्मनि युष्मत्त्वारोपादिना नेय इति प्राप्ते,

उच्यते—प्रैषेषु प्रैषार्थेषु चान्य एव कर्ता। प्रेष्यं प्रति प्रेषणा भवति। अतो भिन्नकर्तृकत्वमुभयोः। लोटः मध्यमपुरुषस्य मुख्यवृत्तित्वे सम्भवति उपचाराश्रयणमयुक्तम्। अतो भिन्नकर्तृकौ प्रैषप्रैषार्थौ॥

## १२. प्रैषस्याध्वर्यवत्वाधिकरणम्

प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वे सिद्धे प्रेषिता किमाग्नीध्रः अध्वर्युस्तु प्रैषार्थकर्ता ? उत विपरीतमिति सन्देहे; न्यायेनाध्वर्युः प्रैषार्थकर्ता भवेत्। 'प्रोक्षणीरासादय' इत्यत्रानुष्ठेयार्थ आसादनम्। आसादनं प्रधानं प्रति सम्प्रैषवाक्यं गुणभूतम्। प्रैषप्रैषार्थयोः समाख्ययाऽध्वर्यु-कर्तृकत्वं तावत्सिद्धम्। अध्वर्युणा प्रैषे क्रियमाणे प्रैषार्थः कर्तुं न शक्यते, प्रैषार्थे च क्रियामाणे प्रैषः कर्तुं न शक्यते। प्रोक्षण्यासादनञ्चानेकै-र्व्यापारैः--चमसे प्रोक्षण्यभिपूरणम् उदग्दिशि स्फ्यापाहनम्, तद्दक्षिणेन स्फ्येन सहासंस्पृष्टाः प्रोक्षणीरुपनिनीयासादनम् इत्यादिभिस्साध्यम्। अध्वर्योः प्रैषकर्तृत्वे आसादनस्य तत्कर्तृत्वं बाधितं भवेत्। आसादनञ्च प्रधानम्। अङ्गगुणविरोधन्यायेन गुणानां प्रधानार्थत्वसम्पादनं न्याय्यम्। अत आसादनमध्वर्युकर्तृकमेष्टव्यम्। तत्र ब्रह्मणः सर्वपदार्थावेक्षणकार्ये व्यापृतत्वात् होतुश्चेदानीमप्रवेशात् परिशेषादध्वर्योरन्य आग्नीध्र एव प्रेषिता, अध्वर्युस्तु प्रैषार्थकर्तेति पक्षे प्राप्ते,

उच्यते--अध्वर्युरेव प्रैषकर्ता, प्रैषस्य 'मुख्यं वा पूर्वचोदना' इति न्यायेन प्राधान्यात् अत्राध्वर्युकर्तृकत्वबाधो न युक्तः, प्रैषानन्तरभावित्वा-त्प्रैषार्थानुष्ठानस्य। अध्वर्युनिष्ठप्रयोजककर्तृत्वमादाय प्रैषप्रैषार्थयोः समाख्यानुग्रहो भवितुमर्हतीति नाङ्गगुणविरोधन्यायविरोधः। अतः प्रैषार्थकर्ता आग्नीध्रः प्रैषकर्ता चाध्वर्युरिति ॥

## १३. करणमन्त्रफलस्य याजमानत्वाधिकरणम्

'समाग्ने वर्चो विहवेष्वस्तु वयन्त्वेन्धानास्तनुवं पुषेम' इति करण-मन्त्रः। 'इति पूर्वमग्निं गृह्णाति' इति ब्राह्मणवाक्येन विनियुक्तः। गार्हपत्यादग्निं प्रणीयाहवनीयार्थं गृह्णाति। अग्नेर्ग्रहणं नाम समित्प्रक्षे-पेण प्रज्ज्वालनम्। तदिदमन्वाधानमित्यपि व्यवह्रियते। अग्निग्रहणात्पूर्वं मन्त्रमिममुच्चार्य ग्रहणं क्रियत इत्ययं करणमन्त्रः। अध्वर्युवेदे श्रुतत्वा-दध्वर्युकर्तृकः। अत्र वर्च्चस आशंसनं श्रुतं तत्कस्येति सन्देहः-किमध्वर्योः ? उत यजमानस्येति। करणमन्त्रेषु यत्फलं तत् 'ऋत्विज एव। मन्त्रमिममुच्चारयन्नध्वर्युः 'मामास्तु' इत्यस्मच्छब्दं कीर्तयति।

'मम' इति शब्दस्य यजमानवाचित्वे गौणत्वं स्यात्। ततश्च वर्चः प्रभृतिकमग्न्यन्वाधानक्रियाफलमाध्वर्यवमेव, अन्वाधानक्रियाकारिणाऽध्वर्युणा मन्त्रस्य प्रयुज्यमानत्वात्। ममेति शब्दः प्रयोक्तृपुरुषवाची भवति। अतो मन्त्रलिङ्गात्तद्गतं वर्चःफलमाध्वर्यवमिति पक्षे प्राप्ते,

उच्यते—वर्चःप्रभृतिफलं यजमानस्यैवाध्वर्युणाशासितव्यं, न त्वात्मनः, साङ्गप्रधानकर्मणः फलं यजमानगामि भवति 'यजेत' इत्यात्मनेपदश्रुतेः। मदीयस्य यजमानस्य वर्चं इत्येवं 'मम' इति लिङ्गं श्रुत्या बाध्यते। अतो याजमानमेवेदं फलमिति ॥

## १४. क्वचित्करणमन्त्रफलस्यर्त्विग्गामिताधिकरणम्

आहवनीयस्याग्नेरुत्तरतोऽवस्थायाध्वर्युः वेद्यामासादिताद्धविषः जुह्वामवदाय यजेति होतारं सम्प्रेष्यावत्तेन हविषा सह वेदिमतिक्रम्य दक्षिणत आगच्छन् मन्त्रमिमं पठति—'अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा सन्ताप्तम्' इति। अग्निशब्देनाहवनीयः, विष्णुशब्देन यज्ञः यज्ञसाधनपुरोडाशादिर्वा विवक्षितः। तौ प्रर्थयतेऽध्वर्युः—हे आहवनीय हविषी युवां नाक्रमेयम् विजिहाथां कोपं त्यजताम् मां युवयोरन्तरा दक्षिणातिक्रामन्तं मा सन्ताप्तं न सन्तापयतम् इति। अत्रासन्तापलक्षणं फलं यदाशास्यते तत्किं याजमानम् उताध्वर्यवमिति सन्देहे, पूर्वन्यायेन याजमानमिति प्राप्ते,

उच्यते—यद्यपि करणमन्त्रेषु याजमानमेव फलमाशास्यम्, तथापि प्रकृते 'मा सन्ताप्तम्' इत्यसन्तापलक्षणं फलं ऋत्विक्सम्बन्धि, होमनिर्वृत्यर्थमध्वर्युर्दक्षिणातिक्रम्यागच्छन् अग्निज्वालाजनितं सन्तापं कदाचिदनुभवेत्। सन्तप्तः कर्म कर्तुं न शक्नुयात् इति आत्मार्थमेवासन्तापलक्षणं फलमध्वर्युः कामयते। अतस्सामर्थ्यात् ऋत्विजैव स्वात्मन्यसन्तापलक्षणं फलं कामयितव्यमिति ॥

## १५. भद्रादेरुभयगामिताधिकरणम्

ज्योतिष्टोमे हविर्धानशकटस्याधस्तात् उपरवाख्याश्चत्वारो गर्ता निर्मीयन्ते। तत्र यजमान एकस्मिन् हस्तं प्रवेशति, अपरस्मिंश्च गर्तेऽध्वर्युः स्वीयं हस्तं प्रवेशयति। उभावपि हस्तौ सङ्गतौ भवतः। तदा

यजमानोऽध्वर्युं पृच्छति 'अध्वर्यो किमत्र' इति। अध्वर्युः प्रतिवदति—'भद्रम्' इति। यजमानश्च 'तन्नौ सह' इति वदति। अयमेव मन्त्रोऽस्याधिकरणस्य विषयः। अत्र तद् भद्रं 'नौ' आवयोः सह इति भद्ररूपं फलं यजमानगामि, उतोभयगामि इति सन्देहे, 'यजेत' इत्यात्मनेपदश्रुत्या 'नौ' इति द्विवचनमेकत्वे लाक्षणिकम्। अतो यजमानगाम्येव भद्राख्यं फलमिति प्राप्ते;

उच्यते—पूर्वाधिकरणे 'मम' शब्दस्याजहत्स्वार्थलक्षणयाऽस्मदीयस्वाम्यर्थपरत्वमाश्रित्यात्मनेपदस्य लिङ्गबाधकत्वं स्वीकृतम् इह तु 'नौ' इति द्विवचनस्यैकत्वे लक्षणास्वीकारे द्वित्वस्यात्यन्तं बाधस्स्यात् द्विवचनमत्यन्तमनर्थकञ्च स्यात्। अत आनर्थक्यप्रतिहतन्यायेन द्विवचनमात्मनेपदश्रुतिमेव बाधते। 'नौ' इति विशिष्य द्विवचनेनोभयनिर्देशात्। अतो भद्राख्यं फलमुभयगामि॥

## १६. प्राकृतधर्माणां वैकृतापूर्वपदार्थानङ्गताधिकरणम्

अग्नीषोमीयपशौ 'बर्हिषा यूपावटमवस्तृणाति' इति श्रुतम्। अग्नीषोमीयः पशुः दर्शविकृतिः। दर्शे च लवनादिसंस्कृतेन बर्हिषा वेदिरास्तीर्यते। अत्र यूपावटास्तरणसाधनीभूते बर्हिषि प्राकृतलवनादयो बर्हिर्धर्मा भवन्ति न वेति विशये, पूर्वस्मिन् पादे बर्हिर्धर्मा अङ्गप्रधानसाधारणा इति व्यवस्थापितम्। अतो विकृतावपि यूपावटास्तरण बर्हिषि ते धर्माश्चोदकतः प्राप्नुवन्तीति प्राकृतधर्माः कर्तव्या इति पक्षे प्राप्ते,

उच्यते—प्रकृतितो विकृतौ धर्माः प्राकृतकार्यमुखेनैव प्राप्नुवन्तीति दशमाद्यन्यायः। बर्हिषां प्राकृतं कार्यं 'बर्हिषि हवींष्यासादयति' इति हविरासादनं कार्यम्। अत्र च यूपः खन्यते यस्मिन्नवटे-गर्ते तदास्तरणसाधनतया बर्हिषो विधानम्। अतोऽत्र प्राकृतधर्मैः लवनादिभिर्न सम्बन्धः प्राकृतहविरासादनादिकार्यसाधनत्वाभावात्। बर्हिरास्तरणमिदं वैकृतमपूर्वम् यूपावटास्तरणसाधनम्। तस्मान्न कर्तव्या धर्माः॥

## १७. लवनादेस्सर्वार्थताधिकरणम्

प्रकृतावेव क्वचिद्बर्हिषि लवनादयस्संस्कारा न भवन्तीत्यस्मिन्न-

धिकरणे निरूप्यते । दर्शपूर्णमासयोः पवित्रार्थं द्वौ दर्भौ भवतः विधृत्यर्थ-मपि द्वौ भवतः । पवित्रार्थदर्भौ साग्रौ प्रादेशमात्रौ–'समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुतः' इति । विधृत्यर्थौ द्वौ दर्भौ । बर्हिषा वेद्यास्तरणानन्तरं प्रस्तराख्यदर्भमुष्टिस्तरणात्पूर्वं यौ दर्भौ तिर्यगवस्था-प्येते तौ विधृतिपदवाच्यौ । तिर्यगवस्थापितयोर्दर्भयोरुपरि प्रस्तर आस्ती-र्यते । प्रस्तरो नाम प्रथमं लूनो दर्भमुष्टिः विधृत्योः तिर्यगवस्थापितयो-रुपरि आस्तीर्णस्य प्रस्तरस्य प्रस्तरप्रहरणसमये सुखेन ग्रहणं भवत्विति हेतोर्विधृती तिर्यगास्तीर्येते । इमे पवित्रे विधृती च किं लवनादिसंस्का-रसंस्कृताद् बर्हिषः कर्तव्ये ? उतासंस्कृताद् बर्हिष इति सन्देहे, बर्हिः प्रधानस्याङ्गम्–उपकारकम्, बर्हिर्धर्माश्च लवनादयः प्रधानाङ्गमुद्दिश्य विहिताः । पवित्रयोः विधृत्योश्च प्रधानोपकारित्वात् तत्रापि बर्हिर्धर्माणां प्राप्तिरिति संस्कृतादेव बर्हिषः पवित्रविधृतिकरणमुचितमिति पक्षे प्राप्ते,

उच्यते––यथा यूपावटास्तरणबर्हिषि बर्हिर्धर्मा न भवन्ति तथा पवित्रविधृतिसाधनीभूतबर्हिष्यपि धर्मा न भवन्ति । वेद्यास्तरणार्थं यानि बर्हींषि तत्रैव संस्कृतबर्हिषां विनियोगवचनं दृश्यते–'त्रिधातु पञ्चधातु वा बर्हिस्तृणाति' इति । संस्कृतस्य बर्हिषोऽन्यत्र विनियोगवचनं न दृश्यते । अतः पवित्रे विधृती चासंस्कृतबर्हिषैव सम्पादनीये ॥

### १८. शेषनिधानाधिकरणम्

ज्योतिष्टोमे 'पुरोडाशशकलमैन्द्रवायवपात्रे निदधाति' इति श्रुतम् । ऐन्द्रवायवमैत्रावरुणादीनि पात्राणि सवनीयदिने उपयुज्यन्ते । सवनीये च 'धानाः करम्भाः परीवापाः' इत्यादिना सवनीयपुरोडाशा विहिताः । तत्र पुरोडाशशकलस्यैन्द्रवायवपात्रे निधानमनेन वाक्येन विधीयते । किं सवनीयपुरोडाशसम्बन्धिशकलस्य निधानं कर्तव्यम् ? उतैतदर्थं पुरोडा-शान्तरमुत्पाद्य तच्छकलस्य निधानमिति सन्देहे, सवनीयार्थस्य पुरोडाश-स्यान्यत्र पूर्वाधिकरणन्यायेन विनियोगासम्भवात् पुरोडाशान्तरमुत्पाद्य-तच्छकल एव पात्रे पुरोडाशसंस्कारार्थतया निधातव्य इति पक्षे प्राप्ते,

उच्यते––सवनीयपुरोडाशस्यैवैकदेशस्य निधानम्, तस्य सन्निहित-त्वात् विद्यमानत्वाच्च । 'पुरोडाशशकलम्' इति द्वितीयया शकलस्य

संस्कार्यत्वमवगम्यते । पुरोणाशान्तरशकलस्यायं विधानाख्यस्संस्कारो नोचितः, अस्य भूते वा भाविनि वोपयोगाभावात् । तदेव द्रव्यं संस्कारार्हं यद्भूते वोपयुक्तम्, भाविनि वोपयोक्ष्यमाणम् । सवनीययागोपयुक्त-पुरोडाशशकलस्य निधाने उपयुक्तत्वात् प्रतिपत्तिसंस्कारो घटते । देश रिक्तीकरणाख्यं दृष्टं प्रयोजनमपि लभ्यते । अन्यत्र विनियोगाभावेन पूर्वाधिकरणविरोधोऽपि न भवति । यद्यपि चतुर्थेऽध्याये प्रथमपादस्य त्रयोदशाधिकरणे एकदेशद्रव्यस्य द्रव्यान्तरप्रयोजकत्वं नास्तीति वक्ष्यते तेन पूर्वपक्षस्योत्थितिरेव न भवति, तथापि 'पयस्यां मैत्रावरुणपात्रे निदधाति' इति वाक्यमिहोदाहरणं भवितुमर्हति, अत्रैकदेशस्यानुल्लेखात् ।

## १९. उपांशुत्वस्य प्रधानार्थत्वाधिकरणम्

'यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः' इति श्रूयते । वाक्यस्यायमर्थः—अथर्वशब्दश्चतुर्थवेदपरः । तत्र शान्तिकपौष्टिकाभिचारादिकर्माण्याम्नातानि । तानि च सरहस्यानि । आथर्वणा रहस्या यज्ञाः आथर्वणयज्ञाः । यस्माद्धेतोः काम्या इष्टयः अभिचारादिवद्रहसि कर्तव्याः तस्मात्ता उपांशु कर्तव्या इति । इष्ट्युद्देशेन विधीयमानमिदमुपांशुत्वं किमङ्गप्रधानसाधारणम् उत प्रधानार्थमेवेति सन्देहे; काम्येष्टिष्वाम्नातमुपांशुत्वमङ्गप्रधानार्थम् । उपांशुत्वं मन्त्रोच्चारणधर्मः । मन्त्रद्वारोपांशुत्वस्य कर्मान्वयः । मन्त्राश्चाङ्गप्रधानसाधरणाः, तद्धर्मोऽप्यङ्गप्रधानार्थं एवेति पक्षे प्राप्ते,

उच्यते—उपांशुत्वं प्रधानार्थत्वेनैव विधीयते । वेदिर्बर्हिन्यर्थे वेद्यां बर्हिषि प्रधानहवींषि यथाऽऽसाद्यन्ते तथाऽङ्गहवींष्यपीति वेदेः बर्हिषाश्चाङ्गप्रधानार्थत्वं युक्तम्, इह तु काम्येष्टि प्रत्युपांशुत्वं विधीयते । तत्रोपांशुत्वस्य साक्षात्सम्बन्धाभावेऽपि मन्त्रोच्चारणद्वारा सम्बन्धः । तत्र प्रधानमन्त्राणामेव ग्रहणम् नाङ्गमन्त्राणाम् । तस्मात्काम्यास्विष्टिषूपांशुत्वमिति ॥

## २०. दृतिनवनीताधिकरणम्

'श्येनेनाभिचरन् यजेत' इति विहितः श्येनयागो ज्योतिष्टोम विकृतिः । तत्र 'दृतिनवनीतमाज्यं भवति' इत्याज्यं विहितम् । तदिद-

माज्यम् किं प्रधानार्थम् ? उताङ्गार्थमिति संशये, अस्य यागस्य ज्योतिष्टोमविकृतित्वेन प्रकृतितः सोमस्य प्राप्तौ तदपवादतया विशिष्टाज्यस्य विधानात् प्रधानार्थत्वमेव। ननु विशिष्टविधिः कुत आश्रीयते, गौरवात्। अङ्गयागेषु प्राप्तमाज्यमाश्रित्य तत्र दृतिनवनीतत्वं विधीयताम्। तथा सत्यङ्गार्थत्वं दृतिनवनीतस्य प्राप्तं भवतीति चेन्मैवम्; प्रकरणबाधापत्तेः विशिष्टविधिगौरवमपि सोढ्वा प्रकरणसनाथेन वाक्येन दृतिनवनीतत्वविशिष्टमाज्यं प्रधान एवावतिष्ठत इति पक्षे प्राप्ते,

उच्यते—आज्यानुवादेनैव दृतिनवनीतत्वविधिः, न तु विशिष्टविधिः, गौरवात्। अनुवादः प्राप्तिसापेक्षः, यत्राज्यं प्राप्तं तत्रैवायं विधिरवतिष्ठते। प्रधाने श्येनेऽतिदेशेन सोमद्रव्यस्यैव प्राप्तिः, तदङ्गानि चाज्यद्रव्यकाणि कर्माणि दीक्षणीयादीनि प्राप्नुवन्ति। तदुद्देशेन दृतिनवनीतत्वविधाने लाघवम्। नात्र प्रकरणविरोधः, अङ्गानां प्रधानोपकारकतया अङ्गार्थस्यापि दृतिनवनीतत्वस्य प्रकरणिनि प्रधान एव विश्रान्तेः। तस्मात् दृतिनवनीतत्वमङ्गार्थमेव। दृतिः चर्मभस्त्रिका। तद्गतं नवनीतं यस्य प्रकृतिद्रव्यं तदाज्यं दृतिनवनीतमित्यर्थः।

## २१. दृतिनवनीतस्य सर्वाङ्गार्थत्वाधिकरणम्

दृतिनवनीतमाज्यं श्येनाङ्गार्थम् न प्रधानार्थमिति पूर्वाधिकरणे व्यवस्थापितम्। तत् किं सुत्याकाले क्रियमाणेष्वङ्गेषु निविशते ? उत सर्वेष्वङ्गेष्विति संशये, सुत्याकालिकाङ्गेष्वेव निविशते न सर्वेषु। तथाहि—ज्योतिष्टोमे अग्नीषोमीयसवनीयानुबन्ध्यपशूनां त्रयाणां भिन्नकालानुष्ठेयानां श्येनयागे चोदकतः प्राप्तानां सुत्यादिने सहालम्भः कर्तव्यो भवति, अग्नीषोमीयस्थाने पुरोडाशस्य आनुबन्ध्यस्थाने मैत्रावरुण्यामिक्षायाश्च विहितत्वेन पश्वभावात् श्येनवैशेषिकमङ्गं साहित्यं सवनीयकाले प्राप्तम्, तद्वत् दृतिनवनीतस्य श्येनवैशेषिकत्वात् सुत्याकालकत्वमेवेति सुत्याकाले क्रियमाणेष्वेवाङ्गेषु दृतिनवनीतं निविशत इति पक्षे प्राप्ते,

उच्यते—दृतिनवनीतं सर्वेष्वङ्गेषु निविशते, न केवलं सुत्याकालिकेष्वङ्गेषु। 'दृतिनवनीतमाज्यं भवति' इति सामान्यवचनम्, सुत्या-

तदितरकालिकसमस्ताश्रयेनाङ्गार्थतया दृतिनवनीतस्य निवेशमवगमयति। तस्यानुमानेन सङ्कोचो न युक्तः। अतस्सर्वेष्वङ्गेषु दृतिनवनीतं निविशते ॥

## २२. तरसमयाधिकरणम्

षट्त्रिंशत्संवत्सरसाध्यं शाक्यानामयनं नाम सत्रं गवामयनस्य विकृतिः। तत्र संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति तेषां तरसमयाः सवनीयाः पुरोडाशा भवन्ति' इति श्रुतम्। तरसं मांसमित्यर्थः। अत्र किं पुरोडाशोद्देशेन तरसमयत्वं विधीयते? उत सवनीयोद्देशेन? इति सन्देहे; सवनीयशब्दो यद्यपि सन्निहितः सन्निहितत्वात्तेनैव तरसमया इत्यस्य सम्बन्ध उचितः, तथापि सवनीयपदं विशेष्यसापेक्षम्, पुरोडाशपदश्च न तथा, अत उद्देश्यसमर्पकं पुरोडाशपदमेव। तदुद्देशेनैव तरसमयत्वं विधीयते। तस्मात्सर्वपुरोडाशविषयस्तरसमयत्वविधिरिति पक्षे प्राप्ते;

उच्यते--सवनीयानां मांसमयत्वं न पुरोडाशानाम्। सवनीयाश्च 'धानाः करम्भाः परीवापः पुरोडाशः पयस्या' इति पञ्च हवींषि। तेषामेव प्रकृतिद्रव्यं मांसम्, 'सवनीयान्निर्वपति' इत्यनेन पञ्चानां हविषां विधानात्। सवनीयशब्दस्योद्देश्यसमर्पकत्वे सन्निहितान्वयेन विशेषलाभः। 'तरसमयाः पुरोडाशा भवन्ति' इत्यत्र पुरोडाशशब्दस्य हविष्षु लक्षणा न दोषः, पुरोडाशशब्दस्य चरमश्रुतत्वात् सवनीयशब्दस्य प्रथमश्रुतत्वान्मुख्यत्वम्। तस्मात्सवनीयानामेव हविषां तरसमयत्वमिति ॥

इति तृतीयाध्यायस्याष्टमः पादः

इति म०म० चिन्नस्वामिशास्त्रिपादानामन्तेवासिना पट्टाभिरामशास्त्रिणा प्रणीतायां मीमांसानयमञ्जर्यां तृतीयोऽध्यायस्समाप्तः



# परिशिष्टम्

## भाट्टमानमेयसङ्ग्रहः

'तुतातितमतेनाहं मानमेयार्थसङ्ग्रहम् ।
कुर्वे मुदा विनेयानां ज्ञानवैशद्यकारकम्' ॥

द्रव्य-गुण-कर्म-सामान्य-शक्तयः पञ्च भावपदार्थाः । विशेष-समवाययोर्न पदार्थान्तरत्वम् । विशेषश्च नित्यद्रव्येषु परमाण्वादिषु मिथो व्यावृत्तिसिद्धये स्वीकर्तव्यः । 'अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः' इति वदन्तः परे विशेषं साधयन्ति, किन्तु भाट्टा अन्त्येन विशेषेण व्यवहारो न भवतीति विशेषं नानुमन्यन्ते । अन्त्यशब्दस्यान्ते भव इत्यर्थः । कस्यान्ते ? इति जिज्ञासायां परिमाणस्येति वक्तव्यम् । तच्च पारिमाण्डल्य शब्देन कथ्यते । पारिमाण्डल्यं नामाणुगतपरिमाणम् । तच्च कस्यापि कारणं न भवति । कार्यकारणभावमादाय पदार्थानां व्यवहारः प्रवर्तते । अन्त्यमादायापि व्यवहारः प्रवर्ततामिति चेत् अतीन्द्रियत्वात्तस्यैकैकस्य वाऽन्यसहितस्य वा प्रत्यक्षत्वव्यवहारो न सम्भवी । अतीन्द्रियानपि पदार्थान् योगिनः प्रत्यक्षीकुर्वन्तीति चेत्—वेदस्यापौरुषेयत्वं स्वतः प्रामाण्यञ्च प्रतिपादयितुं प्रवृत्ता भट्टपादा योगिनोऽपि निराकुर्वन्ति, अन्यथा वेदबाह्य आत्मानं योगिनं सर्वज्ञं प्रतिपादयेदिति मूलं योगिनो निराकरणे । तदिदं प्रतिपादयन्त्यनुमानपरिच्छेदान्ते भट्टपादाः—

'न चान्त्येन विशेषेण व्यवहारोऽस्ति कस्यचित् ।
न च प्रत्यक्षता तस्य सङ्घाते केवलस्य वा' ॥

(श्लोक वा० अनु० प० १७७)

इति ।

एवं समवायोऽपि न पदार्थान्तरम् । अवयवावयविनोः जातिव्यक्त्योः गुणद्रव्ययोः क्रियाक्रियावतोस्सम्बन्धस्समवाय इति परैरङ्गीकृतः । भट्टपादास्तु समवायस्थाने तादात्म्यसम्बन्धमङ्गीकुर्वन्ति । सम्बन्धश्च सम्बन्धिपरतन्त्रः सम्बन्ध्यधीननिरूपणश्च ।

---

१. अस्मिन् मानमेयार्थसङ्ग्रहे बालानां पदार्थपरिज्ञानाय भट्टपादाभिमतास्सिद्धान्ता एव सङ्गृहीताः । अतो नात्र खण्डनस्य वा मण्डनस्य वाऽवसरः । क्वचिद्भट्टपादप्रवर्तितस्य पथो मूलमात्रं निर्दिष्टम् । सर्वस्य दार्शनिकस्य कश्चन नियतः पन्था भवति । तेनैव पथा गन्तव्यं दार्शनिकेन, अन्यथा पथभ्रष्टस्स भवेत् ।

संयोगसम्बन्धे तथानुभूयते। समवाये तु भिन्नोऽनुभवः। समवाय एको वा नाना वा, नित्यो वाऽनित्यो वेति नाना विकल्पाः प्रादुर्भवन्ति। व्यक्त्यपेक्षया जातिरतिरिक्ता न भवति, अवयवापेक्षयाऽवयवी नातिरिक्त इति ये वादिनस्तान्निराकर्तुं जातिमवयविनञ्च साधयितुं भट्टपादा भिन्नं पन्थानमाविरकार्षुः—यद् भेदाभेदो नाम। जातिः व्यक्त्यपेक्षया नात्यन्तं भिन्ना नाप्यभिन्ना। एवमवयवापेक्षया नात्यन्तमवयवी भिन्नः नाप्यभिन्नः। इमं पन्थानमवलम्ब्य गच्छद्भिः भट्टपादैः समवायस्थाने तादात्म्यमभिषिच्य जात्याद्यनङ्गीकुर्वाणानां वादास्समालोचिताः। वेदबाह्यानां वादास्समवायमवलम्ब्य जातिव्यक्त्यादेर्भेदाभेदमनङ्गीकृत्यैव नैयायिकादिभिस्समालोचिताः किन्तु भट्टपादैर्मार्गान्तरमवलम्बितम्। अतएव प्रत्यक्षसूत्रे लिखन्ति—

'न चाप्ययुतसिद्धानां सम्बन्धित्वेन कल्पना।
नानिष्पन्नस्य सम्बन्धः निष्पत्तौ युतसिद्धता॥

(श्लोक वा० प्र० सू० १४६)

इत्यादि।

### द्रव्यलक्षणं तद्विभागश्च

गुणाश्रयो द्रव्यम्। तच्चैकादशविधम्—पृथिवी आपः तेजो वायुराकाशः कालो दिक् आत्मा मनश्शब्दस्तम इति।

तत्र पृथिवीत्ववती पृथिवी। सा च रूप-रस-गन्ध स्पर्श सङ्ख्या परिमाण-संयोग-गुरुत्व-द्रवत्व-स्नेह- संस्कारवती। इमे गुणा नित्या अनित्याश्च। चित्ररूपं नातिरिक्तम्। सुवर्णं पार्थिवमिति विशेषः।

अप्त्वसामान्यवत्य आपः। गन्धवर्जं पूर्वोक्तगुणवत्यः। नित्यानित्यत्वं पूर्ववत्।

तेजस्त्ववत्तेजः। रूप-सङ्ख्या-स्पर्श-परिमाण-संयोग-संस्कारवत्। तेजस्त्रिविधम्-दिव्यं भौमम् उदर्यञ्चेति।

वायुत्ववान् वायुः। स्पर्श-सङ्ख्या-परिमाण संयोगवेगवान्। स च प्रत्यक्ष इति विशेषः।

अवकाशात्मकं व्योम। सङ्ख्या-परिमाणसंयोगवत्। तच्चैकं विभु नित्यञ्च। तच्चाक्षुषमिति नित्यसंयोगवदिति च विशेषः।

अतीतादिधी हेतुः कालः। स च प्रत्यक्ष इति विशेषः। ज्ञानलक्षणाप्रत्यासत्तेरनङ्गीकाराद् भाट्टमते कालः प्रत्यक्ष इति विशेषः।

प्राच्यादिधीहेतुर्दिक्। दिक्कृतपरत्वापरत्वगम्या। होलाकाधिकरणन्यायेन प्राच्यत्वादय औपाधिकाः न निर्वचनार्हाः।

आत्मत्ववानात्मा। सः शरीरेन्द्रियाद्यतिरिक्तो विभुर्नित्यश्च। सङ्ख्या-परिमाण-संयोग-बुद्धि-सुख-दुःखे-च्छा-प्रयत्न-धर्मा-धर्म-संस्कारवान्, नित्यज्ञानसुखवांश्च।

मनस्त्वयोगान्मनः। सङ्ख्या-परिमाण-संयोगवत्। तच्च नित्यं विभु च।

शब्दत्ववान् शब्दः। ध्वनिः वर्णात्मकश्चेति द्विविधः। तत्र वर्णात्मको नित्यः, कण्ठताल्वाद्यभिघातजन्यवायुनाऽभिव्यङ्ग्यः। सङ्ख्या-परिमाण-संयोगवांश्च। शब्दो द्रव्यमिति विशेषः नाकाशगुणः। ध्वन्यात्मकशब्दे वेगोऽपि वर्तते। तारत्वमन्द्रत्वादयो धर्माः ध्वनिनिष्ठा वर्णेषु भासन्ते।

तमस्त्वजातिमत्तमः। रूप-सङ्ख्या-परिमाण-संयोग-वेगवत्। अवतमसम् सन्तमसम् अन्धतमसञ्चेति त्रिविधम्।

## गुणाः

द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः। रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-संयोग-गुरुत्व-द्रवत्व-स्नेह-बुद्धि-सुख-दुःखे-च्छा-प्रयत्न धर्मा-धर्म संस्कार भेदादष्टादशविधः। पृथक्त्वम् परत्वम् अपरत्वम् विभागश्चेति चत्वारो गुणा नाङ्गीक्रियन्ते। पृथक्त्वमन्योन्याभाव एव न गुणः। परत्वमपरत्वञ्च कालदिक्संयोग एव, संयोगाभाव एव विभागः एवं द्वेषोऽपि न गुणान्तरम् ज्ञानस्यैव विशेषः।

चक्षुर्ग्राह्यो गुणो रूपम्, रूपत्ववद्वा। रूपं षड्विधम्-नीलपीतादिभेदात्। चित्ररूपं नाङ्गीक्रियते।

रसनग्राह्यो गुणो रसः मधुरादिभेदेन षड्विधः।

घ्राणग्राह्यो गुणो गन्धः सुरभ्यसुरभिभेदेन द्विविधः।

त्वगिन्द्रियग्राह्यो गुणः स्पर्शः। शीतोष्णानुष्णाशीतभेदात् त्रिविधः। इमे चत्वारोऽपि उद्भूतानुद्भूतभेदाद् द्विविधाः। एकत्वादि परार्धपर्यन्ता सङ्ख्या। सा च व्यासज्य वृत्तिरव्यासज्यवृत्तिश्च। द्वित्वादिसङ्ख्या व्यासज्यवृत्तिः, एकत्वसङ्ख्याऽव्यासज्यवृत्तिः।

मानव्यवहारहेतुः परिमाणम्। अणु-मह-द्दीर्घ-ह्रस्वादिभेदम्। त्रसरेणुगतमणुत्वम्। तद्भिन्नः परमाणुर्नाङ्गीक्रियते। परमपरञ्चेति महत्त्वं द्विविधम्। आद्यमाकाशादिगतम्। अपरं महत्त्वं पञ्चविधम्-सङ्ख्याजं, परिमाणजं उभयजं, परिमाणप्रचयजं, सङ्ख्यापरिमाणप्रचयजञ्च। दीर्घत्वयोगि दीर्घम्, ह्रस्वत्वयोगि ह्रस्वम्।

घटात् पटः पृथगिति व्यवहारसिद्धं पृथक्त्वं गुणान्तरमिति परे मन्यन्ते किन्तु भाट्टमतावलम्बिनस्तत्—अन्योन्याभावेनान्यथासिद्धमभिप्रयन्ति।

संयुक्तधीहेतुस्संयोगः। स च नित्योऽनित्यश्च। कालाकाशादेस्संयोगो नित्यः। अनित्यसंयोगो द्विविधः—अन्यतरकर्मजः उभयकर्मजश्चेति। श्येनक्रियया वृक्षस्य संयोग

आद्यः। मेषयोस्संयोगोऽन्त्यः। संयोगजसंयोगो नाङ्गीक्रियते। विभागो न गुणान्तरम्, संयोगाभावेनैव विभागोपपत्तेः। संयोगाभावपदेनात्र संयोगध्वंसमङ्गीकुर्वन्ति। तथाचोत्तरदेशसंयोगफलकपूर्वसंयोगध्वंस एव विभाग इति सिध्यति। बुद्धिर्ज्ञानम्। अनुभवस्मृत्यात्मना तद् द्विविधम्। अनुभवोऽपि द्विविधः—यथार्थोऽयथार्थश्च। यथार्थः प्रमाणजन्यः। सैव प्रमेति कथ्यते। प्रमाकरणञ्च प्रमाणम्। अनधिगतार्थगन्तृत्वं प्रमाणलक्षणम्। तेन स्मृतेः अनुवादवाक्यस्य चाप्रामाण्यं सिध्यति। अनधिगतार्थगन्तृत्वं धारावाहिकज्ञानेऽप्यस्तीति तत् प्रमाणम्।

तानि च प्रमाणानि षट्—प्रत्यक्षम् अनुमानम् उपमानम् अर्थापत्तिः अनुपलब्धिः शब्दश्चेति।

## प्रत्यक्षम्

तत्र सदर्थेनेन्द्रियाणां संयोगजन्यं ज्ञानं प्रत्यक्षम्। अत एव भ्रमज्ञानं न प्रत्यक्षम् सदर्थाभावात्। तथा च सूत्रं जैमिनेः—'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्' इति। इन्द्रियजन्यं ज्ञानं द्विविधम्—निर्विकल्पकं सविकल्पकञ्चेति। संसर्गानवगाहि ज्ञानं निर्विकल्पकम्, विशिष्टवैशिष्ट्यावगाहि ज्ञानं सविकल्पकम्। तत्करणमिन्द्रियम्, हानोपादानादिकं फलम्। तथा च प्रमाणानां त्रैफल्यं सिद्धं भवति।

इन्द्रियाणि षट्-घ्राण-रसन-चक्षुः-श्रोत्र-त्वङ्-मनांसि। सन्निकर्षश्चतुर्धा—संयोगः संयुक्ततादात्म्यम्, संयुक्ततादात्म्यतादात्म्यम् विशेष्यविशेषणभावश्चेति। चक्षुस्संयोगेन यथा घटो गृह्यते तथा श्रोत्रसंयोगेन शब्दो गृह्यत इति विशेषः, शब्दस्य द्रव्यत्वात्। संयुक्ततादात्म्येन रूपरसादिः शब्दत्वञ्च गृह्यते। संयुक्ततादात्म्यतादात्म्येन रूपत्वादिकं गृह्यते, विशेषणविशेष्यभावेनाभावो गृह्यते।

## अनुमानम्

अनुमितिकरणमनुमानम्। व्याप्तिज्ञानत्वेन तज्जन्यं ज्ञानमनुमितिः। वह्निव्याप्यधूमवानयं पर्वत इति परामर्शो नाङ्गीक्रियते। अयं धूमवानिति पक्षधर्मताज्ञाने धूमो वह्निव्याप्य इत्यनुभवजन्यसंस्कारोद्बोधेऽनुमितेर्जायमानत्वात् परामर्शज्ञानस्य हेतुत्वकल्पने गौरवात्। वन्ह्यंशेऽनुमितिः, पर्वतांशे च प्रत्यक्षमेव। जातिसङ्करस्तु न दोषाय। व्याप्तिश्च सर्वसाधननिष्ठसाध्यसामानाधिकरण्यम्।

अतएव व्यतिरेकयोर्न व्याप्तिः। व्याप्तिश्च व्यभिचाराज्ञानसहकारदर्शनाभ्यां गृह्यते। सहकारदर्शनञ्च भूयो वा सकृद्वा। अन्वयिरूपमेवानुमानम्, न व्यतिरेकिरूपम्, व्यतिरेकव्याप्त्या साध्यधीश्चार्थापत्त्या सिध्यति नानुमानात्। अत एवार्थापत्तिः प्रमाणान्तरं भाट्टानाम्।

तदिदमनुमानं स्वार्थं परार्थञ्चेति द्विविधम् । परार्थमनुमानं त्र्यवयवम्—प्रतिज्ञा—हेतू—दाहरणरूपम्, उदाहरणोपनयनिगमनरूपं वा । द्वेधापि भाष्यकृता वर्णितत्वात् ।

## उपमानम्

सादृश्यप्रमाकरणमुपमानम् । ग्रामे गामनुभूतवतो वनं गतस्य पुंसो गवयेन्द्रिय-सन्निकर्षेण गोसदृशोऽयं पिण्ड इति धीरुदेति । सा करणम् । एतत्सदृशो मदीया गौरिति गोनिष्ठसादृश्यज्ञानं फलम् । इयमेवोपमितिः । ग्रामस्थगोरिन्द्रियासन्निकृष्टत्वान्नेदं प्रत्यक्षम् नाप्यनुमानम् गवयनिष्ठसादृश्यस्यातल्लिङ्गत्वात्, उपमितेः नियमेन व्याप्तिज्ञानजन्यत्वस्य-वक्तुमशक्यत्वाच्च । अतो मानान्तरम् । किञ्च—भाट्टा उपमितिप्रमाणं विशिष्य क्रतूनां सादृश्यमवलम्ब्य प्रकृतिविकृतिभावनिर्णयाय स्वीकुर्वन्ति । तथाहि—'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति वाक्यमवगत्यात्र भावनायाः साध्यसाधनाकाङ्क्षापूरकफलयाग-योस्सत्त्वेनेतिकर्तव्यतापूरकसामग्र्यभावेन सौर्ययागं विकृतित्वेन निश्चित्यैतद्गतौषधि-प्रभवद्रव्यकत्वं निर्वपति पदघटितत्वञ्च सादृश्यमादायाग्नेययागमुपमिन्वन्ति—एतत्सदृश आग्नेययाग इति । प्रकृतियागानुष्ठानोत्तरकाल एव विकृतियागानुष्ठानेऽधिकार इति सौर्ययागानुष्ठानकाले आग्नेयस्य परिचितत्वेन यथाऽऽग्नेययागानुष्ठानेन फलं सम्पादितं तथा सौर्ययागेन फलं सम्पादयेदिति निश्चयो भवति, सौर्ययागवद् ओषधि प्रभवद्रव्यकत्वनिर्व-पतिघटितत्वस्याग्नेये सत्वात् आग्नेययागप्रकृतिकोऽयं सौर्ययागः । अतस्तस्मादितिकर्त-व्यताया अतिदेशः कर्तव्य इति । नात्र वाच्यवाचकभावनिर्णयः फलम्, किन्तु सादृश्या-त्प्रकृतिविकृतिभावनिश्चय एव ।

## अर्थापत्तिः

उपपाद्यज्ञानादुपपादककल्पनमर्थापत्तिः । येन विना यन्नोपपद्यते तदुपपाद्यम् । तज्ज्ञानं करणम् । दिनेऽभुञ्जानस्य पीनत्वं रात्रिभोजनेन विनाऽनुपपन्नम् । अत्रोपपाद्यं पीनत्वम् । रात्रिभोजनमुपपादकम् । रात्रिभोजनस्य कल्पनमर्थापत्तिः । पीनत्वज्ञानं करणम् । तेनार्थस्यापत्तिः कल्पना यस्मादित्यर्थः पर्यवस्यति । सेयं द्विविधा—दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति । दृष्टार्थापत्तेरुदाहरणम्—पीनो देवदत्तो दिवा न भुङ्क्ते इति । श्रुतार्थापत्तेरुदाहरणम्—स्वर्गसाधनत्वेन श्रुतस्य यागस्योपपत्तयेऽपूर्वकल्पनम् ।

## अनुपलब्धिः

योग्यस्य घटस्यानुपलब्धिदशायां यस्तदभावः तस्य ग्राहिकाऽनुपलब्धिः । यद्यत्र घटस्स्यादुपलभ्येत, नोपलभ्यते । अयमभावोऽनुपलब्ध्या गृह्यते । अनुपलब्धेश्च भावग्रहे हेतुत्वं क्लृप्तम् करणत्वमात्रं कल्प्यमिति विशेषः ।

### शब्दः

अन्वयितार्थसंसर्गविषयं वाक्यं शब्दः। वाक्यञ्चाकाङ्क्षा-योग्यता-सन्निधि-मदर्थकानां पदानां सङ्घः। पदञ्च सुप्तिङन्तम्। न वर्णसमूहः, क च ट त प इति वर्णसमूहेऽतिव्याप्तेः। नापि शक्तं पदम्, घटोत्पादनशक्तिमत्त्वाद्दण्डस्य पदत्वापत्तेः। नाप्यर्थप्रत्ययानुकूलशक्तिमत्पदम्, वह्निरूपार्थप्रत्ययानुकूलशक्तिमत्त्वाद्धूमस्यापि पदत्वापत्तेः। नापि वर्णत्वे सति तत्त्वम्, घटं घटेन इत्यत्र प्रकृतिप्रत्ययोः प्रत्येकं पदत्वापत्तेः। यद्यपि प्रकृतिप्रत्यययोः प्रत्येकं शक्तिः स्यात् तथापि केवलयोस्तयोः प्रयोगासाधुत्वेन मिलितयोरेवार्थगमकत्वम्।

पदस्य वर्णात्मकत्वाद्वर्णानाञ्च नित्यत्वात्पदं नित्यम्। पदस्य नित्यत्वञ्च प्रवाहानादित्वेन सिध्यति। पूर्वपूर्वक्रमवशादुत्तरः प्रयोगः, न त्विदम्प्रथमः। एतेन वेदनित्यत्वं साधितं भवति। शब्दनित्यत्वाधिकरणे भट्टपादैरुक्तम्—

'अन्यथानुपपत्त्यातस्सर्वथा पदनित्यता' एवं

'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता' इति च।

### वेदापौरुषेयत्वम्

एवं शब्दनित्यत्वे सिद्धे वेदस्यापौरुषेयत्वं साधितं भवति। नित्यानां वर्णानां विभूनां स्वतः क्रमशून्यत्वादुच्चारणक्रमप्रवाहस्यानादित्वादपौरुषेयत्वं वेदस्य। अपौरुषेयत्वञ्चार्थमुपलभ्य रचितत्वाभाव एव। वाक्यत्वात्सकर्तृकत्वानुमानं न सङ्गतम्, धर्मरूपार्थस्यालौकिकत्वेनोपलम्भायोगात् उपलभ्य रचितत्वाभावेन बाधात्। उपलभ्य रचितत्वस्योपाधित्वाच्च। यत्र यत्र पौरुषेयत्वम् तत्र तत्रोपलभ्य रचितत्वमनुभवाम इति साध्यव्यापकत्वमुपलभ्यरचितत्वस्य, शुकवाक्ये च वाक्यत्वमस्ति उपलभ्य रचितत्वं नास्तीति साधनाव्यापकत्वम्। अतो बाधात् सोपाधिकत्वाच्च नेदमनुमानं वेदानां पौरुषेयत्वे घटते। वेदानामीश्वरकर्तृकत्वे स्वीक्रियमाणे 'सर्वैश्च वेदैरहमेव वेद्यः' इति कण्ठरवेण कथयन्नीश्वरः स्वस्य वेदवेद्यत्वरूपमर्थमुपलभ्य वेदान् रचयामासेत्येष्टव्यम्। यतो हि वाक्यरचनाऽर्थज्ञानपूर्विका भवति। स्वस्य वेदवेद्यत्वरूपमर्थं वेदान्तरादुपलब्धवानीश्वर इति वक्तव्यम् तेन यस्माद्वेदात् स्वस्य वेद्यत्वमुपलब्धवान् स वेद ईश्वरेण न निर्मित इत्यायाति। अस्मात्सङ्कटाद्विमुक्तये भाट्टाः पूर्वपूर्वक्रमवशादुत्तरः प्रयोग इत्यनादिप्रवाहेण वेदापौरुषयत्वं प्रसाधयन्ति—

'वेदाध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा'॥

इति वदन्तः। शब्दार्थसम्बन्धस्य नित्यत्वस्वीकारादपि वेदनित्यत्वं सिध्यति। स च सम्बन्धः शक्तिरूपो नित्यः। अत एव शब्दानां जातिवाचित्वम्।

एवं पदनित्यत्वे सिद्धे तत्पदं चतुर्विधम्—नामाख्यतोपसर्गनिपातभेदेन। तत्रोपसर्गनिपातानामर्थद्योतकत्वं न वाचकत्वम्ः तदिदमुक्तं भट्टपादैः—

'चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः।
क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः॥
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते।
यदर्थद्योतकौ तौ तु वाचकस्स विचार्यते'॥ इति।

**नामार्थः**

नामार्थः शक्य-लक्ष्य-गौणश्चेति त्रिविधः! अभिधा लक्षणा गौणो चेति तिस्रो वृत्तयः। एतेन शब्दोऽपि त्रिविध इत्युक्तं भवति। तत्र घटादिपदानां जातौ शक्तिः, न तु व्यक्तौ, नापि जातिविशिष्टव्यक्तौ। शक्तिश्च पदार्थान्तरम्, नेश्वरेच्छारूपा, इच्छा हि सम्बन्धरूपा न क्वाप्यनुभूयते। सम्बन्धग्रहपूर्वकमेव घटादिशब्दा अर्थमवबोधयन्तीति नियमः। तत्र सर्वासु व्यक्तिषु जातिविशिष्टासु वा तासु सम्बन्धग्रहो दुर्लभः, व्यक्तीनामानन्त्यात्। अतो नागृहीतविशेषणा बुद्धिर्विशिष्टमुपभञ्जामति' इति न्यायेन लाघवात् प्राथम्याश्च जातेर्वाच्यत्वमुचितमिति भाट्टाः। व्यक्तीनां बोधस्तु लक्षणया। लक्षणयोपस्थिता अप्यर्थाः शाब्दा एव भवन्ति। अत एकत्वादिसङ्ख्यानां व्यक्तिष्वन्वये 'न हि शाब्दमशाब्देनान्वेति' इति न्यायोल्लङ्घनमपि न भवति; लक्षणयोपस्थितानामपि शाब्दत्वात्। तस्माच्छब्दोऽर्थस्तत्सम्बन्धः शक्तिरूपश्च नित्या इति भाट्टानां राजमार्गः।

**लक्षणा**

शक्यसम्बन्धो लक्षणा। तत्र मुख्यार्थबाधो हेतुः, तात्पर्यानुपपत्तिश्च बीजम्, नान्वयानुपपत्तिः। अन्वयानुपपत्तेर्बीजत्वे गङ्गायां घोष इत्यत्र जघन्ये घोषपदे मीने लक्षणा किं न स्यात्, अथवा गङ्गापद एव नौकादौ लक्षणा किं न स्यात्? अन्वयस्य लाभात्। लक्षणावृत्तिः पदे, न त्वर्थं इति भाट्टाः।

**गौणी**

भाट्टमते गौणी वृत्तिस्तृतीया। वेदवाक्येषु तत्र तत्रार्थनिर्णयाय गौण्या वृत्तेरावश्यकता भवति। तदर्थं सूत्रकारो महर्षिर्जैमिनिः गुणाश्रयत्वेन निमित्तानि षट् परिगणयति-तत्सिद्धिः जातिः सारूप्यम्, प्रशंसा-भूमा-लिङ्गसमवाय इति। क्वचिच्च सूत्रकारः 'गुणवादस्तु' इति सूत्रयित्वा गौणार्थो ग्राह्य इति निर्दिशति। सूत्रारूढां गौणीं वृत्तिमाश्रित्य वार्तिककृतो गौणीं लक्षयन्ति—

'अभिधेयाविनाभूते प्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता'॥ इति।

'यजमानः प्रस्तरः' इति वेदवाक्यम् । अत्र यजमानशब्दो यागकर्तारमाचष्टे, प्रस्तरशब्दश्च दर्भमुष्टिं ब्रवीति । उभयोस्सामानाधिकरण्योपपत्तये तत्सिद्धिर्निमित्तं गुणाश्रयत्वेन स्वीक्रियते । गुणाश्रयशब्दस्य गुणः आश्रयो निमित्तं तत्सिद्धिरित्यर्थः । यजमानशब्दस्य प्रस्तरे प्रवृत्तिः यजमानगतगुणयोगाद्भवति । अतो यजमानपदेन यजमानकार्यं लक्ष्यते, तादृशकार्यकारित्वस्य प्रस्तरे सत्वात् यजमानशब्दस्य प्रस्तरे प्रवृत्तिः । साङ्गप्रधानस्यानुष्ठानं यजमानकार्यम् । प्रस्तरोऽपि साङ्गप्रधानहविषां धारणद्वारा यजमानकार्यं सम्पादयति । अतो यजमानकार्यकरत्वसिद्धिः प्रस्तरेऽस्तीति यजमानशब्दस्य प्रस्तरे प्रवृत्तिः । तथा च 'सिंहो माणवकः' इत्यत्र सिंहशब्दस्येव माणवके यजमानशब्दस्य गौण्या प्रस्तरे प्रवृत्तिरिति फलितम् । नात्र लक्षितलक्षणया निर्वाहः, उभयोश्शब्दयोस्सामानाधिकरण्यनिर्वाहाय यजमानशब्दस्य प्रस्तरे वृत्तिरवश्यं वक्तव्या । सामानाधिकरण्यञ्च एकविशेष्यकबोधजनकत्वम् । नेदं प्रस्तरेऽपि यजमानशब्दस्य व्यापाराभावे घटते । स च व्यापारो न लक्षितलक्षणात्मको भवितुमर्हति । लक्षणायां मुख्यार्थसम्बन्धित्वमात्रेण प्रतीतिः, इह तु मुख्यार्थयजमान गतकार्यकरत्वगुणयोगित्वमात्रेण प्रस्तरस्य प्रतीतिः । यद्यपि मुख्यार्थेन परम्परासम्बन्धो विद्यते तथापि तद्रूपानादरेण गुणयोगित्वमात्रेण प्रतीतिसिध्यर्थं गौणी वृत्तिरभ्युपगम्यते । अनेनैवाभिप्रायेण भट्टपादाः—'लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता' इतित्याहुः ।

गौः गावौ गाव इत्यादिनामपदेषु प्रकृत्या लक्षितो योऽर्थः तद्गता सङ्ख्या विभक्त्योच्यते । एको द्वौ बहव इत्यादौ सङ्ख्याविशिष्टो धर्मी वाच्यः, सङ्ख्या च प्रकृत्युपात्तत्वेवानूद्यते । विंशतिर्घटाः सहस्रं घटा इत्यादौ एकत्वेन प्रकृत्यर्थस्य सङ्ख्योच्यते न घटगता, बहुत्वविरोधात् । तेनैकत्वविशिष्टविंशतिसङ्ख्याविशिष्टा घटा इत्यर्थः पर्यवस्यति । विंशत्यादयश्शब्दा अत्र सङ्ख्येयप्रधानाः । विंशतिर्गवाम् इत्यादौ तु सङ्ख्यामात्रप्रधानाः । एकादिशब्दानां सङ्ख्यार्थत्वाभावे प्रातिपदिकत्वाभावात् वचनानां प्रवृत्तिरेव न स्यात् । अत एकादिशब्दाः सङ्ख्यार्थकाः । 'स घटः' 'तमानय' इत्यादौ तच्छब्दस्य सर्वनाम्नः सन्निहितपदान्तरात् प्रकरणाच्च ज्ञानप्रकारीभूतधर्मविशिष्टे बुद्धिस्थे शक्तिः । न चात्र सर्वनामपदं घटादिपदवाच्यम्, विना सर्वनाम्ना 'यत्पदादेः साकाङ्क्षत्वात्, विना च घटाद्युपपदेन विशेषालाभात् । एवं परोक्षबुद्धिस्थत्वावच्छिन्ने यत्तदोः प्रत्यक्षबुद्धिस्थत्वावच्छिन्ने इदमेतदोः शक्तिः ।

### समासार्थः

द्वन्द्वस्येतरेतरयोगः साहित्यं वाऽर्थः । स चैकक्रियान्वयलभ्यः । तत्र शक्तिर्वा लक्षणा वा । समाहारद्वन्द्वे समुदायोऽर्थः, समुदायाभिप्रायश्चैकत्वम् । अव्ययीभावे आधार-

त्वादिकमर्थः । कर्मधारये त्वभेदोऽर्थः । द्विगौ समाहारोऽर्थः । राजपुरुष इत्यादौ तत्पुरुषे षष्ठ्यर्थे सम्बन्धे तद्वति च लक्षणा । 'नीलोत्पलमिति कर्मधारये तत्पुरुषवत् नीलवति यद्यपि लक्षणाऽस्ति तथापि 'निषादस्थपतिः' इत्यत्र निषादश्चासाविति कर्मधारये लक्षणा-भावात् तत्पुरुषात् कर्मधारयस्य प्राबल्यं साधितं निषादस्थपत्यधिकरणे । बहुव्रीहिसमास-स्यान्यपदार्थे शक्तिरिति भट्टपादा अरुणाधिकरणे प्रतिपादयन्ति । तेषामयमाशयः—यथा राज्ञः पुरुष इत्यत्र षष्ठ्यन्तत्वाद्राजा पुरुषविशेषणम्, प्रथमान्तत्वाच्च प्रधान्येन पुरुषः समासार्थो भवति तथैव चित्रगुरित्यत्र देवदत्तादिविशिष्टा गाव एव प्रतीयेरन्, न चित्रगो-विशिष्टः पुरुषः, यदि चित्रा गावो यस्येति विग्रहः क्रियेत । तस्माच्चित्राणां गवामयम् इतीदृशेऽर्थे बहुव्रीहिर्वर्तते । यद्यप्यन्यथा विग्रहः तथापि समासोत्तरकालमीदृशार्थदर्शना-देवमेव विग्रहोऽपि कर्तव्यः । ततश्च सम्बन्धविशिष्टाभिर्गोभिर्देवदत्तादिर्विशिष्ट इति समासार्थो विज्ञायते । तस्माद्बहुव्रीहेरन्यपदार्थे शक्तिरिति । तदिदमुक्तं वार्तिके—

'अतश्च दण्डिशब्देन सम्बन्ध्येवोच्यते यथा ।
तथैव यौगिकैश्शब्दैः पिङ्गक्ष्यादिपदैरपि' ॥ इति ।

एतेन यौगिकानां शब्दानां सम्बन्धिवाचित्वमेव न सम्बन्धवाचित्वमित्युक्तं भवति ।

### कारकाणि

'कर्म कर्ता च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणमित्याहुः कारकाणि षट् ॥

'अनभिहिते' इत्यधिकारः, 'कारके' इत्यनुवृत्तिश्च । तथा च 'कर्मणि द्वितीया' इत्यस्य तिङा कृता चानभिहिते कर्मणि द्वितीयेत्यर्थो निष्पन्नः । 'घटं करोति ओदनं पचति' इत्युदाहरणम् । तच्च कर्म इप्सितमनीप्सितञ्चेति द्विविधम् । तत्रेप्सितं चतुर्वि-धम्—उत्पाद्यं प्राप्यं विकार्यं संस्कार्यञ्चेति । ईप्सितानिप्सितोभयानुगतं साध्यत्वं द्वितीयार्थः । तिङा कृता वाऽभिहिते कर्मणि तु प्रातिपदिकार्थमात्रे प्रथमा । हरिस्सेव्यते, ओदनः पच्यते इति । क्वचिदनुशासनात् द्विकर्मकतापि—गां पयो दोग्धि, अजां ग्रामं नयतीत्यादि । क्वचिद् द्विकर्मताया नियमस्य भङ्गोऽपि । यथा दुदोह गाम्, कुशशयने विशो निनायेति ।

तिङा कृता वानभिहितसङ्ख्ये कर्तरि तृतीया । लक्ष्म्या हरिस्सेव्यते चैत्रेणौदनः पच्यते मैत्रेण घटः कर्तव्य इति । विकारेऽभेदे उपलक्षणे च तृतीयाऽनुशिष्टा ।

तिङा कृता वाऽनभिहिते सम्प्रदाने चतुर्थी । ब्राह्मणाय गां ददाति ।

समासेन कृता वाऽनभिहितेऽपादाने पञ्चमी। अपादानं नाम विभागावधिः। वृक्षात्पततीति।

समासेन कृता वाऽनभिहितेऽधिकरणे सप्तमी। कटे आस्ते शेते वा। करणसम्प्रदानाधिकरणानां तिङाभिधानमेव नास्ति। अतस्तत्र कृता समासेन वाऽनभिहित इत्युक्तम्।

चैत्रः पचतीत्यादौ प्रथमायान्तु तिङाभिहितकर्तृसङ्ख्याश्रयत्वाच्चैत्रादेः कर्तृत्वम्। तिङा सुपा चोक्तमेकत्वं चैत्रगतमेव न तु प्रथमायाः कर्तृत्वमर्थः, प्रातिपदिकार्थमात्रे तद्विधानात्। विरुद्धविभक्तिराहित्ये सति कर्तृसङ्ख्यारूपैकार्थपरत्वात् सामानाधिकरण्यम्। अत एव लक्षणया कर्तुर्बोधः। तथा च प्रातिपदिकार्थमात्रविवक्षायां प्रथमा तत्सम्बन्धविवक्षायान्तु षष्ठी। 'कर्तृकर्मणोः कृति' इति क्वचित् कर्तृत्वाद्यपि षष्ठ्यर्थः। यथा वज्रस्य भर्ता इति। अत्र वज्रे कर्मणि षष्ठी।

### आख्यातार्थः

तिङ्प्रत्यय आख्यातशब्देनोच्यते। स्थानी लकारो नाख्यातशब्देन कथ्यते। तत्र लिङ्लोट्लेट्सु ये तिङ्प्रत्ययाः तेषु धर्मद्वयं लिङ्त्वादिकमाख्यातत्वञ्चेति। अर्थात् तत्र तिङ्प्रत्यया लिङ्त्वादिना आख्यातत्वेन चावच्छिन्ना भवन्ति। लिङ्त्वावच्छिन्नस्य प्रत्ययस्यान्योऽर्थः आख्यातत्वावच्छिन्नस्य चान्यः। आख्यातत्वावच्छिन्नस्य तस्य कृतिरर्थः। कृतिरेव भावनापदेनाभिधीयते। सर्वाख्यातार्थः कृतिरेव सैवार्थभावना। यजति ददाति जुहोति इत्यादिषु करोतिना विवरणमनुभवामः—यागं करोति दानं करोति होमं करोतीति। अत्र यागं दानं होममिति धात्वर्थो निर्दिश्यते करोतिना च प्रत्ययार्थो निर्दिश्यते। अतो धात्वर्थातिरिक्तः प्रत्ययार्थः कश्चनावगम्यते। स एवाख्यातार्थः भावनापदाभिधेयः। तदिदमुक्तं भट्टपादैः—

'सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति।
सामानाधिकरण्येन करोत्यर्थोऽवगम्यते॥ इति॥

सर्वाख्यातेषु करोतिना विव्रियमाणेयं क्रिया आश्रयभूतं कर्तारं विनाऽनुपपन्ना तमाक्षिपति। किमाक्षेपेण ? कर्तैवाभिधीयतामाख्यातेनेति चेन्न; कृत्याश्रयः कर्ता भवति। कृतिश्च विशेषणम् 'नागृहीतविशेषणा बुद्धिर्विशिष्टमुपसङ्क्रामति' इति, 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति च न्यायेन प्रथमं कृतावेवाभिधाया व्यापारः। अतः कृतिरेवाख्यातवाच्या, न तु कर्ता वाच्यः। 'भावप्रधानमाख्यातम्' इति यास्कस्मृतिरपि कृत्यपरपर्याया भावनाया एवाख्यातार्थत्वमनुमन्यते। भावो नाम भावना, न शुद्धधात्वर्थः, तत्प्रधानमाख्यातं भवति। धात्वर्थस्य धातुवाच्यत्वेनाख्यातप्रत्ययार्थत्वाभावात्। अनन्य-

लभ्यश्शब्दार्थ इति न्यायेन कृत्याश्रयस्य कर्तुः प्रकारान्तरेण लाभसम्भवे आख्यातवाच्यत्वं न सिध्यति। तस्मादाख्यातस्य कृतिः = भावनेवार्थः। ननु 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति स्मृतिविरोधः। तत्र हि 'कर्तरि कृत्' इत्यतः कर्तरिपदस्यानुवृत्तौ लकाराः कर्तरि कर्मणि अकर्मकेभ्यो भावे च विधीयन्ते। तेन कर्त्रर्थकत्वं सिध्यतीति चेदत्र भट्टपादा अभिप्रयन्ति—'लः कर्मणि' इत्यस्य सूत्रस्य 'द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचनम्' इति सूत्रयोरेकवाक्यत्वस्यावश्यकत्वात् कर्तृगतैकत्वादौ विवक्षिते एकवचनात्मकाः द्विवचनात्मका बहुवचनात्मका लकारा भवन्तीत्यर्थनिष्पत्तेः नानुशासनविरोध इति। 'द्व्येकयोः' इत्यस्य कर्त्रर्थकत्वं न सम्भवति, कर्तृपरत्वे द्व्येकेषु इति बहुत्वापत्तेः। तेन भावप्रधाननिर्देशोऽङ्गीकर्तव्यः—द्वित्वैकत्वयोरिति। तथा च सङ्ख्यामात्रवाचित्वं लादेशस्येति निष्पद्यते। आख्यातस्य कर्तृवाचित्वे 'सत्त्वप्रधानानि नामानि' इति स्मृत्या सत्वप्राधान्यान्नामत्वं स्यान्नाख्यातत्वम्। यथा 'द्रव्यमनभिधाय केवलं कपिशशोणादिशब्देषु प्रयुज्यमानेषु द्रव्यगतरूपविशेषाः प्रतीयन्ते तथा कर्तारमनभिधाय द्वित्वैकत्वादिसङ्ख्यासूच्यमानासु सङ्ख्येयगतत्वेनैव प्रतीतेर्जायमानत्वात् कर्तुरनभिधानेऽपि सङ्ख्यावाचित्वोपपत्तेः। सङ्ख्या च तिप्त्वेन वाच्या भवति न तु लत्वेन, सङ्ख्याशून्यत्वात्तस्य। कर्त्रर्थे लविधिशास्त्रेण लकारो विहितः, अनन्तरं तिबादीनामादेशः, तदादेशन्यायेन तिबादीनां कर्तृसम्बन्धः, तदैव 'द्व्येकयो' रिति सङ्ख्याशास्त्रेणैकवाक्यत्वे कर्ता सङ्ख्याविशेषणं भवति। सङ्ख्यासम्बन्धं विना तिबादीनां विधानं नोपपद्यते। एवं सति कर्तुराख्यातवाच्यात्वं कथं नियम्यते। यत्र सङ्ख्यायास्सम्बन्धो न विद्यते तत्र कर्त्रर्थे शतृशानजादिर्भवतु, तिबादयस्तु कर्तृगतसङ्ख्यामाश्रित्यैव भवेयुः। तस्मान्नाख्यातार्थः कर्ता किन्तु कृतिरेव। सैव च भावनेति।

## आर्थीभावना

भावना नाम प्रयोज्यनिष्ठफलकप्रयोजकव्यापारः। भावयतीति भावनेति व्युत्पत्तिः। सा शाब्दी आर्थी चेति द्विविधा। तत्र प्रवर्तनाख्यस्य प्रयोजकलिङादिव्यापारस्य प्रवृत्तिरूपभाव्यफलकत्वात् भावनात्वम्, एवं पचतीत्यादौ स्थाल्यधिश्रयण-फूत्कार-तण्डुलावापादीनाम् ओदनानुकूलानां नानायत्नानां समुदायः तन्निष्ठमन्योत्पादानुकूलत्वं वा भावना। तदिदमुक्तम्।

'यदा त्वाद्यपरिस्पन्दात्प्रभृत्याफललाभतः।
यत्नाः पूर्वापरीभूताः क्रिया सा वर्तते तदा'॥ इति।

यत्नस्य भावनात्वेऽकर्मकत्वात् करोतेश्च सकर्मकत्वात् करोतिना विव्रियमाणस्य यत्नस्य कथं सङ्गतिरित्याक्षेपस्स्यात् किन्तु करोत्यर्थो यत्ननिष्ठमनुकूलत्वमेवेति न

दोषः। अन्योत्पादानुकूलत्वस्वरूपे स्वीकृतेऽकर्मकस्थलेऽपि धातौ भावनाकर्मास्त्येव। धात्वर्थकर्मान्यत् भावनाकर्म चान्यत्। इयञ्च भावना सर्वाख्यातार्थः। 'स्वास्थ्यकामः शयीत आसीत वा इत्याद्यकर्मकस्थलेष्वपि शयीत इत्यस्य शयनं कुर्यात् इति विवरणदर्शनेन करोति भावयत्योः सकर्मकत्वसिद्धिः। भवत्यर्थस्य यः कर्ता करोतेः कर्म जायते। धात्वर्थांशेन विशेषः प्रत्ययांशेन च सामान्यमर्थः। 'करोति' इत्यत्र प्रत्ययः कर्तृसङ्ख्याप्रतिपत्त्यर्थः। शेतेऽस्ति विद्यते इत्यादावपि केचन सुखाद्याक्षेपाद् भावनाबोधमभिप्रयन्ति। 'यजेत स्वर्गकामः' इत्यत्र फलोद्देशप्रवृत्तकर्तृव्यापारव्याप्यत्वाद्यागस्य करणत्वं भावनानिरूपितम्। यथा दण्डेन घटं करोति इत्यत्र दण्डस्य स्वरूपेण साध्यघटे नान्वयः, घटस्यासिद्धत्वात्। किन्तु यस्यां कृतौ दण्डः करणत्वेनावच्छेदकः तस्यां कृतौ घटः कर्मत्वेनान्वेति इत्यनयोस्साध्यसाधनभावः, एवं प्रकृतेऽपि। एवञ्च यत्नसमुदायो वा प्रत्ययार्थः अनुकूलत्वं वा प्रत्ययार्थः पक्षद्वयेऽपि समन्वयो भवति।

ननु यागस्य धात्वर्थस्य क्रियारूपत्वेन साध्यत्वात् कथं तस्य करणत्वमुच्यत इति चेदत्र वदामः—यागस्य साध्यत्वे 'ज्योतिष्टोमेन' इति तृतीयान्तस्यान्वयो न स्यात्। ज्योतिष्टोम इति यागनामधेयम् स्वस्य स्वं प्रति करणं कथं भवेत्? अतो धात्वर्थस्य क्रियारूपत्वं परित्यज्याख्यातार्थभावनायाः किं केन कथमित्याङ्क्षानुरोधेन सिद्धं रूपमङ्गीकृत्य लक्षणया करणत्वेनान्वयो वक्तव्यः। तथाच ज्योतिष्टोमेन तन्नामकयागेनेति ज्योतिष्टोमपदस्यान्वयस्सुकरः। कृतेः कर्तव्यताबोधावसर एव फलावाङ्क्षा जायते—किं भावयेदिति। तत्र स्वर्गकामपदस्य स्वर्गे फले लक्षणामङ्गीकृत्य स्वर्गं भावयेदिति, केनेत्याकाङ्क्षायां यागे करणत्वं लक्ष्यते, इतिकर्तव्यताकाङ्क्षायां क्रियारूपाणां सोमादेश्च करणानुग्राहकत्वेनान्वयः क्रियते। तत्सिद्धं प्रयत्नोऽन्योपादानुकूलत्वं वा भावनेति। इयमेवार्थीभावनेति व्यपदिश्यते। इयमेव च शाब्दीभावनया प्रेरणापरपर्यायया भाव्यते।

### विध्यर्थनिरूपणम्

लिङ्लोट्लेट्तव्यप्रत्ययघटितेषु वाक्येषु लिङादिविधीनां प्रेरणा-प्रवर्तनाऽर्थः। प्रवर्तना च प्रवृत्त्यनुकूलव्यापारः। तेषु श्रुतेषु मामयं प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानयम् इति प्रतीतिर्भवति, लट्लङादिघटितेषु वाक्येषु श्रूयमाणेषु प्रतीतिस्तादृशी न भवति इत्यन्वयव्यतिरेकाभ्यां विधीनां प्रवर्तनैवार्थं इति निश्चीयते। यद्यपि प्रवृत्तिरिष्टसाधनताज्ञानेनैव भवति तथापि इष्टसाधनत्वादिकं न विध्यर्थः। सत्यपीष्टसाधनताज्ञाने कृत्यसाध्ये कर्मणि प्रवृत्त्यदर्शनात् कृतिसाध्यत्वज्ञानमपि विध्यर्थत्वेन स्वीकर्तव्यं स्यात्। न चेष्टा-

पत्तिः, सति सम्भवे शब्दस्यानेकार्थत्वमन्याय्यमिति न्यायविरोधात्। इष्टसाधनत्वज्ञाना-भावेऽपि गुरुराजादिप्रेरिते कर्मणि प्रवृत्तिदर्शनात्—गुरुप्रेरितोऽहं करोमि, राजप्ररितोःहं करोमीति। यद्यपि मण्डनमिश्रपार्थसारथिमिश्रप्रभृतय इष्टसाधनत्वं विध्यर्थं इति वर्णयन्ति तथापि भट्टपादाः 'अनुष्ठेये हि विषये विधिः पुंसां प्रवर्तकः' इति वदन्तो विधेः प्रवर्तकत्वमभिप्रयन्ति। प्रवर्तकत्वञ्च प्रवृत्त्यनुकूलव्यापारः। तादृशव्यापार एव प्रवर्तना। सा च स्वांशत्रयपरिपूर्णा प्रवर्तयति। वार्तिके 'प्रवर्तक' इति पदं कर्तृ-वाचि ण्वुल् प्रत्ययान्तम्। तेन प्रवृत्तिकर्ता विधिरिति पर्यवस्यति। विधेः प्रवृत्तिकर्तृत्वं स्वव्यापारबोधनेनैव सिध्यति। तस्मात् विध्यर्थः प्रवर्तना-प्रवृत्त्यनुकूव्यापारः। किञ्च भावार्थाधिकरणे तन्त्रवार्तिके आर्थीभावनास्वरूपनिरूपनिरूपणावसरे भट्टपादा लिखन्ति—**'तत्रार्थात्मिकायां भावनायां लिङादिशब्दानां यः पुरुषं प्रति प्रयोजकव्यापारः सा द्वितीया शब्दधर्मोऽभिधात्मिका भावना विधिरित्युच्यते' इति।** ( तं, वा, पृ० ३७८ पू. सं ) अनेन स्पष्टमिदं सिध्यति-विध्यर्थः प्रवर्तना-प्रवृत्त्यनुकूलव्यापार इति।

**शाब्दीभावना**

विध्यर्थः प्रवर्तना। सैव शाब्दीभावनोच्यते। शब्दनिष्ठत्वाच्छाब्दीभावना। लोके प्रवृत्त्यनुकूलो व्यापारः—अयमत्र प्रवर्ततामिति प्रयोजकपुरुषनिष्ठः। वेदे च पुरुषाभावात् शब्दनिष्ठ एव स व्यापारः स्वीक्रियते। लोके लिङादेः पुरुषनिष्ठव्यापारत्वेनैव प्रयोगदर्शनात् तत्रैव शक्तिग्रहः, शब्दनिष्ठव्यापारवाचकतया प्रयोगाभावात् कथं शक्तिग्रह इत्याक्षेपे, लोकेऽप्यव्युत्पन्नो बालः प्रयोजकवृद्धस्य वाक्यमाकर्ण्य प्रयोज्यवृद्धस्य च प्रवृत्तिमसकृद् दृष्ट्वा नूनमनेन प्रयोजकवृद्धेन प्रयोज्यवृद्धनिष्ठप्रवृत्त्यनुकूलव्यापारः शब्देन कथित इति लिङादेः शक्तिं गृह्णाति—प्रयोज्यवृद्धप्रवृत्तिः प्रवर्तनाज्ञानजन्या, लिङादिश्रवणानन्तर भावित्वात् शिशोः रोदनानन्तरभाविमातृप्रवृत्तिवत् इति। अत्र प्रयोजकवाक्यश्रवणम्, प्रयोज्यप्रवृत्तिदर्शनञ्चासकृद्यदा बालोऽनुभवति तदा कालान्तरे लिङादेश्शब्दस्य प्रवर्त-नायामेव शक्तिरिति निश्चिनोति। यद्यपि सर्वत्र प्रवर्तनाज्ञानजन्यैव प्रवृत्तिर्न भवति, भोजनादौ तथाऽदर्शनात्। तत्र चेष्टसाधनताज्ञानेनैव प्रवृत्तिदर्शनात् प्रवर्तनाज्ञानजन्य-त्वस्याभावात् व्यभिचारः, तथापीष्टसाधनताज्ञानाभावेऽपि राज्ञा सेनापतिना वा प्रेरितः राजप्रेरितः सेनापतिप्रेरितो वा कार्यं करोमीति व्यवहारदर्शनात् प्रेरणोत्तरजायमान-प्रवृत्तिं प्रति प्रेरणाज्ञानमेव कारणमुचितम्। तच्च प्रवर्तनाज्ञानमन्वयव्यतिरेकाभ्यां प्रयोजकलिङादिघटितवाक्यजन्यमिति व्युत्पित्सुर्बालोऽध्यवस्यति। यत्र चेष्टसाधनता ज्ञानपुरस्सरं प्रवर्तते तत्रापि प्रवर्तकवाक्यस्यार्थं बुध्वैव प्रवर्तत इत्यङ्गीकर्तव्यम्। अर्थश्च प्रवृत्त्यनुकूलो व्यापारः। तं बुध्वाऽनन्तरमेवेष्टसाधनं वाऽनिष्टसाधनं वेत्यालोचनीयम्।

एतादृशस्सन्देहो नूनं लौकिकवाक्येषु कदाचित् भवेत्, वैदिकवाक्येषु च न तस्यावसरः; पुरुषसम्बन्धाभावात्। वेदवाक्यानि पुरुषाभिलषितानि तानि तानि फलान्युल्लिख्य तत्साधनतया विविधानि कर्माणि विदधति। एवं प्रवृत्तानां वेदवाक्यानां पुरुषप्रवृत्त्यनुकूल व्यापारबोधनमेव कार्यम्। प्रवृत्त्यनुकूलव्यापार एव प्रवर्तना। स च व्यापारो लिङादिनैव बोध्यते। तस्माल्लिङादीनां प्रवर्तनायां शक्तिः।

प्रवर्तनैव शाब्दी भावना। तस्याः साध्यम् साधनम् इतिकर्तव्यतेत्याकाङ्क्षात्रयं जायते। तत्र प्रवृत्त्यनुकूलव्यापारेण प्रवृत्तिरेव साध्यत इति प्रवृत्तिरेव साध्यत्वेनान्वेति। प्रवृत्तिरेव चार्थीभावना। साधनाकाङ्क्षायां लिङादिज्ञानं साधनत्वेनान्वेति, लिङादिज्ञान वत एव प्रवृत्तिदर्शनात्। अतः शाब्दीभावनाभाव्यार्थीभावनानिर्वर्तकत्वरूपमेव करणत्वमभिप्रेतम्, न तु शाब्दीभावनोत्पादकत्वरूपम्। इतिकर्तव्यताकाङ्क्षायाम् अर्थवादलक्षित प्राशस्त्यज्ञानमन्वेति। तथा च प्रवृत्तिभाव्यका लिङादिज्ञानकरणिका प्राशस्त्यज्ञानेतिकर्तव्यताका शाब्दीभावनेति वाक्यार्थः पर्यवस्यति।

### विधिविभागः

स च विधिश्चतुर्विधः—उत्पत्ति-विनियोग-पयोगा-धिकारभेदात्। तत्र प्रमाणान्तरानवगतकर्मावबोधको विधिरुत्पत्तिविधिः। अङ्गाङ्गिभावसम्बन्धबोधको विधिर्विनियोगविधिः। साङ्गकर्मानुष्ठापको विधिः प्रयोगविधिः। कर्मजन्यफलभोक्तृत्वबोधको विधिरधिकारविधिः। एतन्निरूपणपरमेव पूर्वमध्यायषट्कम्। अत्रोत्पत्तिविनियोगविधिष्वेवापूर्वविधिः नियमविधिः परिसङ्ख्याविधिश्चेति विधित्रयमन्तर्भवति। एतेषामुत्पत्त्यादि विधीनामेकस्मिन् वाक्ये साङ्कर्येऽपि तद् दोषाय न परिगण्यते। प्रायेणाधिकारविधिवाक्येषु विधीनां साङ्कर्यं भवत्येव। 'अग्निहोत्रं जुहोति' इत्यत्र मानान्तरानवगतहोमस्य विधायकत्वेनोत्पत्तिविधित्वम्। 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यत्राधिकारविधौ रागतः प्राप्तस्य फलस्याविधेयत्वात् होम एव फलसाधनत्वेन विधेयः-अग्निहोत्रहोमेन फलं भावयेदिति। एवञ्च यागस्वर्गयोः साध्यसाथनरूपाङ्गाङ्गिभावोऽपि बोध्यत इति विनियोगविधिः, मानान्तरानवगतत्वात् यागस्वर्गयोस्साध्यसाधनभावस्य बोधकत्वेनोत्पत्तिविधिः, कर्मजन्यफलभोक्तृत्वबोधकत्वेनाधिकारविघिरिति विधित्रयस्य साङ्कर्यं विद्यते। क्वचिदुत्पत्तिविधावेव विनियोगोऽधिकारश्चाङ्गीकर्तव्यो भवति। यथा—'उद्भिदा यजेत पशुकाम इति। क्वचिदुत्पत्तिविधौ विनियोगोऽपि स्वीकर्तव्यः। यथा—'सोमेन यजेत' इति। यद्यप्यत्र श्रूयमाणो विधिः यागमेव मानान्तरानवगतं विधत्ते, तथापि विशिष्टविधिस्थले विशेषणस्यापि विधानमावश्यकमिति श्रूयमाणविधेरन्यत्र व्यापृतत्वेनार्थिको विधिः कल्पनीयो भवति-सोमेन यागमिति। अतोऽत्र विनियोगोऽपि विद्यत इति विधिद्वयम्। विशिष्ट-

विधिस्थलेऽयं क्रमः—आख्यातोपात्तार्थीभावनायां प्रधानान्वयस्याभ्यर्हितत्वात् सोमयागयोरन्वये जाते विधिः समानपदोपात्तं यागं विधेयत्वेन गृह्णाति, सन्निहितत्वात्—यागेन भावयेदिति। सोमपदस्य द्रव्यवाचित्वेन क्रियानाविष्टस्य द्रव्यस्य यागावरुद्धायां भावनायामन्वयायोगात् सोमविशिष्टस्यान्वयं विधिरनुमन्यते। ततो विशेषणसम्बन्धेन विना विशिष्टत्वायोगात् यागोद्देशेन सोमविधिः। अतः श्रुतविधौ भावनान्वयनिर्वाहार्थं मत्वर्थो लक्ष्यत इति।

### वाक्यार्थः

पदजन्यपदार्थज्ञानात् तत्संसर्गो वाक्यार्थः। वृत्या पदजन्यपदार्थस्यैव शब्दबोधे भानमिति नियमात् संसर्गस्यापि शाब्दबोधे भानाय लक्षणावृत्तिः स्वीक्रियते भाट्टैः, न च शब्दतात्पर्यविषयत्वात्संसर्गस्य शाब्दत्वं वक्तुं शक्यम्, तात्पर्येण तस्य भानस्वीकारे 'पिधेहि' इत्यत्र शब्दाध्याहारस्य गङ्गायां घोष इत्यत्र लक्षणायाश्चोच्छेदापत्तेः। तात्पर्यञ्च न वृत्तिः, किन्तु लक्षणाहेतुः। अतस्संसर्गे लक्षणैव। सा च लक्षणा पद इव वाक्येऽपि साध्वी। अन्यथा 'जातपुत्रः कृष्णकेशोऽग्नोनादधीत' इत्यत्र प्राप्ताधानोद्देशेन जातपुत्रत्व कृष्णकेशत्वयोर्विधाने वाक्यभेदापत्तेः पदद्वयेनावस्थाविशेषे लक्षणा न स्यात्। विना लक्षणया वाक्यभेदपरिहारो न स्यात्। अतस्संसर्गस्य लक्षणयोपस्थितस्य शाब्दबोधे भानमिति भट्टपादाः। तदुक्तं वार्तिके—

'भावनैव च वाक्यार्थः स्वकारकविशेषिता' इति। एतेन भावनामुख्यविशेष्यक शाब्दबोधो भाट्टानामिति सिध्यति।

### प्रामाण्यवादः

भाट्टमते सर्वं ज्ञानं स्वतः प्रमाणम्। विषयस्य याथार्थ्यमेव प्रामाण्यम्। या सामग्री ज्ञानोत्पादिका सैव प्रामाण्यमपि गृह्णाति। प्रामाण्यग्रहणाय कारणगुणज्ञानस्य संवादज्ञानस्यार्थक्रियाज्ञानस्य वा नापेक्षा, येन परतः प्रामाण्यं सिध्येत्। तथा सति तेषामपि ज्ञानानां प्रामाण्यग्रहणाय ज्ञानान्तरमित्यनवस्था स्यात्। यदि च कारणगुण ज्ञानस्य संवादज्ञानस्यार्थं क्रियाज्ञानस्य वा स्वतः प्रामाण्यमित्यङ्गीक्रियते तर्हि प्रथम ज्ञानेन किमपराद्धम्। ज्ञानानां स्वतः प्रामाण्यसाधनेन वेदानां प्रामाण्यं साधितं भवति।

### ख्यातिवादः

यथार्थानुभव उक्तः। अयथार्थानुभवः संशयतर्कविपर्ययभेदेन त्रिविधः। एकत्रानेककोटिकं ज्ञानं संशयः। यथा स्थाणुर्वा पुरुषो वेति। संशयश्च निश्चयविरोधी, निश्चयस्यैकमात्रकोटिकज्ञानत्वात्। व्याप्यारोपे व्यापकारोपस्तर्कः। वन्ह्यभावस्य व्याप्यस्या

रोपे धूमाभावस्य व्यापकस्यारोपः। व्यापकस्य धूमाभावस्य प्रतियोगिनि धूमे सति न सम्भवतीच्छाजन्यत्वादाहार्यस्य। विशेष्यावृत्तिप्रकारकं ज्ञानं विपर्ययः। अयमेव भ्रमः। शुक्तौ इदं रजतमिति विशिष्टज्ञानमिदम्। अत्र रजतांशेऽन्यत्र ज्ञातस्य रजतस्य स्मृत्योपनीतस्य भानमित्यन्यथाख्यातिः। 'इदं रजत' मित्येकमिदं ज्ञानं ज्ञानलक्षणाप्रत्यात्तिमनङ्गीकृत्य द्व्याकारमित्यन्यथाख्यातिमुपपादयन्ति भट्टपादाः। स्मृतित्वानुभवत्वयोस्साङ्कार्यं दोष इति नाभ्युपगच्छन्ति।

रूपरसादिगुणानां स्वरूपविचारावसरे बुद्धेर्विचारप्रसङ्गे प्रसक्तानुप्रसक्ततया प्राप्तं विचारं समाप्य सुखादीनामवशिष्टानां गुणानां स्वरूपमुच्यते। सुखं प्रीतिः। सुखञ्च वैषयिकमनित्यम् मुक्तौ तु नित्यम्। दुःखं पीडा। इच्छामीति प्रत्ययवेद्या इच्छा, सा च ज्ञानजन्या। पाकेऽहं प्रयते इति प्रत्ययवेद्यः प्रयत्नः। स च करोतिवेद्यः सकर्मकः। स एव भावना क्रियेति चोच्यते। धर्माधर्मौ विहितनिषिद्धक्रियाजन्यादृष्टरूपौ सुखदुःखहेतू। संस्कारस्त्रिधा-वेगो भावना स्थितिस्थापकश्चेति।

**कर्म**

चलतीति प्रत्ययहेतुः कर्म। तच्च पूर्वदेशसंयोगनाशोत्तरदेशसंयोगहेतुः। भाट्टमते कर्म नित्यं प्रत्यक्षञ्च। अत्रेयमुपपत्तिः—शब्दनित्यत्वसाधनावसरे भाष्यकृतः 'स एवायं गकारः' इति प्रत्यभिज्ञामूलकतया शब्दस्य नित्यत्वं साधयन्ति। प्रत्यभिज्ञया शब्दस्य नित्यत्वं यदि साध्यते तर्हि कश्चन शङ्कते—**'स्यादेतत्! बुद्धिकर्मणी अपि ते प्रत्यभिज्ञायेते। ते अपि नित्ये प्राप्नुतः'** इति। भाष्यकृतः समादधते—**'नैष दोषः, न हि ते प्रत्यक्षे। अथ प्रत्यक्षे नित्ये एव'** इति। ज्ञानरूपाया बुद्धेश्चाप्रत्यक्षत्वं शून्यवादे साधितम्। कर्मणोऽप्रत्यक्षत्वन्तु परमाण्वाश्रितकर्माभिप्रायेण। बुद्धिशब्देनात्र चैतन्यस्वभावः प्रमातैव विवक्षितः। स च प्रत्यक्षो नित्यश्च। एवं प्रत्यक्षद्रव्यवर्तिनीनां तु क्रियाणां शब्दवदेव प्रत्यक्षत्वं नित्यत्वञ्चेष्टमेवेति विपक्षत्वाभावान्न व्यभिचार इति समाधानभाष्यस्याशयः। भाष्यमिदं विवृण्वाना भट्टपादाः—

'अप्रत्यक्षेति बुद्धिश्च शून्यवादे निरूपिता॥
प्रत्यक्षद्रव्यवर्तिन्यो दृश्यन्ते याः पुनः क्रियाः।
तासां वर्णवदेवेष्टं नित्यत्वं प्रत्यभिज्ञया'॥ इति।

( श्लोक वा० शब्दनि ३९४, ३९५ )

अनेन सन्दर्भेणेदं निर्गलितं यत् भट्टपादानां मते कर्म नित्यं प्रत्यक्षञ्चेति। कर्मण उत्क्षेपणापक्षेपणादयो विभागा भट्टमतावलम्बिभिर्नेष्यन्ते॥

## सामान्यम्

सामान्यमनुगतप्रत्ययहेतु । तत् त्रिविधम्—परमपरं परापरञ्चेति । सत्ता सामान्यं परम्, घटत्वपटत्वाद्यपरं सामान्यम्, द्रव्यत्वादि परापरसामान्यम् । अपोहवादेऽपोहनिरासेन साधितमिदं भट्टपादैः । क्वचिज्जातिसङ्कर्येऽप्युपाधिसाङ्कर्यवन्न दोषः ।

## शक्तिः

शक्तिरतिरिक्तः पदार्थो भाट्टानाम् । यथा शब्देष्वर्थावबोधकत्वसामर्थ्यम्—शक्तिरस्ति, तथा सर्वेषु भावपदार्थेष्वपि विलक्षणं किञ्चित्किञ्चित् सामर्थ्यमस्ति । शब्दगतसामर्थ्यमेव विनियोगविधौ प्रमाणत्वेन स्वीकृतं मीमांसकैः । तदेव लिङ्गपदेन व्यवह्रियते । अर्थगतं सामर्थ्यमादायैव 'हस्तेनावद्यति' 'स्रुवेणावद्यति' 'स्वधितिनावद्यति' इत्यादावववदानसाधनद्रव्यनिर्णयः कृतः सामर्थ्याधिकरणे । अनेन 'आख्यातानामर्थं ब्रुवतां शक्तिस्सहकारिणी' इति न्यायस्सिध्यति । तत्तदधिकरणसिद्धन्यायाः पदार्थनिर्णयायोपयुज्यन्त इति मीमांसकानां पन्थाः । इमं पन्थानमवलम्ब्यैव वन्हेर्दाहकत्वं वा वन्हिनिष्ठ शक्तेर्दाहकत्वं वेति विचारः प्रवर्तनीयः । वन्हिश्च कदाचिद्दहति कदाचिच्च मणिमन्त्रौषधिसमवधाने न दहति इति प्रत्यक्षमनुभवामः । मण्यादिसमवधानदशायां वन्हिरस्ति, न दहति । तदपसारणे दहति । एवञ्च मण्यादेर्वन्हिनिष्ठदाहकत्वसामग्रीविघटनद्वारा प्रतिबन्धकत्वमिति सिध्यति । अत्र कार्यमात्रं प्रति साधनान्तरैस्सह प्रतिबन्धकसंसर्गाभावस्य कारणत्वात् तादृशकारणविघटकत्वेन मण्यादेः प्रतिबन्धकत्वं स्वीक्रियताम्, मण्यादेः प्रतिबन्धकत्वोपपत्तये किमिति शक्तिः स्वीकार्येति शङ्का भवितुमर्हति, किन्तूत्तेजके सति प्रतिवन्धकमणेस्सत्वे कथं दाहोऽनुभूयते ? प्रतिबन्धकासंसर्गाभावरूपकारणस्याभावात् । तत्र वक्तव्यं भवति—उत्तेजकाभावविशिष्टं यत्प्रतिबन्धकं तदभावस्य कारणत्वमिति । तत्र विशिष्टाभावः विशेष्याभावप्रयुक्तः विशेषणाभावप्रयुक्तः विशेष्यविशेषणोभयाभावप्रयुक्त इति त्रिविधः । एतादृशविशिष्टाभावस्य कारणत्वे परस्परं व्यभिचारः । तदर्थं विशिष्टाभावस्याप्यवच्छेदकभेदेन त्रितयातिरिक्तत्वं स्वीकर्तव्यम् । तदपेक्षया दाहं प्रति वन्हिनिष्ठशक्तेः कारणत्वकल्पने लाघवं भवति । किञ्च घटं प्रति तन्तूनां पटं प्रति च मृत्तिकायाः कारणता भवत्विति प्रश्नस्य समाधानम्—अदृष्टाभावादिति वक्तव्यम् । अदृष्टमार्गे प्रविशतां शक्तिद्वेषः कुतः ? यथाऽदृष्टं कार्यमात्रं प्रति क्लृप्तं कारणं तथैव शक्तिरपि क्लृप्तैव । तथाहि—सर्वाण्यङ्गान्यपूर्वप्रयुक्तानीति साप्तमिको नावमिकश्च मीमांसान्यायः । 'व्रीहीन् प्रोक्षति' इति विधीयमानं प्रोक्षणं केवलं व्रीहिप्राप्तये न क्रियते, विना.प प्रोक्षणेन व्रीहिप्राप्तिसम्भवात् । प्रोक्षणमिदं जलसंयोगमात्रेण न चरितार्थम्, किन्त्वदृष्टाश्रयत्वं व्रीहीणां सम्पादनीयम् । तदर्थं समन्त्रकं प्रोक्षणं क्रियते । तेन य.गीयव्रीहित्वेन व्रीहीणामुद्देश्यता,

न तु व्रीहित्वमात्रेण। ततश्च व्रीहिद्वारा प्रोक्षणस्य यागार्थत्वं सिध्यति। यागार्थत्वञ्च यागजन्यापूर्वोपकारकत्वम्। उपकारकत्वञ्च प्रोक्षणोत्पवनादीनां स्वस्वापूर्वद्वारा। तथा च प्रोक्षणोत्पवनादीनामनुष्ठापकं तत्तत्क्रियाजन्यमपूर्वमिति सिध्यति। क्वचित्तु प्रधानयाग जन्यमेवापूर्वमङ्गानां प्रयोजकमिति सिद्धा शक्तिः। सा च त्रिविधा सहजा आधेया पद-निष्ठा चेति।

### मोक्षविचारः

एवं विदितपदार्थतत्त्वो नित्यानित्यवस्तुविवेकशमदमवैराग्यभक्तिसम्पन्नो नियमेन नित्यकर्माण्याचरन् काम्यानि च परित्यजन् 'यो वै भूमा तत्सुखम्' इत्यादिश्रुतिभ्यो मोक्षस्य पुरुषार्थत्वमाकलय्य योगाभ्यासेन सगुणब्रह्मोपासनयाऽध्यक्षीकृतब्रह्मतत्त्वः परे ब्रह्मणि लीयते।

अत्रायं विषयविमर्शः—'स्वाध्यायोऽध्येतव्यः' इति विधिः सकलस्य वेदस्याध्ययन-कर्तव्यतां बोधयन् सकलो वेदः प्रयोजनवदर्थपर्यवसीति प्रतिपादयति। वेदवाक्यार्थनिर्ण-याय पूर्वमुत्तरमिति मीमांसाद्वयं प्रवृत्तम्। तत्र जैमिनिः कर्मकाण्डसम्बन्धीनि वेदवाक्यानि विचारयति, बादरिश्च वेदान्तसम्बन्धीनि वाक्यानि विचारयति। तत्रोभावपि स्वस्वसूत्र-ग्रन्थे स्वनाम्ना सहापरस्यापि नाम निर्दिशतः। तेनेदं निश्चेतव्यं भवति—यदुभावपि पूर्व-मुत्तरञ्च तन्त्रं परिशीलयत इति। तृतीयाध्यायारम्भे जैमिनिः 'परार्थश्शेषः' इति सूत्रेण पारार्थ्यं शेषलक्षणमभिधाय तदुत्तराधिकरणे लक्षणस्य लक्ष्याणि मतभेदेन दर्शयति—'द्रव्य-गुण-संस्कारेषु बादरिः' इति बादरिमतेन द्रव्यगुणसंस्काराणामङ्गत्वं स्वमतेन 'कर्माण्यपि जैमिनिः फलार्थत्वात्' 'फलञ्च पुरुषार्थत्वात्' 'पुरुषश्च कर्मार्थत्वात्' इति सूत्र-त्रयेण कर्म-फल-पुरुषाणामपि द्रव्य-गुण-संस्कारैस्सहाङ्गत्वमिति। अनेन ज्ञायते—यद् बादरे-र्मते कर्म–फल–पुरुषाणामङ्गात्वं नास्ति, स्वमते च 'कर्माण्यपि' इत्यपिशब्दनिर्देशेन द्रव्य-गुण–स्वंस्काराणामप्यङ्गत्वमस्तोति। महर्षेजैमिनेराशयः—तत्तत्स्वर्गपशुपुत्रादिफलाय कर्मणां दर्शपूर्णमासादीनां विहितत्वात्कर्माण्यङ्गानि भवन्ति, फलानां च पुरुषार्थत्वेन निर्दिष्टत्वात् तच्छेषत्वम्, कर्मानुष्ठानाय कर्तृत्वेन निर्दिष्टत्वात् पुरुषाणामङ्गत्वमिति। महर्षेर्बादरेर्मते तु पुरुषार्थत्वेन मोक्षस्यैव स्वीकृतत्वात्, तस्य च साध्यत्वाभावेन साधना-पेक्षाभावात् कर्मफलपुरुषाणां शेषत्वाभ्युपगमोऽनावश्यकः, विदेहकैवल्याय जीवन्मुक्तये वा द्रव्य–गुण–संस्कारणामावश्यकतेति तत्र शेषत्वाभ्युपगम आवश्यकः। प्रारब्धवशेन यच्छ-रीरमवाप्तं तत्र प्रविष्टस्यात्मनः संस्कारैः शमदमवैराग्यादिगुणाधानमावश्यकमिति द्रव्य-गुण-संस्काराणामङ्गतेति।

तत्र किमिदं जगत् ? कस्मादिदं प्रावर्तिष्ट ? अस्माकं तत्र कस्सम्बन्धः ? इत्यादिकं विविच्य निर्णेतुं प्रवृत्तौ द्वावपि महर्षी । तयोरुभयोः वेद एव मूलं निर्णयाय । प्रवृत्तिमार्गमवलम्ब्य जैमिनिः निवृत्तिमार्गञ्चाश्रित्य बादरिः प्रवृत्तौ । मार्गयोरुभयोः प्रतिपादनं वेदे समुपलभ्यते । अत्रान्यतरस्याप्रामाण्यमुभयोरपि नाभिमतम् । उभावपि महर्षी मिथस्सङ्गतौ अहं पवृत्तिमार्गमवलम्ब्य गच्छामि इति जैमिनिः, त्वं निवृत्तिमार्गमाश्रित्य गच्छेः इति सम्भाष्य सूत्रप्रणयने प्रवृत्ताविवेति । अतएव क्वचिन्मतभेदे विद्यमानेऽपि द्वयोः खण्डने मण्डने वा न तात्पर्यं कल्पनीयम् । समन्वयदृष्ट्यैव पूर्वोत्तरमामांसे नेतव्ये । तत्र ज्ञानेन मुक्तिरिति बादरिः, कर्मणा मुक्तिरिति जैमिनिः । ज्ञानञ्च संसारान्मोचकम्, कर्म च संसारसम्बन्धकम् इत्यनयोर्विरोधः । एवं जगन्मिथ्येति बादरिः, तच्च सत्यमिति जैमिनिः । मिथ्यासत्ययोर्विरोधः । एवमादीनां विरोधानां समन्वयदृष्ट्या परिहारे कृते उभयोर्दर्शनयोरुपादेयत्वं सिध्यतीति परवर्तिनो ग्रन्थकृतो भट्टपादमण्डनमिश्रप्रभृतयो द्वारमुद्घाटितवन्तः । न केवलं द्वारमुद्घाटितवन्तः किन्तु द्वारपालरूपेणापि द्वयोः स्थितिरिति वक्तुं शक्यते । यथा हि बादरिजैमिन्योर्गुरुशिष्यभावस्सम्बन्ध इति लोकोक्तिस्तथैव भट्टपादमण्डनमिश्रयोरपि । पूर्वं पन्थानं जैमिनिः परिष्चकार उत्तरञ्च पन्थानं बादरिः । उभयोरपि पथोः कलेबरं विस्तृतवन्तो भट्टपादा मिश्राश्च, येन च विस्तृते पथि परवर्तिनस्सुखेन सञ्चरितुं क्षमा भवेयुः । मार्गो विना स्खलनेन लक्ष्यप्राप्तये निर्मीयते । क्रममवलम्ब्य यानेन पद्भ्यां वा गमनेन मिथस्सङ्घटनादेरवसरो न भवति । विस्तृतेऽपि मार्गे सङ्घट्टनं प्रमादाद्यदि जायेत तर्हि मार्गविरोधो निश्चितः ।

तत्र भट्टपादाः—

> ‘मोक्षार्थो न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
> नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया’ ॥

इति लक्ष्यप्राप्तये मार्गं निर्दिशन्ति । मोक्षार्थिनो नित्यानित्यविवेकमात्रेण कृतकृत्या न भवेयुः किन्तु स्वीयं कर्तव्यं नियमेन परिपालयेयुः । काम्यनिषिद्धे हि कर्मणी स्वस्वजन्याभ्युदयप्रत्यवायफलोपभोगाय शरीराम्भके भवतः । मोक्षार्थिना शरीरारम्भं परिहर्तुंकामेन काम्यनिषिद्धे न कर्तव्ये, नित्यनैमित्तिके पुनः जन्मजन्मान्तरार्जितपापक्षयाय कर्तव्ये, तदैव चात्मज्ञानमात्मोपासना वा पूर्वकृतपापक्षयद्वारा मोक्षसाधनं भवितुमर्हति । ये चाभ्युदयार्थिनस्ते निषिद्धानाचरणेन नित्यानि नैमित्तिकानि चाचरन्तः काम्यान्यनुतिष्ठन्तु तत्तत्फलभोक्तारश्च भवन्तु । एतादृशा अपि लोका जगति भवेयुः ये पुनः पुनर्जनित्वा विविधानि फलानि भोक्तुमभीप्समानाः । एवं ये च सर्वथा मुक्तिमेव कामयन्ते तेषामपि मार्गः प्रशस्तो भवत्वित्यभिप्रयन्ति । एवं तात्पर्यमत्रोन्नेतुं शक्यते-यत् प्रारब्धम्, सञ्चितम्

आगामि इति पात्रत्रयं कल्पयित्वा 'हेयं दुःखमनागतम्' इति न्यायेनागामिपात्रं रिक्तमेव यथा स्यात्तथा यत्नः कर्तव्यो मानवेन। तदर्थं काम्यानि कर्माणि सर्वथा परित्यजन् नित्य-नैमित्तिकानामपरित्यागेन यथावदाचरन् पापनिराकरणाय विहितानि पवित्रेष्टि-कूष्माण्ड-होमादीनि श्रौतस्मार्तकर्माण्यनुतिष्ठन् प्रारब्धस्योपभोगेन सञ्चितस्य च प्रविलापेन पात्रत्रयं रिक्तं यथा स्यात्तथा मानवः कर्तुं शक्नोति। इममेव पन्थानमवलम्ब्य पार्थसारथिमिश्रः 'प्रपञ्चसम्बन्धविलयो मोक्षः' इत्यङ्गीचकार। जीवस्य प्रपञ्चसम्बन्धश्च-प्रपञ्चेजननम्। जननञ्च सशरीरं भवति। तदारम्भकं काम्यं निषिद्धञ्च कर्म। काम्यनिषिद्धयोः परि-हारे सति शरीरारम्भकं किमपि नास्तीति मुक्तिरिति मिश्रस्याशयः। 'मोक्षार्थी न प्रव-र्तेत' इति भट्टपादवार्तिकद्वाराऽऽपाततोऽयमेवाशयः प्रतिभाति, किन्तु भट्टपादाः समन्वा: यपक्ष- पातिनः वेदबाह्यानि दर्शनानि खण्डयन्तोऽप्यन्ते 'उपनिषदर्थवादप्रभवत्वं' तेषां समर्थयन्तः कथमिव वेदान्तभागमनास्थया परिगणयेयुः ? आत्मवादान्ते च—

दृढत्वमेमद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन' इति कथं वदेयुः ? अतो भट्टपाद-समन्वयदृष्ट्याऽत्रापि समन्वये यतितव्यम्। काम्यनिषिद्धे कर्मणी शरीरारम्भके, प्रत्यवाय-जिहासया नित्यनैमित्तिकेऽनुष्ठातव्ये इत्युभयमुभयेषां समानम्। सञ्चितकर्मणां प्रविलापः कर्मणा उतात्मज्ञानेनेत्येव विवादः। तत्र पूर्वं तन्त्रं कर्म प्रतिपादयति उत्तरञ्च तन्त्रं ज्ञानम्। उत्तरतन्त्रेण प्रतिपाद्यमानं ज्ञानमात्मैकत्वज्ञानं स्वस्वरूपज्ञानं वा। देहेन्द्रियाद्यात्मवादिनां मतमुभयेषां नाभिमतम्। देहेन्द्रियाद्यतिरिक्त आत्मा चोभयसम्मतः। व्यावहारिकदशा पारमार्थिकदशा चेति दशाविशेषो भिन्नः। पारमार्थिकदशायां जगदिदं बाधितं भवतीति जगन्मिथ्या उत्तरतन्त्रे। पूर्वतन्त्रे च व्यावहारिकत्वसिद्धये जगत्सत्यं नित्यञ्च। तत्र पार-मार्थिकदशायां भट्टपादानामनास्थेति वक्तुं न शक्यते यतो हि 'दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन' इति कीर्तयन्ति। व्यावहारिकसत्यत्वं जगत उत्तरतन्त्रावल-म्बिभिरपि स्वीक्रियत एव। तस्मादेवं प्रतिभाति—यत्पक्षद्वयं समुच्चित्य नेतव्यमिति। समुच्चयश्च ज्ञानकर्मणोः। उपनिषत्सु कर्मणां मुक्तिसाधकत्वेन बाधकत्वेन च वाक्यान्युलभ्यन्ते। एवं कर्मनिरपेक्षेण ज्ञानेनैव मुक्तिरिति प्रतिपादकानि च वाक्यान्युप-लभ्यन्ते। तत्रेदं निश्चेतव्यम्-यत् कर्म यदि त्यजेम, नूनमधः पतेम अकरणे प्रत्यवाय-ग्रासात्। यद्याचरेम काम्यानि, न कदापि भवं तरेम, फलोपभोगाय शरीरारम्भकत्वात्। कर्माणि त्यजेदिति चरेदिति च वेदवाक्यानि प्रवृत्तानि। किमत्र विधेयम् इति महत्सङ्कट-मापतितम्। अत्रैव विवेकोपयोगस्यावसरः। बादरिजैमिन्यभिमतयोः पक्षयोरन्यतरस्य न द्रागप्रामाण्यं वक्तुं शक्यम्, पक्षद्वयस्यापि श्रुतिप्रतिपाद्यत्वात्। श्रुतिषु ईदृशानि स्थला-नि भूरिश उपलभ्यन्ते। तेषां समन्वयाय प्रेक्षावता यतितव्यम्। तदर्थं संयम आवश्यकः। अत्र शाखान्तराधिकरणन्यायोऽवलम्बनीयः। वेदशाखा भिन्नाः तच्छाखिनश्च परम्पराप्राप्ता

भिन्नाः । तत्र यथा तत्तच्छाखिनः स्वस्वशाखोक्तप्रकारेण कर्माण्यनुतिष्ठन्तः शाखान्तरगतं प्रकारं हेयत्वेन वाऽप्रमाणत्वेन वा न गृह्णीयुरिति व्यवस्था, तथैवात्रापि व्यवस्था भवितुमर्हति । प्रवृत्तिमार्गावलम्बिनस्तेनैव पथा गच्छन्तु, निवृत्तिमार्गावलम्बिनः स्वपथा निर्यान्तु । यदा स्वीयं मार्गं विहाय मार्गान्तरावलम्बो भवेत् तदेव विप्लवः । एकस्य मार्गेऽन्येनावरोधो न कर्तव्यः । तदेव निन्दायाः कलहस्य च प्रसरः । उभावपि मार्गौ स्वस्वसम्प्रदायेन समागतौ । सम्प्रदायश्च—अनवच्छिन्नगुरुशिष्यपारम्पर्येण विद्याप्राप्तिः । परम्परासंरक्षणं बुद्धिमतां कार्यम् । तच्च भट्टपादैः भगवत्पादैश्च संरक्ष्यते ।

'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया' ॥

दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन' इत्यादिषु भट्टपादीयवचनेषु,

'तदुदितं कर्म स्वनुष्ठीयताम्' 'काम्ये मतिस्त्यज्यताम्' 'दृढतरं कर्माशु सन्त्यज्यताम्' 'अहरहर्गर्वः परित्यज्यताम्' 'जनकृपानैष्ठुर्यमुत्सृज्यताम्' 'प्राक्कर्म प्रविलाप्यताम्' इत्यादिषु भगवत्पादीयोपदेशवचनेषु पर्यालोच्यमानेषु एकः पक्षः पक्षान्तरस्य पूरक इत्येव प्रतिभाति । अतः पक्षद्वयपरिग्रहादृते नापरः कश्चन मार्गः श्रुतिषु परिदृश्यमानविरोध परिहाराय दृश्यत इति मुक्तये ज्ञानकर्मसमुच्चयो भट्टपादानामभिमत इति सिध्यति । पारमार्थिकव्यावहारिकपक्षसाधनं पृथक्पृथग्यत्नसाध्यम् । तत्रोभयोरुभयत्र न्यूनतावबोधकानि भवेयुर्वचनानि । तथापि तेषां वचनानां स्वस्वपक्षस्तुतावेव तात्पर्यं कल्पनीयम्, न तु पक्षद्वयस्यापि त्यागे । उदितहोमं विधायानुदितहोमं निन्दति, एवमनुदितहोमं विधायोदितहोमं निन्दतीति अग्निहोत्रमेव न परित्यजामः, तथा सत्स्वपि न्युनतावबोधक वचनेषु न पक्षद्वयं परित्यजामः । यथोदितानुदितहोमयोः सम्प्रदायो व्यवस्थापकः तथैवात्रापि । प्रपञ्चमङ्गीकृत्य तत्सम्बन्धपरित्यागोपायावलम्बनेन मुक्तिरवाप्यताम् अथवा 'पूर्णात्मा सुविभाव्यतां जगदिदं तद्बाधितं दृश्यताम्' इति भगवत्पादोपदेशदिशा ज्ञानेन जगद्बाधितं विभाव्य मुक्तिरवाप्यताम् । फलत उभयोरेकरूपत्वमेव सिध्यति । मुक्त्यवस्थाया सुखरूपत्वं वा दुःखाभावरूपत्वं वेति विवेको न भट्टपादैः कृतः नापि शबरस्वामिभिः, किन्तु तत्सिद्धिपेटिकान्तर्गतभूमाधिकरणन्यायेन वा भूयोऽधिकरणन्यायेन वा सुखरूपत्वे भूयसां वाक्यानामुपलम्भात् सुखरूपत्वमेव पूर्वतन्त्राभिमतं ,वक्तुं शक्यते । इदमेवाभिप्रेत्योक्तम्—'प्रयाति वेदान्तनिषेवणेन' इति भट्टपादैः ।

तत्र ज्ञानकर्मसमुच्चयः किमङ्गाङ्गिभावेन ? उत समप्राधान्येन ? इति संशये व्याकरणाधिकरणतन्त्रवार्तिकग्रन्थेन भट्टपादानां समप्राधान्येनैव समुच्चयोऽभिमत इति प्रतीयते । तथाहि तत्रत्यो ग्रन्थः—

'न च ज्ञानविधानेन कर्मसम्बन्धवारणम्'

'प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वकृतदुरितक्षयार्थमकरण-निमित्तानागतप्रत्यवायपरिहारार्थञ्च कर्तव्यानि, न च तेषां भिन्नप्रयोजनत्वाद् भिन्नमार्गत्वाच्च बाधविकल्पपरस्पराङ्गाङ्गिभावास्सम्भवन्ति' इति। ( तं. वा. २८८ पू० सं)

ग्रन्थसन्दर्भस्येदं तात्पर्यम्—निषिद्धकर्मणामनाचरणेन विहितनित्यनैमित्तिकानामचरणेन च तेषां कर्मणां चित्तशुद्धिमात्रहेतुत्वं न, किन्तु ज्ञानसाधनत्वमपि संयोग-पृथक्त्वन्यायेन ( पू० मी० ४.३.३ ) सिध्यति चेत् न कोऽपि विरोधः यानि चोपनिषद्-वाक्यानि आत्मतत्त्वजिज्ञासायै उपासनायै अन्वेषण-श्रवण-मनननिदिध्यासनादिकार्याय च प्रवर्तकानि, यानि च 'स सर्वांश्च लोकाप्नोति सर्वांश्च कामानावानोति तरति शोकमात्मवित्' इत्यादीन्यभ्युदयनिःश्रेयसरूपोभयविधफलसम्बन्धबोधकानि, यानि चापुनरावृत्यात्मकपरमात्मप्राप्त्यवस्थाफलवचनानि तेषामर्थवादत्वं निराकृत्य भट्टपादाः

'न च ज्ञानविधानेन कर्मसम्बन्धवारणम्'

इत्याभिदधानाः 'प्रत्याश्रमवर्णनियतानि' इत्यादिग्रन्थसन्दर्भं लिखन्ति। अतो ज्ञानकर्मणोर्न बाध्यबाधकभावः, न विकल्पः, नाप्यङ्गाङ्गिभाव इति सिध्यति। एवञ्च मोक्षे यथा ज्ञानसम्बन्धस्तथा कर्मणोऽपि सम्बन्ध इति ज्ञानकर्मसमुच्चयो भट्टपादाना-मभिमतः।

सृष्टि प्रलयञ्चानङ्गीकृत्य जगन्नित्यत्वमङ्गीकुर्वन्तोऽपि भट्टपादा वेदान्तिमताद-भिन्नामेव मोक्षावस्थामभिप्रयन्ति। अतएव व्याकरणाधिकरणे 'स खल्वेवं वर्तयन् यावदा-युषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते' इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्था फलवचनं + + + नाञ्जन-खादिर-स्रुववाक्या-दिफलश्रुतिवदर्थवादः' इति लिखन्ति। सृष्टिप्रलयानङ्गीकारे जगन्नित्यत्वाङ्गीकारे च तेषां कारणं वेदनित्यत्वस्थापनमेव। अविच्छिन्न गुर्वध्ययन पूर्वकत्वं वेदाध्ययनस्य तदैव सिध्येत् यदा जगन्नित्यं भवेत्। पुराणेषु वर्ण्यमानं सृष्टिप्रलयादिकं खण्डसृष्टिप्रलयपरत्वेन नेतुं शक्यत इति पुराणानां प्रामण्ये न काचन विसङ्गतिः। सर्वज्ञनिराकरणञ्च वेदबाह्यनिराकरणपरम्, तन्मतनिराकरणप्रसङ्ग एव सर्वज्ञचर्चाया उत्थापितत्वात्। भट्टपादानां नानात्मवादोऽपि नायुक्तः। देहेन्द्रियादीना-मेवात्मत्वमभ्युपेयतां मतनिरासप्रसङ्गे देहेन्द्रियाद्यतिरिक्तस्यात्मनस्साधने प्रवृत्ता भट्ट-पादाः कर्तृत्वभोक्तृत्वयोरुपपत्तिर्देहेन्द्रियाद्यतिरिक्तस्यैवेति साधयन्ति। तत्र कर्मकर्तृत्वं कर्मजन्यफल भोक्तृत्वञ्चानेकेषामिति नानात्मवादो नायुक्तः।

### ईश्वरवादः

भट्टपादाः स्वीयवार्तिकादौ भगवन्तं श्रीविश्वेश्वरं नमस्कुर्वन्ति श्लेषविधया। अन्ये

सर्वे एव भाट्टमतावलम्बिनो मीमांसाग्रन्थप्रणेतारः स्वस्वाभिमतेष्टदेवतां ग्रन्थारम्भे प्रणमन्ति। अनुमानेन न साधयन्तीश्वरम्, प्रसक्त्यभावात्। वेदवाक्यार्थनिर्णयायावैदिकमतनिरासाय च प्रवृत्तानां वेदवेद्ययोर्धर्माधर्मयोः स्वरूपनिरूपणमेव प्रधानं कार्यम्। यथा हि वेदवेद्यो धर्मस्तथैवेश्वरोऽपि वेदवेद्यः। यथाहि द्रव्य–गुण–जाति–याग–होम–दानादयो धर्मास्तथैव 'अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम्' इत्यात्मदर्शनमपि धर्मः। आत्मदर्शनञ्च 'वेदान्तनिषेवणेन' इति स्पष्टं भट्टपादैरुक्तमेव। यद्यपि 'धर्मः क्षरति कीर्तनात्' इति कीर्तननाश्यत्वं धर्मस्योक्तम्, तथापि तत् दानादिधर्मपरम्, नात्मदर्शनरूप धर्मपरम्, आत्मदर्शनानन्तरं कीर्तनस्यैवाप्रसक्तेः। यागदानादिकमनुष्ठाय मानवः कीर्तयितुं शक्नोति—मयाऽयं धर्मः कृत इति। अत आत्मदर्शनरूपधर्मस्य कीर्तननाश्यत्वसम्भव एव नास्ति। तस्मादुपनिषद्भिः प्रतिपादित ईश्वरो भट्टपादानामभिमत एव, भट्टपादानामयमाशयः तन्त्रवार्तिकटीकाकर्तृभिः भट्टसोमेश्वरैः प्रकटीकृतः—

'अपि च व्योमरूपोऽपि परमात्मा श्रुतौ श्रुतः।
इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः'॥

'को ह्येवान्यात् कः प्राण्यात् य एष आकाश आनन्दो न स्यात्' 'कं ब्रह्म खं ब्रह्म' इति श्रुत्युक्तस्तत्त्वमस्यादिगम्यस्तच्छब्दार्थः स्वाधिष्ठातृसूर्यरूपी सन्ध्यायां गायत्र्या जलेनार्घ्येणार्च्यते' इति।

( न्यायसु० पृ० १०१० चौ० सं० )

एवञ्चानादिकालतः प्रवृत्तस्य वर्णाश्रमधर्मस्य वेदोदितस्य परिपालनाय कृतावताराः श्रीकुमारिलपादा निरीश्वरवादिन इति प्रवादस्सर्वथा निर्मूल इति भट्टपादमते विदितपूर्वोक्तपदार्थतत्त्वो नित्यानित्यवस्तुविवेकशमदमवैराग्यभक्तिसम्पन्नो नियमेन नित्यकर्माण्याचरन् काम्यानि च परित्यजन् 'यो वै भूमा तत्सुखम्' इत्यादि श्रुतिभ्यो मोक्षस्य पुरुषार्थत्वमाकलय्य योगाभ्यासेन सगुणब्रह्मोपासनयाऽध्यक्षीकृतब्रह्मतत्त्वः परे ब्रह्मणि लीयत इति सिद्धम्॥

